# SÂNKHYA-KÂRIKA

BY

THE GREAT SAGE ISHWAR-KRISHNA

WITH A COMMENTARY CALLED

# SÂNKHYA-TATTVA KAUMUDI

BY

SHRI VACHASPATI MISHRA

AND ANOTHER COMMENTARY CALLED

*Vidvattoshini*

BY SHRI BALRAM UDASEEN

Published by Swami Atma Swarupji
Guru-Mandal-Ashrama, Haridwar (U P)

A D 1931



# साङ्ख्यकारिका

## महामुनीश्वरकृष्णविरचिता



निखिलतन्त्रस्वतन्त्रप्रतिभश्रीमद्वाचस्पतिमिश्रविरचितया

## साङ्ख्यतत्त्वकौमुद्या

विभूषिता

श्रीगुरुमण्डल–संस्थापकाचार्यनिखिलशास्त्रनिष्णातपूज्यपाद-
स्वामिश्री १०८ बालरामोदासीनविरचिताभ्यां

## "विद्वत्तोषिणी"

व्याख्यातत्कृतटिप्पणीभ्यां समलङ्कृतया



सेयं

हरिद्वारस्थ(यू. पी )स्वाम्यात्मस्वरूपोदासीनैः

मुम्बय्यां

"गुजराती मुद्रणयन्त्रालये"

मुद्रयित्वा प्रकाशिता ।

मूल्यम्—[illegible]

शके १८५२ १९८७

# अस्यायमुपोद्घातः—

विजयते खलु सर्वविद्वज्जनमुखकमलमाध्वीकायिताऽऽस्तिकषड्दर्शनान्तर्गत वेद-शिरोलालनीय श्रीमता परमर्षिणा कपिलाचार्येण श्रीमहाविष्णोरपरावतारेण कृतं भूताना सृष्टिस्थितिलयप्रतिपादनद्वारा प्रकृतिपुरुषविवेकज्ञानसम्पादनक्षम-

"प्रधानास्तित्वमेकत्वमर्थवत्त्वमथान्यथा ।
पारार्थ्य च तथाऽऽनैक्य वियोगो योग एव च ॥
शेषवृत्तिरकर्तृत्वं मौलिकार्था· स्मृता दश ।
विपर्यय पञ्चविधस्तथोक्ता नव तुष्टय ।
करणानामसामर्थ्यमष्टाविशतिधा मतम् ।
इति षष्टिः पदार्थानामष्टभि· सह सिद्धिभि· ॥ इति—

षष्टिपदार्थप्रतिपादक साङ्ख्यशास्त्रम्—तच्च तत्र भवान् परमकारुणिको महामुनिः कपिलाचार्य सकललोकक्षेमकामनया सुरिनाम्ने मुनये स्वशिष्यायोपदिदेश। तेन च पञ्चशिखाचार्यायेत्येव शिष्यपरम्पराक्रमेण स्वेनापि सप्राप्तमतिविस्तृत दीर्घकाल-सापेक्षमतिक्लेशसाध्य चेत्यादिक पर्यालोच्य तच्छास्त्रपारदृश्वना दीनजनोद्धरणकृपा-परिपूर्णान्तरङ्गेणाधीतषष्टितन्त्रेण श्रीमतेश्वरकृष्णमहाविदुषा साङ्ख्यकारिकानामक-निबन्धेन (द्वासप्ततिकारिकात्मना) मिताक्षरेणामिताशयेन सर्वमुमुक्षुजनहार्दान्धत-मसनिर्णाशिनपटीयसा सञ्चिक्षिपे आर्यमतिना कोविदाग्रण्या ।

तत कालवशात्तदध्ययने तत्प्रवचनेऽपि क्लेशबाहुल्यं विद्वद्ह्रासादिवशात्संप्राप्त परिपश्यता मूलशास्त्रकृतो महाविष्ण्ववतारादन्येन महर्षिणा कपिलाचार्येण (१)-हेय-हानतद्धेतुव्यूहाख्यार्थचतुष्टयवत्प्रथमाध्यायः, (२)—प्रधानकार्यभूतसप्तदशात्मकलिङ्ग-देहगतवस्तुप्रकाशप्रतिपादकद्वितीयाध्याय ,(३) परवैराग्यसाधनीभूतपुरुषाविषयाव्य-क्तसम्बन्ध्यत्यन्तलयान्तकार्यप्रतिपादकतृतीयाध्याय ,(४)-प्रागुक्ताध्यायत्रितयगत-विवेकान्तरङ्गप्रतिपादकचतुर्थाध्यायः, (५)-स्वसिद्धान्तदृढीकरणसमर्थार्थप्रतिपादक-पञ्चमाध्यायः, (६)-मुख्यार्थविस्तृतिपरिशिष्टवाक्यार्थप्रतिपादकषष्ठाध्यायश्चेत्येव पञ्चविंशतितत्त्वप्रकाशनद्वारा मुमुक्षुलोकस्य हितप्राप्तयेऽहितनिवृत्तये च षडध्यायात्मक साङ्ख्यशास्त्रं निर्माय स्वशिष्यायोपदिदेश, तथा सप्तविंशतिसूत्रात्मकमपरमपि संक्षिप्तं तदिद शास्त्र यच्छ्रीमद्विद्यारण्यस्वामिभिर्व्याख्यात मुद्रितं सत्प्रकाशते इत्यन्यत् ।

तदुक्तं स्मृतिकर्तृभिर्महामुनिभि —

"एतन्मे जन्म लोकेऽस्मिन्मुमुक्षूणा दुराशयात् ॥ प्रसङ्ख्यानाय तत्त्वाना स्वमती-यात्मदर्शनम्" इति। एतेन महाविष्ण्ववतारभिन्नेनाग्न्यवतारेण कपिलाचार्येण व्यरचि, तदाह स्मृतिकृत्—"अग्निः स कपिलो नाम साङ्ख्यशास्त्रप्रवर्तकः" इति परास्तम् ।

मुन्यन्तरकल्पनाया गौरवाच्च। फलमुखगौरवस्यादोषत्व यदि ब्रूयात्तर्हि त्वद्वचनेऽग्निशब्दोऽग्न्याख्यशक्त्यावेशादेव प्रयुक्तः-यथा-"कालोऽस्मि लोकक्षयकृत्प्रवृद्धः" इति श्रीभगवद्गीताया श्रीभगवद्वाक्ये कालशब्द कालशक्त्यावेशादिति।

सेय न्यायकणिका, तत्त्वसमीक्षा, तत्त्वबिन्दुस्तथा योगतत्त्ववैशारद्याख्ययोगभाष्यटीका, श्रीमच्छाङ्करभाष्यव्याख्या भामती, उद्योतकरकृतन्यायवार्तिकतात्पर्यटीका, चेत्येव श्रीमद्वाचस्पतिमिश्रेण षड्दर्शनव्याख्यात्रा ( द्वादशदर्शनव्याख्यात्रा ) साङ्ख्यकारिका व्याख्याता।

यच्च व्याख्यान तत्त्वकौमुदीनाम्ना लोके प्रसिद्धम्।

तामेता श्रीमद्वाराणस्यादिगतपण्डितजनहृदयाह्लादिनी न सर्वजनप्रवेशसुलभा विचिन्त्य वाराणस्या काञ्चित्सभामलङ्कुर्वाणैः महामहोपाध्यायश्रीमच्छिवकुमारमिश्रमहामहोपाध्यायश्रीमद्गङ्गाधरशास्त्रि जि सि ऐ यस्प्रभृतिपण्डिताखण्डलैर्व्याख्यातु प्रोत्साहितेन सर्वतन्त्रस्वतन्त्रेण परमहसपरिव्राजकाचार्येण दिगन्तविश्रान्तशारदज्योत्स्नासदृक्षकीर्तिविशदीकृतदिगन्तरालेन निरन्तरक्षितिपतिकुलसेवासमयसमुन्मिषितपदारविन्दमध्वास्वादनप्रज्वलन्नखमयूखनिकषोल्लिखितरत्नप्रभाभासुरकिरीटसहस्रपरिशोभितभारतमण्डलेन'विद्वत्तोषिणी'नाम व्याख्या मूलव्याख्यादिषु कचित्कचिट्टिप्पणी च व्यरचि। येय व्याख्या केवल लोकोपकारद्वारा भगवत्प्रीत्यै लिखितुमारब्धाप्यतिप्रबलविघ्नव्यूहेन साङ्ख्यतत्त्वकौमुद्यास्त्रयस्त्रिंशत्तमश्लोकव्याख्यासम्बन्धिनोः "अन्तर्गडुना कालेन" इत्येतत्पदयोर्व्याख्योत्तर "केचित्तु क्षणस्तु वस्तुपतित इत्युत्तरभाष्यानुरोधात्क्ष"इत्यन्तैवासीन्न तदूर्ध्वम्। यत —

'हा हाऽयं गुरुमण्डलस्य पुरतस्तत्पादपद्माम्बुजद्वद्व चिन्तयतो विहाय बत कैवल्य विदेह गतः। कालेऽस्मिन् गुरुकुम्भयोगमहिते क्षेत्रे प्रयागे निशि त्वङ्काङ्के हि शके हराहय ( १८२८ ) मिते शुक्रे तपस्येऽसिते॥ १॥

---

तदैतज्जन्मादिचरितमुखेन स्पष्टीकृत श्रीपाण्डेयश्रीकान्तशर्मभिर्विद्वद्भिः मित्रगोष्ठीपत्रिकानाम्नि मासिकसस्कृतपत्रे। तथाहि—

"आसीन्निखिलशास्त्रपारावारपारदृश्वा विश्वविश्रुतयशोराशिर्विषयभीषणाशीविषदष्टमानुषजनविषवैद्यो ह्यानवद्यगुणरत्नाकरोऽश्रान्तोपस्थितमहीपतिगणाहम्पूर्विकाप्रणतमूर्धतिरोहितचरणारविन्द उदासीनो महात्मा स्वामिश्रीबालरामो नाम। अयं खलु क्रमशः—

पितुः प्रिय प्राप्तसमग्रसस्कृतिः कृती जनानन्दकरः स्वभावतः।
प्रभावशाली धिषणाप्रकर्षत' प्रवीणता वर्णगणेऽधिजग्मिवान्॥ १॥
अत्यल्पकालात्सकलान्यधीत्य श्रुतेः षडङ्गानि परिश्रमेण।
विचक्षणादीक्षितवैद्यनाथात्तथेतरेभ्यो नियतो गुरुभ्यः॥ २॥

काश्यामधीयाय महामहोपाध्यायादसौ कोविदराममिश्रात् ।
वेदान्तशास्त्राणि नितान्तसक्तो भक्तौ परब्रह्मण उत्कचित्त. ॥ ३ ॥ (युग्मम्)
ततो नवद्वीपपुर प्रयातोऽधीते स्म शेषाण्यपि दर्शनानि ।
अभ्यस्य भूयो रसनाग्रवर्त्तीन्यमूनि कृत्वा भृशमाप तोषम् ॥ ४ ॥
अथ भ्रमन् देशविशेषशोभा पश्यन्गुरुभ्यो बहुशोऽधिगच्छन् ।
शास्त्राणि लोकैरभितोऽर्च्यमान पराभवन्वादिकुल तथासीत् ॥ ५ ॥
दाक्षिण्यवान्दक्षिणदिग्गतोऽसौ विचक्षणानैक्षत सक्षणस्तान् ।
क्षणादवाकृष्यत यैर्मनोऽस्य वैलक्ष्यमापे भृशमीक्षितश्च ॥ ६ ॥
मूर्ध्नां गत. क्ष्मा विनयेन युक्तः परीक्षितोऽनुक्षणमेभिरेष ।
क्षीण क्षुधाम्नायभुवाऽक्षया हि तृप्ति प्रपेदे श्रुतिशिक्षयाप्ताम् ॥ ७ ॥
तेन श्रुतिक्षौद्रबुभुक्षितेन गृहीतदीक्षेण समीक्षितानि ।
क्षौद्रैक्षवक्षीरसुधादिकानि क्षाराणि रूक्षाणि गतक्षणानि ॥ ८ ॥
समाप्य वेदाध्ययन विधायोपाध्यायवर्गाङ्घ्रिसरोजरेणून् ।
निजोत्तमाङ्गस्य विभूषणानि तीर्थाटन कर्तुमियेष भूय. ॥ ९ ॥
कुर्वन्पवित्रान्पृथिवीप्रदेशान्महात्मना सङ्गतिमीप्समान. ।
प्राय प्रयाति स्म सता समाजो यात्राप्रसङ्गाद्भवति स्म यत्र ॥ १० ॥
क्ष्मामण्डलस्याखिललब्धवर्णवर्गे दधत्प्रेम परं सदाऽयम् ।
वाराणसीवासिमनीषिवृन्दे महद्गुरुत्वं कलयाञ्चकार ॥ ११ ॥
विधाय पातञ्जलदर्शनस्य व्याख्या कवीना रुचिरा चिराय ।
स्थिरा तनु कीर्तिमयीमभीप्सुस्तत्पुस्तकान्यर्पितवान्बुधेभ्य. ॥ १२ ॥
अभ्यर्थित' शिष्टजनैश्च पातञ्जलप्रकाशं सरल स्फुटार्थम् ।
हिन्दीगिरा दर्शनशास्त्रसार लोकोपकाराय चकार शीघ्रम् ॥ १३ ॥

अथ येन श्रौतसर्वस्व (पिण्डपितृयज्ञमीमासा), गङ्गास्थितिमीमासा, अबोधध्वान्तमार्तण्ड ,अमूल्यरत्नमित्यादयोन्येप्यनेके ग्रथास्तत्रभवता भवतापवता जनानामुपकरिष्णुना प्राणायिषत,प्रास्थायि चोदग्दिग्गतजनपदान्पदारविन्दरजोभिः पवित्रयितुम् । यः प्रागेवास्यापूर्व प्रभावमाकर्ण्यातिसमुत्कण्ठितचेतसा सत्सम्भावनस्वभावेन छपरानगरीवास्तव्येन श्रीमता देवकुमारसिंहेनाभ्यर्थितः सनाथयाम्बभूव तद्भवन चरणसरसीरुहरेणुभि. । सततपरिभ्रमणशीलेनापि भावभूरिलेन तस्मै प्रत्यहं ज्ञानमार्गमुपदिशता व्यलम्बि तस्यैवालये वर्षद्वयम् । ततः प्रस्थितो वङ्गदेशीयाङ्गलविद्यालयानामध्यक्षेण (इन्स्पेक्टर आफ स्कुलस् बेङ्गाल्) श्रीमता भूदेवचन्द्रमुखोपाध्यायेन दर्शनशास्त्राध्ययनाय स्वस्योपाध्यायपदवीं प्रापितः । उत्तरपाराभूमिपतिना श्रीमता रासविहारिमहोदयेनापि दर्शनशास्त्रस्य महाऽऽदर्शभूतः स्वसद्मनो भूषणीचक्रे वर्षद्वयावधि।

एवमेव जगति ज्ञानमार्गं प्रकाशयता भूमण्डलमार्तण्डेन जनाह्लादकारिणा क्षयरहितचन्द्रमसा मनीषितवर्षिणा जङ्गमकल्पतरुणा करुणावरुणालयेन वर्त्तमान एव सवत्सरे ( श १८२७ ) कुम्भमहोत्सवे त्रिवेणीं स्नातु प्रयागतीर्थं गतवता शमवता साधुगणानवता सर्वदर्शिनापि स्वानुचरवर्गान् स्फुटमकथितवतैव ससम्भ्रममीश्वराहूतेन वा पापीयसामस्माक सङ्गतिं त्वरया परिजिहीर्षता वा दैवै स्वेषामधःस्थितलोके तस्य वासमनुचित मन्यमानैर्विमानवद्भिरपि तस्मिन् बहुमानवद्भिर्मानवजनादृश्यैर्नीतेन वोपरिलोक तपोनिधिना तपोमासे कृष्णप्रियेण कृष्णपक्षेऽद्भुतप्रभावपूर्णेन पूर्णाङ्कतिथौ ( नवमीतिथौ ) यशःशुक्लेन शुक्रवासरे सेवकजनक्षणदेन क्षणदाया महात्मनामग्रगण्येनाद्ये यामे भूमिवलयेऽभिनवं शोकमुद्भावयता नवम्या घण्टायामस्मिँल्लोके सचेतनमात्रस्य नेत्राभ्यामश्रुवेणीः प्रवाहयता शोकसागरमग्नेष्वपि सर्वेषु परमप्रियशिष्य श्रीस्वाम्यात्मस्वरूपशास्त्रिण, ज्योतिर्विद श्रीरामचन्द्रोपाध्याय च निरवलम्बमेव त्यजता त्रिवेणीतटे निजपाञ्चभौतिकशरीरशून्यं मर्त्यभुवनं व्यधायि ।

अधुना श्रीस्वाम्यात्मस्वरूपशास्त्रिणा श्री १०८ स्वामिबालरामोदासीनैस्तत्रभवद्भिः परमकृपालुभि स्थापितेन गुरुमण्डलेन तदधिष्ठानाधिकारेऽभ्यर्थितपूर्वेण निजशोकमूनयित्वा तन्मण्डल स्वमात्रशरण यथापूर्वं पालयितु प्रवृत्तेन भूयतामित्याशास्ते"।

पाण्डेय श्रीकान्तशर्म्मा

---

ततस्तत्र तन्मुख्यशिष्येणात्मस्वरूपोदासीनेन यथाविधि सर्वं कृत्य त्रिवेण्यास्तीरे निर्वर्त्य कृतार्थीकृतो ह्यात्मा ।

ततस्तत्साङ्ख्यतत्त्वकौमुदीव्याख्यायास्तद्धस्ताक्षरमन्तिममेतत्परिचिन्त्य—२ चिरं दु.खान्यनुभूय २ पारमपारयता तेन परं यत्नमास्थाय तस्य ग्रन्थस्य व्याख्यारूपस्य प्राचीनतदुक्तिगतविचित्रार्थावगमसुखसम्पादनमिक्षोरिव तत्समाप्य तन्मुद्रणोत्तर तदिद साधयितु शक्य नान्यथेति निश्चित्यावशिष्टभागव्याख्या श्रीरामावतारसाहित्याचार्यद्वारा कारयित्वा मुद्राप्य स ग्रन्थ प्रकटीकृतस्तद्दर्शनगततत्त्वज्ञानसम्पत्तिसम्पित्सुजनमन कुतूहलाभिवृद्धये, तथा श्री १०८ स्वाम्यात्मस्वरूपशास्त्रिणा श्री १०८ स्वामिबालरामोदासीनवर्यैस्तत्रभवद्भि परमकृपापरिपूर्णान्तरङ्गै स्थापिते गुरुमण्डले प्रविष्टैर्विद्वद्भिः साधुभिरभ्यर्थितेन तदधिष्ठिताधिकारस्वीकाराय, तन्मण्डलगतसाधुजनमानसिकशोकापनोदाय च, तमधिकारमधिष्ठाय तन्मण्डल यथापूर्वं पालयितु प्रवृत्तेन समर्पितमिम ग्रन्थ सफलीकुर्वन्तु तत्रभवन्तो भवन्त इत्यभ्यर्थ्यते इति शम् ।

काशीशेषश्री व्यङ्कटाचल शास्त्री,

विद्वत्कृपाभिलाषी

# साङ्ख्यतत्त्वकौमुदी ।



## ओम्

### नमोऽन्तर्यामिणे

यो भावः सर्वभावेषु स्वनुस्यूतो विभाव्यते ।
भावये तं भवं देवं भवाभावाय केवलम् ॥ १ ॥
बम्भ्रमीति यया बद्धो मुक्तस्तिष्ठति कूटवत् ।
त्रिगुणाऽलौकिकी रज्जुर्मया दृष्टा जहातु माम् ॥ २ ॥
यद्वचोऽमृतमापीय प्राकृतामृतनिस्पृह ।
सवृत्तस्त समालम्बे देशिकं नानक परम् ॥ ३ ॥

इह खलु प्रत्नविद्वत्सामन्तशिरोरत्नायमानो निखिलदर्शनासाधारणधिषण आचार्यवाचस्पतिमिश्र साङ्ख्यकारिकासप्तति व्याचिख्यासुरारब्धपरिसमाप्त्यरातिप्रत्यूहव्यूहापोहासाधारणकारणमविगीतशिष्टाचरिततर्कितस्मृत्यनुमितश्रुतिज्ञापितानुष्ठेयताक मङ्गलाचरणमुपशिक्षयन् प्रकृततन्त्राभिधेयाभिधित्सया प्रकृततन्त्रमूलभूता श्वेताश्वतरश्रुतिं किञ्चिद्व्यत्ययेन निबध्नन् प्रकृति पुरुषाश्च प्रणमति "अजामेकाम्" इत्यादिना, न जायत इत्यजा=जनिविकारविधुरा मूलप्रकृति, तां नमाम इति सबन्ध. ॥

---

१ एतेन "शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताक मङ्गलम्" इत्येवविधा ये तत्र तत्राधुनिकाना लेखा उपलभ्यन्ते तेऽविचारप्रभवा इति सूचितम्—

अयम्भाव –यथाऽसति विरोधे स्मृत्या तन्मूलभूता श्रुतिरनुमीयते नैव शिष्टाचारेण साक्षात्सानुमीयते किन्तर्हि शिष्टाचारेण स्मृतिस्तया च श्रुतिरिति, तथाचाहु कुमारिलस्वामिन "आचारात्तु स्मृति ज्ञात्वा श्रुतिर्विज्ञायते तत" इति, स्पष्ट चैतत् प्रथमाध्यायतृतीयपादे तन्त्रवार्तिक इति तत्रैव कणेहत्य निरीक्षणीयम्। २ मन्त्रद्वितीयपादान्ते 'सरूपा,' इत्यस्य स्थाने 'नमास' इति व्यत्यस्त, 'अजो ह्येको जुषमाणोनुशेते' इति तृतीयपादस्थाने 'अजा ये ता जुषमाणा भजन्त' इति व्यत्यस्तं 'जहात्येना भुक्तभोगामजोन्य' इति तुरीयपादस्थाने 'जहत्येना भुक्तभोगा नुम स्तान्' इति व्यत्यस्तमिति ज्ञेय, न च 'मन्त्रो हीन स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह, स वाग्वज्रो यजमान हिनस्ति' इति मिथ्याप्रयोगस्य वाग्वज्रतुल्यत्वाभिधानेनानर्थावहत्वोक्ते कथमत्र व्यत्ययीकरणमिति वाच्य, यजमानम् इत्युपादानेन मन्त्र एव व्यत्ययीकरणस्यानर्थावहत्वाभ्युपगमादिति दिक्। ३ अत्राध्यात्मविद्याप्रस्तावाद् अजा–पद योगेन प्रकृतावेव नेयं न समुदायप्रसिद्ध्या छाग्या, रूपककल्पनया तु समुदायप्रसिद्धिस्वीकारेऽपि नासङ्गतिरित्यवधेयम्! रूपककल्पनाप्रकारश्च 'यथा हि लोके यदृच्छया काचिदजा रोहितशुक्लकृष्णवर्णा स्याद् बहुबर्करा सरूपबर्करा च, ता च कश्चिदजो जुषमाणोनुशयीत कश्चिच्चैना भुक्तभोगा जह्याद्, एवमियमपि प्रकृतिस्त्रिवर्णा बहु सरूप विकारजात जनयति, अविदुषा च क्षेत्रज्ञेनोपभुज्यते विदुषा च परित्यज्यत,' इत्येव शारीरकीये भाष्ये प्रदर्शित ( अ० १ पा० ४ सू० १० )

## अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां नमामः।

"तस्माद्व्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम"[1] इत्यादीनि वाक्यानि तु 'अजाम्' इत्यादिश्रुति-विरोधेन न प्रकृत्युत्पत्तिपराणि किन्तर्हि चितिसन्निधानाद् गुणत्रयक्षोभपुरस्सरसर्गोन्मुखता-रूपगुणवैषम्यदशापत्तिरूपाभिव्यक्तिपराणि ॥

एवं यत्र क्वचिच्छ्रूयमाणं[2] पुरुषेऽव्यक्तलयाभिधानमपि गुणसाम्यदशारूपकार्याक्षमतारूपान-भिव्यक्तिपरतया नेयम् ॥

एवमेव 'अजो नित्यः' इति श्रुतिविरोधाद् "यतः प्रधानपुरुषौ" "प्रधानं पुरुषश्चैव लीयेते परमात्मनि" इति श्रूयमाणौ पुरुषस्योत्पत्तिप्रलयावप्युपचारेण[3] नेयौ ॥

केचित्[4] तु "संयोगलक्षणोत्पत्तिः कथ्यते कर्मजानयोः" "वियोजयत्यन्योन्यं प्रधानपुरुषा-वुभौ, प्रधानपुंसोरनयोरेष संहार ईरितः" इति मात्स्यं कौर्मं च वचः उपन्यस्यन्तः पुम्प्रकृत्योः संयोग एव तयोरुत्पत्तिर्वियोग एव च तयोर्लय इत्येवं व्यवस्थापयन्ति ॥

ननु "मायान्तु प्रकृतिं विद्यात्" "सत्त्वं रजस्तम इति प्राकृतं तु गुणत्रयम्, एतन्मयी च प्रकृतिर्माया या वैष्णवी[5] मता" इति श्रुतिस्मृत्योर्मायाप्रकृत्योः पर्यायत्वावगमाद् मायायाश्च "इन्द्रो मायाभिः पुरुरूप ईयते" इति श्रुत्याऽनेकत्वावगतेः 'अजाम्' इत्येकवचनमननुगुण-मित्याशङ्कापनोदायाऽऽह "एकाम्" इति। सजातीयद्वितीय[6]रहितामित्यर्थः ॥

साजात्यं चात्र[7] विकृतित्वानविकरणत्वे सति तत्त्वान्तरोपादानरूपत्वमभिमतं, तेनाविकृति त्वेन त्रिगुणत्वेन वा साजात्यमादाय न दोषोन्मेषः ॥

'मायाभिः' इति बहुवचनन्तु प्रकृतिगतानन्तज्ञानक्रियासर्गस्थितिप्रभृतिरूपशक्तिभेदाभि-प्रायेण, प्रकृत्यात्मकगुणत्रयभेदाभिप्रायेण वा सुयोज्यमिति न प्रकृत्येकत्वबाधः[8] ॥

यत्तु गर्भोपनिषदि "अष्टौ प्रकृतयः षोडश विकाराः" इति श्रुतं यच्च "भिन्ना प्रकृतिरष्टधा" इति[9] भगवता गीतं तत्तु महदादीनां विकृतीनामप्यहङ्कारादीनां प्रकृतित्वेनैकांशसाम्यमा-दाय महदहङ्कारपञ्चतन्मात्राण्यपि सकलय्याभिहितं नतु मूलप्रकृत्यभिप्रायेणानेकत्वाभिधा-नमिति ध्येयम् ॥

एवंविधाया प्रकृतेः श्रुतिसिद्धत्वेपि दार्ढ्याय कार्यलिङ्गकानुमानं सूचयितुमाह "बह्वीः प्रजाः सृजमानाम्" इति, प्रकर्षेण=व्यक्तरूपेण जायन्ते=आविर्भवन्तीति प्रजाः=महदादयो

१ महाभारतशान्तिपर्वमोक्षधर्मे अ० ३३ श्लो० ३१। २ 'अव्यक्ते पुरुषे ब्रह्मन् निष्कले सम्प्रलीयते' इति विष्णुपुराणादिषु श्रूयमाणम्। ३ गुणवैषम्यदशायाम्प्राकृतगुणसङ्गादुदासीनस्यापि पुंसः औपाधिकी भोक्तृत्वापत्तिरुत्पत्तिः गुणसाम्यदशायां च विकारासंसर्गिणस्तस्याविक्रियस्वरूपे-ऽवस्थानं लय इत्येवमुपचारेणेत्यर्थः। ४ 'जन्माद्यस्य यतः' इति ब्रह्मसूत्रविवरणे विज्ञानामृते विज्ञानभिक्षवः। ५ विष्णोः-व्यापकस्य पुरुषस्य सम्बन्धिनी, पौरुषेयभोगापवर्गापादिनीति यावत्। ६ पुरुषस्य महदादेश्च द्वितीयस्य सद्भावात्कथं द्वितीयरहितत्वमित्याशङ्काशमनाय सजा-तीयेति विशेषणम्। ७ नन्वविकृतित्वेन पुरुषस्य प्रकृत्या साजात्यात् त्रिगुणत्वेन च महदादेरपि तत्साजात्यात्कथं सजातीयद्वितीयराहित्यमित्यत आह-"साजात्यं चात्र" इति। ८ अजामेकाम्, इति श्रौतश्रुत्या मायाभिरिति लैङ्गिकस्य बहुत्वस्य बाधान्न प्रकृत्यनेकत्वकल्पना शोभनेति भावः। ९ एवं 'माया चाविद्या च स्वयमेव भवति" इति तापनीयश्रुतिरपि स्वयमिति पदमुपाददती वास्तवमनेकत्वमपह्नुवाना सती प्रकृत्येकत्वेऽनुकूलेति ज्ञेयम्।

अजा ये तां जुषमाणां भजन्ते

विकारा, ताश्च प्रजा सुखदुःखमोहात्मत्वेनानेकविधा इति बह्व्यश्च, ता अनेकविधा प्रजा सृजमानाम्=आविर्भावयन्तीम्, अनेकविधविकाराकारेणपरिणममानामित्यर्थः ॥

नन्वेकस्या प्रकृते कथं विभिन्नरूपमहदादिप्रपञ्चोपादानत्वम्, एकरूपाद्धि खलु कारणादेकरूपेणैव कार्य्येण भवितव्यमितरथा कार्यगतवैचित्र्यस्याकस्मिकत्वप्रसङ्गेन स्वभाववादपादाभिवादापत्तेरित्याशङ्कामपनिनीषु प्रकृतेस्त्रिगुणात्मिकतामाह "लोहितशुक्लकृष्णाम्" इति ॥

लोहिता चासौ शुक्ला चेति लोहितशुक्ला, सा चासौ कृष्णा चेति लोहितशुक्लकृष्णा, इत्येवं कर्मधारयाश्रयणेन पूर्वयो पुंवद्भाव,

ता लोहितशुक्लकृष्णा, तत्र लोहित=रक्त रज, शुक्ल=श्वेत सत्त्व, कृष्ण=नील तम इति, तदात्मिका–रज सत्त्वतमोगुणात्मिकामित्यर्थ ॥

यद्यपि लोहितत्वादयो वर्णा न रज प्रभृतिषु गुणेष्वद्धा विद्यन्ते तथापि यथा लोहितं महारजनादि वसनं रञ्जयति तथा रजोऽपि प्रवृत्त्या मनो रञ्जयतीति लोहितं रज, एवं यथा शुक्लं सलिलं विमलयति तथा सत्त्वमपि ज्ञानादिना मनो विमलयतीति शुक्लं सत्त्वम्, एवं यथा नीलं घनपटलमावृणोति तथा तमोपि ज्ञानमावृणोतीति कृष्णं तम, इत्येवमुपचारेण गुणानां लोहितत्वादिकमुन्नेयम् ॥

अवयवधर्मैर्व्यपदेशाच्च गुणसाम्यावस्था प्रकृतिरपि लोहितशुक्लकृष्णेति न प्रकृतनिर्देशानुपपत्ति। एतेन प्रधानमेव जगदुपादानमित्यपि सूचितं, तथा हि–ये हि भावा येन रूपेण समन्वीयन्ते ते तदुपादानका उपलब्धा यथा घटकटकादयो मृत्सुवर्णान्वितास्तदुपादानका, तथाचेमे भावा सुखदुःखमोहात्मनान्वीयमाना उपलभ्यन्ते तस्मात्तेपि सुखदुःखमोहात्मसामान्योपादानका भवितुमर्हन्ति, तादृशं च गुणत्रयात्मकत्वेन प्रधानमिति तदेव जगदुपादानं नान्यत् ॥

तत्र येयं प्रधानस्य सुखात्मता तत्सत्त्वं या च दुःखात्मता तद्रज, या च मोहात्मता तत् तम इति त्रिगुणात्मकत्वेन प्रधानस्य सुखाद्यात्मकत्वसिद्धिरिति ॥

---

१ प्रथमसमासे लोहितेत्यस्य द्वितीयसमासे लोहितशुक्लेत्यस्य पुंवद्भाव, कर्मधारयसमासाश्रयणेनैतद् दर्शयति न गुणेभ्यस्तत्त्वान्तरं प्रधानमपि तु गुणा एव साम्यावस्थापन्ना प्रधानपदव्यपदेश्या इति, व्यक्तं चैतत् "प्रकाशशील सत्त्व, क्रियाशील रज, स्थितिशील तम, इत्येते गुणा प्रधानशब्दवाच्या भवन्ति" इति योगभाष्ये, लोहितं शुक्लं कृष्णं यस्यामिति बहुव्रीह्याश्रयणे तु गुणेभ्योऽर्थान्तरं गुणिरूपं प्रधानं संसिद्ध्येत् तच्चानिष्टमिति कर्मधारय एवाश्रित। २ नन्वेवमुपचाराश्रयणेपि लोहितत्वादयो गुणधर्मा एवायान्ति नाजापदाभिधेयप्रधानधर्मास्तत्कथं प्रकृते र्लोहितत्वादिव्यपदेश इत्याकाङ्क्षाशमनायाह–"अवयवधर्मै" इति, अवयवा प्रधानस्यावयविन एकदेशरूपा रजस्सत्त्वतमांसि, तेषां धर्मा लोहितत्वादयस्तैरवयविन प्रधानस्य व्यपदेशादित्यर्थ, एवमवयविरूपप्रकृतिगतस्त्रीत्वमादाय लोहितेत्यादिस्त्रीत्वेन व्यपदेश इत्यपि बोध्यम्। ३ यथा च सर्वेषां भावानां सुखाद्यात्मकत्वं तथा 'अनया क्रिया सर्वे भावा व्याख्याता,' इत्यग्रे (१३ का०) व्यक्तम्। ४ सर्वे भावाः सुखाद्यात्मकोपादानोपादेयाः सुखाद्यन्वितत्वात् यद् यदन्वितं तत् तदुपादानकं यथा मृत्कनकान्वितं घटकटकादिकं, तथा चेमे, तस्मात् तथेति चात्र प्रयोगः।

जहत्येनां भुक्तभोगां नुमस्तान् ॥ १ ॥

कस्य हेतोरियं विचित्रविकाराकारेण परिणमत इत्याशङ्क्य पौरुषेयभोगापवर्गसम्पादनरूपपुरुषार्थाख्यस्वभावत एवेयं प्रवर्तते नान्येन केनचित्प्रवर्त्यते इति परिहारं मनसि निधाय येषां पुरुषाणां भोगापवर्गलक्षणमर्थं साधयितुं नैसर्गिक्यस्याः प्रवृत्तिस्तान् पुरुषान् प्रणमति "अजा ये ताम्" इत्यादिना ॥

ये=अहंप्रत्ययविषयत्वेन प्रसिद्धाः, अजाः=अनादिनः पुरुषाः तां=प्रकृतिं, भजन्ते=प्रकृतितत्त्वादात्मनोऽन्यतामबुध्यमानाः प्रकृतिगतसुखित्वादिकमात्मन्यभिमन्यमानाः सुखिनो दुःखिनो मूढा वयमित्येवमभिनिविशन्ते तान् बद्धानविवेकिनः पुरुषान् वयं नुमः, ये चाजाः= प्राप्तप्रकृतिपुरुषान्यताप्रत्ययाः पुरुषाः, तां=प्रकृतिं जहति=अनात्मत्वेन परित्यजन्ति तान् विवेकिनोपि पुरुषान् वयं नुमः इत्यर्थः ॥

किंविधाम्प्रकृतिमविवेकिनो जना भजन्त इत्याकाङ्क्षायां हेतुगर्भितं विशेषणमाह—"जुषमाणाम्" इति शब्दाद्युपभोगप्रदानेन पुरुषं सेवमानां सुखाद्यात्मकशब्दादिरूपपरिणामेन पौरुषेयभोगं साधयन्तीमिति यावत् ॥

किंविधां च तां विवेकिनः परित्यजन्तीत्याकाङ्क्षायां हेतुगर्भितं विशेषणमाह—"भुक्तभोगाम्" इति, भोगपदं अपवर्गस्याप्युपलक्षकं, तत्र शब्दाद्युपलब्धिर्भोगः, प्रकृतिपुरुषान्यताख्यातिश्चापवर्गः, भुक्तः निष्पादितः भोगो यया सा भुक्तभोगा तां=सम्पादितपौरुषेयभोगापवर्गत्वेन समाप्ताधिकारामित्यर्थः ॥

इदमत्रावधेयं—तावदेव हि प्रकृतितत्त्वं विचेष्टते न यावद् भोगं वाऽपवर्गं वा सम्पादयति निष्पादितभोगापवर्गा तु कृतकृत्या सती स्वयमेव निवर्तते पुरुषाणाञ्चाऽऽनन्त्याद्, यं प्रति कृतकार्या तं प्रत्येव निवर्तते नान्यान् प्रति, एवं च नैकस्मिन् विवेकिनि सति प्राकृतपरिणामविरामः, तथा चाहुः—"कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्" इति ॥

एतेन ( गुणत्रयात्मिका प्रकृतिरेव कर्त्री,पुरुषार्थ एव च तस्याः प्रवृत्तेर्हेतुः, पौरुषेयभोगापवर्गनिष्पादनमेव च तत्कृत्यं, पुरुषस्तूदासीनोपि प्राकृतगुणसङ्गादविवेकाद् भोक्तृभावेन बध्यते, विवेकख्यात्या चाऽसङ्गत्वभावनया मुच्यते ) इत्ययं प्रकृतशास्त्राभिधेय इत्यपि सूचितम् ॥१॥

१ एतच्च "पुरुषार्थ एव हेतुः" ( ३१ का० ) इत्यत्र व्यक्तीभविष्यति । २ भोगस्य सिद्धत्वेनापवर्गस्यैवावशिष्टत्वादपवर्गयोग्यतया बद्धा अपि पुरुषा मुक्तवन्नन्तव्या एवेत्याशयेनोभयेषां पुरुषाणां नमनमिति बोध्यम् । ३ यतो हेतोर्जुषमाणा=भोगप्रदानेन पुरुषान् प्रीणयति ततो हेतोस्तां ते भजन्ते=अनुसरन्तीति भावः । ४ यद्यपि भोगादयो विकाराश्चित्तस्यैव वृत्तिविशेषरूपा धर्मास्तथापि चितिचित्तयोर्जपाकुसुमस्फटिकयोरिव सन्निधानादभेदग्रहे चित्तवृत्ती स्वस्मिन्नारोप्य शान्तोस्मि दुःखितोस्मि मूढोस्मीत्यध्यवस्यति पुरुषः, यथा विमले वा मलिने वा दर्पणतले प्रतिबिम्बिते वदने दर्पणतलीयवैमल्यं मालिन्यं चारोप्य कमनीयं मलिनं च वदनमध्यवस्यतीति, एवं च चित्तवृत्तिसारूप्यात्पुरुषस्यौपाधिको भोगो भवतीति ज्ञेयं, व्यक्तं चैतत् "वृत्तिसारूप्यमितरत्र" इत्यत्र पातञ्जले पा० १ सू० ४ । ५ यतो भुक्तभोगा=निष्पादितकृत्या ततस्तां परित्यजन्तीति यावत् । ६ अपवृज्यते=केवलीभवति मुच्यते येन विवेकज्ञानेन सोऽपवर्ग इत्यर्थः । ७ योगसू० २२ पा० २।

## कपिलाय महामुनये

इदानीं प्रकृतशास्त्रप्रवर्तकसङ्ग्राहकाचार्याननुक्रमेणोद्दिश्य प्रणमति "कपिलाय" इत्यादिना ॥

'नमस्याम' इत्युत्तमपुरुषानुरोधेन 'एते' इत्यत्र वयमित्यध्याहार्यम्, एते वय कपिलाय नमस्याम इत्यन्वय ॥

वयमित्यनुक्त्वा 'एते' इति कथन तु स्वीयौद्धत्यापोहाय, बहुवचनं तु सपरिवारस्य सशिष्यस्य वा स्वस्य विनेयत्वाख्यापनाय ॥

'एते' इति कर्तृपदमादाय 'शेषे प्रथम' इति प्रथमपुरुषप्रयोगस्तु नापादनीय, वयमित्यस्मद प्रयुक्तत्वेन ततोऽन्यत्वरूपशेषत्वस्याभावाद् अत एव त्व च देवदत्तश्च पचथ इत्यादिप्रयोगसाधुत्वाय प्रवृत्त "युष्मदस्मदन्येषु प्रथमस्य प्रतिषेधो वक्तव्य" इति वार्तिक 'नहि शेषश्चान्यश्च शेषग्रहणेन गृह्यत' इत्यास्थाय प्रत्याख्यात महाभाष्ये ॥

ननु कपिलायेत्यत्र कथ चतुर्थी, नच "नम स्वस्तिस्वाहा" इत्यनेन सेति वाच्यम्, अत्र नम शब्दयोगाभावात्, नच नमस्यशब्दे नम शब्दस्य सद्भावात् तद्योगसद्भाव इति साम्प्रतं, वृत्तावेकार्थीभावाङ्गीकारेण पृथगर्थासत्त्वात्समुदायस्यैव नमस्यशब्दस्यात्रार्थवत्त्वेन नम इत्यस्यार्थवत्त्वाभावात् । तदुक्त महाभाष्यकृता "अर्थवतो नम शब्दस्य ग्रहण नच नमस्यशब्दे नम - शब्दोऽर्थवान्" इति, इति चेत्, अत्राहु – कपिलाय इत्यस्य कपिल प्रीणयितुं अनुकूलयितुं वा नमस्याम इत्यर्थमादाय "क्रियार्थोपपदस्य च कर्मणि स्थानिन" इत्यनेन चतुर्थ्या साधुत्वाश्रयणेन प्रकृतप्रयोगसङ्गतिरिति ॥

कपिलशब्दस्य बहुष्वर्थेषु साधारणवृत्तित्वात् असाधारणाभिमताभिधेयस्योपादेयत्वाय विशिनष्टि "महामुनये" इति । मुनित्व=ज्ञानवत्त्वम्, महत्त्व चाप्रतिहतानौपदेशिकत्व, तच्च मुनिपदार्थतावच्छेदके ज्ञानेऽन्वितम्, एव चाप्रतिहतानौपदेशिकज्ञानशीलाय कपिलायेत्यर्थ ॥

यद्वा निखिलवेदविषयत्वरूप महत्त्व ज्ञाने ज्ञेय, तथाहुर्विष्णुसहस्रनामभाष्ये शङ्कराचार्या – 'महर्षि कपिलाचार्य इति सविशेषणमेक नाम महांश्चासावृषिश्चेति महर्षि कृत्स्नस्य वेदस्य दर्शनात्, अन्ये तु वेदैकदर्शनात् ऋषय' इति ॥

यद्यपि "ऋषिं प्रसूत कपिल यस्तमग्रे ज्ञानैर्बिभर्ति" "महर्षि कपिलाचार्य" इति श्रुतिस्मृ-

---

१ उपयुक्तादन्यो हि शेषत्वेनाभिमन्यतेऽत्र चोपयुक्तस्य वयमित्यस्य सत्त्वान्न ततोऽन्यत्वमिति कथमत्र शेषत्वमिति भाव । २ अत एव नमस्यति देवानित्यस्यैव साधुत्वमास्थित महाभाष्ये, न चतुर्थ्यन्तस्येत्यपि ज्ञेयम् । ३ क्रियार्था क्रियोपपद यस्य तस्य स्थानिन अप्रयुज्यमानस्य तुमुन्नन्तस्य कर्मणि चतुर्थी स्याद् इति सूत्रार्थ, फलेभ्यो याति, फलान्याहर्तुं यातीति च तदुदाहरणम् । ४ विष्णुरपि कपिलो यथा "सनात् सनातनतम कपिल कपिरव्यय" इति । महादेवोपि कपिलो यथा "कपिल कपिश शम्भु" इति, नागविशेषोपि कपिलो यथा 'शङ्खश्च शङ्खपालश्च कपिलो वामनस्तथा" इति, दानवविशेषोपि कपिलो यथा "अयोमुख शबरश्च कपिलो वामनस्तथा" मुनिविशेषोपि कपिलो यथा "सिद्धाना कपिलो मुनि" इति । ५ तच्च=महत्त्वञ्च ।

**मुनये शिष्याय तस्य चासुरये। पञ्चशिखाय तथेश्वरकृष्णायैते नमस्यामः॥२॥**

तिभ्या कपिलस्यर्षित्वमेव प्रतीयते न मुनित्व तथाप्यन्यत्रासाङ्कर्येण मुनित्वर्षित्वयोर्वृत्तावप्यत्र कपिले द्विविधधर्मसद्भावादुभयव्यपदेशसम्भवेन न मुनित्वाभिधानहानि ॥

एव प्रथमसाङ्ख्याचार्य प्रणम्य "पञ्चमे कपिलो नाम सिद्धेश कालविप्लुत ॥ प्रोवाचासुरये साङ्ख्यं तत्त्वग्रामविनिर्णयम्" इत्यभिहित द्वितीयाचार्यमासुरि नमति 'मुनये शिष्याय तस्य चासुरये" इति।

यथानौपदेशिकज्ञानशीलत्वेन कपिलो महामुनिर्नैवमासुरिरपि त्वौपदेशिकज्ञानवत्त्वेन मुनिरयमित्याह–"मुनये"इति, औपदेशिकज्ञानवत्त्वमेवास्य स्फुटयितु विशिनष्टि–"तस्य शिष्याय" इति, कपिलादाप्ततत्त्वज्ञानत्वेन कपिलशिष्यायेत्यर्थं ।

तदुक्त पञ्चशिखाचार्येण "आदिविद्वान् निर्माणचित्तमधिष्ठाय कारुण्याद्भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्र प्रोवाच" इति ॥

इदानीम् "आसुरे प्रथम शिष्य यमाहुश्चिरजीविनम्। पञ्चस्रोतसि निष्णात पञ्चरात्रविशारद । पञ्चज्ञ पञ्चकृत् पञ्चगुण पञ्चशिख स्मृत" इत्युक्तलक्षण "जटा वह्निशिखारूपा पञ्च सन्ति च मस्तके, तपस्तेजोभवा यस्य स च पञ्चशिख स्मृत" इत्युक्तनिर्वचन वा तृतीयाचार्य्यं प्रणमति, "पञ्चशिखाय" इति ॥

तथा=पूर्वोक्तप्रकारेण आसुरिशिष्याय पञ्चशिखाय मुनये नम इति यावत्, समुच्चयार्थो वा तथा—शब्द ॥

सम्प्रति प्रकृतसाङ्ख्यार्य्यासप्ततिनिर्मातार प्रणमति—"ईश्वरकृष्णाय" इति । एतेन सिद्धशिरोमणिमहामुनिकपिलादिप्रवर्तितत्वेनायं तत्त्वग्रामविनिर्णय सूपादेय इति बोधित भवति ॥२॥

---

१ ऋषिर्दर्शनाद्, इति यास्कोक्ते 'ऋषन्ति=जानन्ति–एतदर्थकैतन्मन्त्रयुक्तादेतस्मात्कर्मणोऽमुनाप्रकारेणैतत्फलमित्येवमभ्यूहन्तीति ऋषय' इति निवचनाच्च मन्त्रद्रष्टृत्वमृषित्व, तच्च वसिष्ठवामदेवादिषु वर्तते, मननशीलत्व मुनित्व तच्च शौनकादिषु वर्तते, इत्येवमृषित्वमुनित्वयोरन्यत्रासाङ्कर्येण वृत्तावप्यत्र भगवदवतारे कपिले मन्त्रद्रष्टृत्वज्ञानवत्त्वरूपयोरुभयोरपि धर्मयो सद्भावाद् 'ऋषि प्रसूतम्' इत्यत्रर्षित्वेन व्यपदेश, "सिद्धाना कपिलो मुनि" इत्यत्र च मुनित्वेन व्यपदेश इति न कपिलस्य मुनित्वोक्त्यसङ्गतिरिति भाव । २ भागवत प्र० स्क० अ० ३ श्लो० १० ॥ ३ महाभा० पर्व० १२ अ० २१८ श्लो० १२ 'पञ्च स्रोतासि' विषयकेदारप्रणालिका यस्य तस्मिन् मनसि निष्णात =ऊहापोहकौशलवान्, पञ्चरात्रो नाम विष्णुत्वप्रापक क्रतु "पुरुषो ह वै नारायणोऽकामयताऽत्यतिष्ठेय सर्वाणि भूतान्यहमेवेद सर्वं स्यामिति स एत पञ्चरात्र पुरुषमेध क्रतुमपश्यद्" इति शतपथोक्त, तत्र विशारद =अनुष्ठिताखिलकर्मेत्यर्थ । पञ्च अन्नमयादीन् कोशान् मिथ आत्मनश्च विविक्तान् जानातीति पञ्चज्ञ, अत एव पञ्चकृत्=पञ्च तद्विषयाण्युपासनानि "भृगुर्वै वारुणि" इत्यस्यामुपनिषदि 'स तपस्तप्त्वाऽन्न ब्रह्मेति व्यजानाद्' इत्यादिविहितानि करोतीति पञ्चकृत्, पञ्च–"शान्तो दान्त उपरतस्तितिक्षु समाहितो भूत्वाऽऽत्मन्येवात्मान पश्येद्" इति श्रुता शान्त्यादयो गुणा यस्मिन् स पञ्चगुण, पञ्चभ्योऽतिरिच्यमानत्वात् शिखेवेति पञ्चशिख पुच्छं ब्रह्म तज्ज्ञत्वान्मुनिरपि पञ्चशिख इत्यर्थ इति तद्व्याख्याया नीलकण्ठ । ४ ब्रह्म वै० ब्र० ख० अ० २२ श्लो० १६ ॥ ५ अय च न साक्षात्पञ्चशिखान्तेवासी किन्त्वर्वाचीन एव तत कश्चित्साख्यतत्त्ववेत्ता। एतच्च "शिष्यपरम्परयागतम्" इत्यत्रान्ते व्यक्तम्।

**इह खलु प्रतिपित्सितमर्थं प्रतिपादयन्**
**प्रतिपादयिताऽवधेयवचनो भवति प्रेक्षावताम्**
**अप्रतिपित्सितं तु प्रतिपादयन् नायं लौकिको**
**नापि परीक्षक इति प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येत,**

---

एव तत्त्वज्ञाचार्य्यनामनिर्देशपुरस्सरनमनेन प्रकृतशास्त्रोपादेयता शिष्टाचारानुसरण च प्रदर्श्य साम्प्रतमुपादेयताहेतुभूता प्रकृतशास्त्रस्यानन्यसाधारणाभिधेयवत्ता प्रेक्षावदपेक्षिता समर्थयितु प्रकृतशास्त्रारब्धुश्च परीक्षकत्व ज्ञापयितु कारिकापीठिकामारचयति–'इह खलु" इत्यादिना ॥

इह=व्यवहारभूमौ––परीक्षकजनससदि वा, खलु इत्यव्ययमवधारणे, वाक्यालङ्कारे वा, प्रतिपित्सित=प्रतिपत्तुम्––अ॰ग तु इष्टम्––अभिलषित सन्दिग्धत्वेन सप्रयोजनत्वेन च जिज्ञासागोचरम्, अर्थम्=अभिधेय वस्तुतत्त्व प्रतिपादयन्=वाग्व्यवहारेण स्वमनोगत परत्र सक्रामयन्, प्रतिपादयिता=बोधयितोपदेष्टा, अवधेयवचन=समादरपुरस्सरश्रवणीयवचनो भवति कि सर्वेषा, नेत्याह "प्रेक्षावताम्" इति, हेयोपादेयविवेकनिपुणधिषणातिशयवतामित्यर्थ ॥

यद्यपि 'प्रतिपित्सितं प्रतिपादयन्नवधेयवचनो भवति' इत्येतावतैव निर्वाहे 'प्रतिपादयिता इत्यनावश्यक 'तथापि स एव प्रतिपादयिता प्रेक्षावतामवधेयवचनो भवति य खलु प्रतिपित्सित प्रतिपादयन् वर्तते' इत्येत्र वचोवैचित्र्यबोधनायेदमभिहितम् ॥

एतद्विपरीतस्तु प्रतिपादयिता नाववेयवचनो भवत्यपि तूपेक्षार्ह इत्याह–"अप्रतिपित्सित तु" इति ॥

पूर्वोक्तवैपरीत्यद्योतनाय तु–शब्द, अप्रतिपित्सितम्=असन्दिग्धत्वेनाप्रयोजनत्वेन च जिज्ञासानर्हमर्थं प्रतिपादयन् वर्तमानस्तु जन प्रेक्षावद्भिरुपेक्ष्येत=त्यज्येत—श्रद्धेयवचनतया न गृह्येतेत्यर्थ । उपेक्ष्यत—इति पाठे तु त्यज्यत इत्यर्थ । कि ज्ञात्वाऽसावुपेक्ष्यत इत्यत्राह–– "नाय लौकिको नापि परीक्षक इति" इति । लौकिकपरीक्षकजनविलक्षणोऽय मतिविप्लवशील इति ज्ञात्वेत्यर्थ । तदेवाह––"उन्मत्तवद्" इति ॥

तत्र लोके––सामान्यजनसमवाय एव यो भव=सत्तावान् न विद्वद्गोष्ठ्यामुपवेष्टुमर्हस्स लौकिक–सासारिककुटुम्बभरणक्रयविक्रयादिव्यवहारचतुर शास्त्रीयसस्कारविधुरो नर इति यावत् ।

परित=सर्वत—प्रमाणैस्तर्केण च य ईक्षते—पश्यति वस्तुतत्त्व निश्चिनोति स परीक्षक, पारमार्थिकविचारचतुर शास्त्रीयसस्कारवान्नर इत्यर्थ ॥

तदुक्त पक्षिलस्वामिना––"लोकसाम्यमनतीता लौकिका नैसर्गिक वैनयिक बुद्ध्यतिशयमप्राप्ता, तद्विपरीता परीक्षकास्तर्केण प्रमाणैरर्थ परीक्षितुमर्हन्ति" इति ॥

---

१ निर्णीते निष्प्रयोजने च जिज्ञासानुदयादिति भाव । २ अवधान परत्र चित्तवृत्तिसचारवैधुर्य्यपुरस्सरं प्रकृतार्थाकर्णनौत्कण्ठ्यम्, अवधातुमर्हमवधेय श्रद्धेयमिति यावद्, एवविध वचन यस्य स तथा। तदेवाह—' समादर ' इत्यादिना । ३ इति=इति कृत्वा, ज्ञात्वेत्यध्याहारो वा। ४ न्यायदर्शनभाष्यकारवात्स्यायनमुनिना, अ० १ आ० १ सू० २५ ॥ ५ नैसर्गिक=प्राक्तन सस्कारजन्यं वैनयिकम्=ऐहिकं शास्त्राभ्यासपरिशीलनजन्य, प्रज्ञोत्कर्षमप्राप्ता इत्यर्थः । ६ नैसर्गिक वैनयिकमत्यतिशयसम्पन्ना इत्यर्थ ।

स चैषां प्रतिपिपित्सितोऽर्थो यो ज्ञातः सन् परमपुरुषार्थाय कल्पत, इति प्रारिप्सितशास्त्रविषयज्ञानस्य परमपुरुषार्थसाधनहेतुत्वात् तद्विषयजिज्ञासामवतारयति "दुःखत्रयाभिघाताद्" इति ॥

दुःखत्रयाभिघातज् जिज्ञासा तदपघातके हेतौ ।
दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततोऽभावात् ॥ १ ॥

एवं हि शास्त्रविषयो न जिज्ञास्येत यदि दुःखं नाम जगति न स्यात्, सद्वा न जिहासितं, जिहासितं वाऽशक्यसमुच्छेदम्। अशक्यसमुच्छेदता च द्वेधा दुःखस्य नित्यत्वाद्वा तदुच्छेदोपायापरिज्ञानाद्वा,

---

कोऽसावर्थ यत्प्रतिपादनेनावधेयवचनो भवति यश्च प्रेक्षावज्जिज्ञासागोचर इत्याकाङ्क्षायामाह—"स चैषाम्" इति ॥

चोऽवधारणे, योऽर्थो ज्ञात सन् मननद्वारा परमपुरुषार्थाय=दु खात्यन्तोच्छेदाय, कल्पते=समर्थो भवति स एवार्थ एषाम्=प्रेक्षावता प्रतिपित्सित =जिज्ञासागोचर इति=यत एवमत तद्विधप्रकृतशास्त्रविषयजिज्ञासामवतारयतीत्यन्वय ॥

प्रकृतशास्त्रविषयस्य कथं पुरुषार्थसमर्थत्व येन तस्य जिज्ञासागोचरत्वमित्यत्राह—"प्रारिप्सित" इत्यादि, प्रारब्धुमभिलषित यच्छास्त्र तस्य यो विषय —पञ्चविंशतितत्त्वविनिर्णयात्मक , तद्गोचरज्ञानस्य परमपुरुषार्थसाधनहेतुत्वाद्=दु खात्यन्तोपरमरूपपरमपुरुषार्थस्य साधन यद्विवेकज्ञानं तस्य हेतुत्वादित्यर्थ ॥

जिज्ञासा समर्थयितु सम्भावनामूलकान् विकल्पान् प्रकल्प्य तन्निराकरणेन कारिका योजयितुमुपक्रमते–"एव हि" इत्यादिना, उत्तरत्र यदीत्यनुरोधाद् 'एव हि' इति तर्हीत्यर्थक, यदि दु खं नाम जगति न विद्येत तर्हि शास्त्रविषयो न जिज्ञास्येतेत्यन्वय ॥

द्वितीय विकल्पमाह—"सद् वा" इति, विद्यमानमपि तद् दु ख यदि त्यक्तुमभिलषितं न स्यात् तर्ह्यपि शास्त्रविषयो न जिज्ञास्येतेत्यर्थ ॥

तृतीय विकल्पमाह–"जिहासित वा" इति, त्यक्तुमभीष्टमपि तद् दु खं यदि पौरुषेण यत्नेन नापनेय स्यात् तर्ह्यपि शास्त्रविषयो न जिज्ञास्येतेत्यर्थ ॥

दु खस्य पौरुषेण यत्नेनानपनयत्वे काल्पनिक साधकमाह—"दु खस्य नित्यत्वाद्" इति "नाभावो विद्यते सत " इत्युक्तेर्दु खस्य नाशाप्रतियोगित्वेन यत्नापनेयत्वमित्यर्थ । साधकान्तरमाह—"तदुच्छेदोपायापरिज्ञानाद्वा" इति, कूटस्थनित्यत्वाभावेनापनेतुमर्हत्वेपि तदपनयनसाधनापरिज्ञानाद्वाऽनपनेयत्वमित्यर्थ ॥

---

१ तद्विधप्रकृतशास्त्रविषयजिज्ञासा=परमपुरुषार्थसमर्थविवेकज्ञानसाधनतत्त्वग्रामविनिर्णयात्मक प्रकृतशास्त्रविषयज्ञानेच्छामित्यर्थ । एव च प्रकृतशास्त्रार्थो ज्ञात सन् परमपुरुषार्थसमर्थो यतोऽतो भवत्यस्यार्थस्य प्रतिपित्सितत्वमिति बोधितम् । २ नाम इति प्रसिद्धार्थकम्–पीडापरपर्य्याय प्रत्यात्मप्रतिकूलवेदनीयमित्यर्थ । ३ दु.खत्रयात्यन्तविघटकविवेकज्ञानजनकप्रकृतशास्त्रप्रतिपाद्य तत्त्वग्रामनिर्णय ।

शक्यसमुच्छेदत्वेपि च शास्त्रविषयस्य ज्ञानस्यानुपायत्वाद्वा सुकरस्योपाया-न्तरस्य सद्भावाद् वा ।

तत्र न तावद् दुःखं नास्ति, नाप्यजिहासितम् इति, अत उक्तं "दुःखत्रयाभिघाताद्" इति, दुःखानां त्रयं दुःखत्रयं, तत् खलु आध्यात्मिकमाधिभौतिकमाधिदैविकं च ।

तत्राध्यात्मिकं द्विविध शारीर मानस च, वातपित्तश्लेष्मणा वैषम्यनिमित्त, मानस कामक्रोधलोभमोहभयेर्ष्याविषादविषयविशेषादर्शननिबन्धनं सर्वं चैतद् आन्तरोपायसाध्यत्वादाध्यात्मिकं दुःखम् ।

---

तुरीयं विकल्पमाह--"शक्यसमुच्छेदत्वेपि" इति, अपनयनोपायपरिचयाद् दु खस्यापनेतु शक्यत्वेपि प्रकृतशास्त्रविषयज्ञानस्य तदपनयनासाधनत्वाद् यदि विवेकज्ञान साधनं न स्यात् तर्ह्यपि शास्त्रविषयो न जिज्ञास्येतेत्यर्थ ॥

पञ्चम विकल्पमाह--"सुकरस्य" इति । विवेकज्ञानापेक्षया सुकरस्येतरस्योपायान्तरस्य, विद्यमानत्वेन यदि विवेकज्ञानमन्यथासिद्ध स्यात् तर्ह्यपि शास्त्रविषयो न जिज्ञास्येतेत्यर्थ ॥

आदिम विकल्पद्वयमसङ्गतयितु कारिकाश पातयति--"तत्र न तावद्" इत्यादिना ॥

कायिकमानसिकदु खयोरेकीकरणेन दु खत्रयाभिधानमित्याशयेनाध्यात्मिकं विभजते "तत्राध्यात्मिकम्" इति, आत्मान=देह अधिकृत्य जायमानं यन्नैसर्गिकमशनायादिक यच्च धातुप्रकोपजन्यं ज्वरातीसारादि, यच्चात्मानम्=अन्त करणमधिकृत्य जायमान कामादिनिबन्धनं दुःख तत्सर्वमाध्यात्मिकमित्यर्थ । तदेवाह "शारीर मानसं च" इति, "कामक्रोध" इति, काम =इष्टविषयाभिलाष , क्रोध =अनिष्टविषयद्वेष , लोभ =सत्यपि धने तदादानेच्छा, मोह = हानोपादानविवेचनासामर्थ्यम्, भयम्=अनिष्टदर्शनजन्यत्रास , ईर्ष्या=परसम्पदुत्कर्षासहिष्णुता, विषाद =स्नेहास्पदपदार्थविच्छेदनिमित्तो व्याकुलीभाव , विषयविशेषादर्शनम्=अनवधारणात्मकमनेककोटिक ज्ञानं, संशय इत्यर्थं । एते सर्वे विकारा मनस्येवाविर्भूता सन्तो नर दु खयन्तीत्येतन्निबन्धन दु ख मानसमित्युच्यत इत्यर्थं ॥

यद्यपि निखिलमपि दु ख मनोधर्मत्वेन तज्जन्यत्वान्मानसमेव तथापि यन्मनोमात्रजन्यं तन्मानस, यच्च बाह्यनिमित्तसापेक्ष मनोजन्य तदितरदित्येव विभज्यवचनेन विभाग उन्नेय ॥

एतयोराध्यात्मिकत्वे प्रवृत्तिनिमित्तमाह "सर्वं चैतद्" इति, शारीर मानस चेत्यर्थ । आन्तरोपायसाध्यत्वाद्=साध्यशब्दोऽत्र निवर्तनीयपर्याय , असाध्योऽय रोग इत्यादौ तथा दर्शनाद्, एव च आन्तरा =शरीराभ्यन्तरे वाऽन्त करणे वा भवा =सत्तावन्तो य उपाया.

---

१ यद्यपि सद्वाऽजिहासित, वाऽशक्यसमुच्छेदम् इत्यादिपूर्वलेखानुरोधेन शास्त्रविषयज्ञानस्यानुपायत्वं, सुकरस्योपायान्तरस्य सत्त्वं वेति प्रथमान्तपाठ एवोचितस्तथापि यथाश्रुतपाठोऽप्यध्याहृत्य योजयितु शक्यत इत्याशयेनाध्याहृत्य योजयति "यदि विवेकज्ञानम्" इत्यादिना ।

२ असाध्योऽयं रोग इत्यादौ निवर्तयितुमशक्योऽय रोग इत्यर्थदर्शनात् साध्यधातोरनिवृत्त्यर्थकत्वमिति भाव ।

**बाह्योपायसाध्यं च दुःख द्वेधा, आधिभौतिकं आधिदैविकं च । तत्राधिभौतिकं—मानुषपशुसरीसृपस्थावरनिमित्तम्, आधिदैविकं यक्षराक्षसविनायकग्रहावेशनिबन्धनम् ॥**

अन्नाम्बुभेषजदमदयादानविवेचनादय साधनविशेषास्तै साध्यत्वाद् निवर्तनीयत्वाद् दु खमप्युपचारादान्तर सदाध्यात्मिकमित्युच्यते ॥

यथाऽन्तरं दु ख द्विविध तथा बाह्यमपि द्विविधमित्याह—"बाह्योपायसाध्य च दु ख द्वेधा" इति ॥

शरीराद्बहिर्भवा ये दण्डच्छत्रमणिमन्त्रादय साधनविशेषास्ते बाह्योपायास्तैर्निवर्तनीयं दु ख बाह्यमित्युच्यते, तच्च द्विप्रकारमित्यर्थ ॥

प्रकारद्वयमुद्दिशति—"आधिभौतिकम्" इत्यादिना, तत्र भूतानि=जरायुजाऽण्डजस्वेदजोद्भिज्जरूपाणि चौरवैरिकुक्कुरसिंहव्याघ्रमहिषपक्षिसर्पयूकादशमशकत्रृश्चिकनक्रमकरवृक्षशिलाप्रभृतीनि चराचरजातीयानि अधिकृत्य=निमित्तीकृत्य जायमान यद्दु ख तदाधिभौतिक, यच्च देवान्=यक्षादीन् दिव प्रभवान् वातवर्षातपशीतोष्णादीन् वा निमित्तीकृत्य जायते तदाधिदैविकमित्यर्थ । तदेवाह—"मानुष—" इत्यादिना ॥

ननु भवतु मानस दु खमान्तरोपायनिवर्त्यं शारीर तु ज्वरादि न तथा, नहि भेषजादय आन्तरा अपितु बाह्या इति कथमान्तरोपायसाध्यत्व शारीरस्य दु खस्य, यद्यभिधीयेत बाह्या अपि भेषजादय शरीरससर्गेणान्तरा इति तर्हि बाह्या मणिदण्डादयोऽपि कथ नान्तरा तेऽपि हि शरीरससर्गिण एव सन्तो दु ख शमयन्ति न यत्र तत्र स्थिता इति चेत्, अत्रोच्यते=उपायाना बाह्यत्वाविशेषेऽप्यन्त प्रवेशाप्रवेशकृतविशेषमादाय भेदोऽवसेय ॥

अय भाव —सत्य भेषजादयो बाह्यास्तथापि यथाऽन्त प्रविष्टास्ते ज्वरादिक शमयन्ति न तथा मणिदण्डादयोन्त प्रविश्यतथा कुर्वन्त्यपि तु बहिरवस्थिता एव तत्तद्दु खमपनयन्तीत्यस्ति विशेष ॥

वस्तुतस्तु आन्तरोपायसाध्यत्वाद् इत्यत्र साध्यशब्दो जन्यपर्याय, तथा च शरीराभ्यन्तरे मनसि वा भवा ये धातुवैषम्यादय कामादयो वा निमित्तविशेषास्तै साध्यत्वाद्=जन्यत्वात् शारीर मानस चान्तरमित्युच्यते, शरीरमनोबहिर्भूतसिंहव्याघ्रवर्षातपादिनिमित्तविशेषजन्यत्वाचाधिभौतिकादि बाह्यमित्युच्यत इत्यर्थोऽत्र बोध्य ॥

---

१ अन्नमन्तर्भव सदशनाया शमयति, अम्बु चान्तर्गत सतिपपासामपनयति, भेषज चान्तरं ज्वरादि नाशयति, दमश्च काम शिथिलीकरोति, दया च क्रोधमपनयति, दानञ्च लोभमुच्छिनत्ति, विवेचनञ्च मोहमुन्मूलयति इत्येवमेते सर्व आन्तरा सन्तस्तत्तद्दु खमपनयन्तीत्यान्तरोपायनिवर्तनीयत्वादान्तर सदाध्यात्मिकमित्युच्यत इति भाव । २ दण्डादिना कुक्कुरव्याघ्रादिजन्याधिभौतिकदु खस्य निवृत्ति , छत्रेणातपादिजन्यस्य, मणिना च यक्षादिजन्यस्याधिदैविकदु खस्य निवृत्तिरित्यर्थ । ३ ननु यथाऽन्तरप्रविश्यैव मणिदण्डादयस्तत्तद् दु खमपनयन्ति, तथा मनोज्ञाङ्गनालिङ्गनमप्यन्तर प्रविश्यैव काम शमयति, एवमपामार्गरूपो भेषजविशेषोपि हस्ते बद्धः सन्नन्तरप्रविश्यैव ज्वरादि शमयतीति न त्वदुक्ता व्यवस्थाऽनुगतेत्याशङ्क्य जलाहरणादिकं घटसाध्यम् इत्यत्रैव साधधातोर्जन्यार्थकत्वमादायाऽर्थान्तरमाह--" वस्तुतस्तु " इति ।

तदेतत्प्रत्यात्मवेदनीयं दुःखं रजःपरिणामभेदो न शक्यते प्रत्याख्यातुम्। तदनेन दुःखत्रिकेणाऽन्तःकरणवर्तिना चेतनाशक्तेः प्रतिकूलतयाऽभिसंबन्धोऽभिघात इति।

एतावता प्रतिकूलवेदनीयत्वं जिहासाहेतुरुक्तः।

यद्यपि न सन्निरुध्यते दुःख तथापि तदभिभवः शक्यः कर्तुमित्युपरिष्टान्निवेदयिष्यते।

---

यदुक्त प्राङ् 'न तावद्दु ख नास्ति' इति, तत्सुस्थिरमित्याह—"तदेतद्" इति, बुद्धितत्त्ववर्तिरजोगुणपरिणामविशेषात्मक निखिलजनानुभववेदनीय तदेतत् त्रिविध दुःख प्रत्याख्यातुं न शक्यते—दु ख नास्तीत्येव निराकर्तुं न शक्यतेऽनुभवसिद्धस्यापलापायोगादित्यर्थ। एतेन प्रथमविकल्पो निराकृत।

द्वितीय विकल्पं निराकर्तुमभिघातपदं व्याचष्टे—"तदनेन" इति॥ तदनेन=अनन्तराभिहितेनानुभवसिद्धेन दु खत्रिकेण सह य चेतनाशक्ते =दृक्शक्तेश्चेतनस्य पुरुषस्यानिष्टतयाऽसह्य सबन्ध सोऽभिघात इत्यर्थ॥

दु खस्य चेतनधर्मत्वं वारयितुमाह—"अन्त करणवर्तिना" इति। कथं तर्हि चेतनस्य तेन संबन्ध इति चेद्, बुद्धितत्त्वप्रतिबिम्बितत्वेन तत्सारूप्यापत्त्येत्यवेहि॥

एतेन दु खमजिहासितमिति कल्पना शिथिलीकृतेत्याह—"एतावता" इति, एतावता=अभिघातपदेन दु खसबन्धस्यासह्यत्वाख्यानेन, स्वप्रतियेष्यमाणत्वाभावरूप प्रतिकूलवेदनीयत्व जिहासाहेतुरुक्त =अभिघाताद् इति हेतुपञ्चम्या यतो दु खसबन्धोऽनिष्टोऽतस्तत् जिहासितमित्युक्तमित्यर्थ।

ननु भवतु जिहासा तथापि न शक्यनिरोध तत् साङ्ख्यनये नासत उत्पादो न वा सतो निरोध इति सत्कार्यवादाङ्गीकारेण सतो दु खस्योच्छेत्तुमशक्यत्वादित्याशङ्क्य समाधत्ते "यद्यपि न" इति, यद्यपि दु ख न सन्निरुध्यते=समूलमुच्छेत्तु न पार्यते तथापि तदभिभव=शान्तावस्थापादनेन स्थूलस्वरूपप्राप्तियोग्यताविरहरूपोऽनाविर्भाव कर्तुं शक्य इत्यर्थ.। एतच्चाग्रे विशदयिष्यत इत्याह—"इत्युपरिष्टाद्" इति।

एतेन सहेतुकस्तृतीयविकल्पोपि निराकृत इति बोध्यम्।

अयम्भाव—यथा तार्किकैरुत्पत्ते प्राग्भावस्य कारणे प्रागभाव, नाशकसामग्र्या च सतो भावस्य कारणे प्रध्वंसाभाव इत्यभ्युपेयते न तथा कापिलपातञ्जलैरपितूत्पत्ते प्राक्

---

१ दु ख नाम जगति नास्तीत्यात्मक। २ सद्वाऽजिहासितमित्याकारम्। ३ विशदीकृत चैदद्—अजा ये ताम्—इत्यस्य व्याख्याने प्रागत्रैव। ४ केचित्तु—सन्निरुध्यत इत्यत्र न सम् इत्यु पसर्ग। किन्तर्हि दु खविशेषण सद् इति तथाच यतो दु ख सद्—सत्तावद्-नित्यमिति यावत, अतो 'नाभावो विद्यते सत' इत्युक्तेर्न निरोद्धु शक्यम् इत्यर्थमाहु। ५ नित्यत्वेन दु खमशक्यसमुच्छेदमित्याकारो विकल्प इत्यर्थ। ६ अग्रे क्वापि विस्पष्टमेतस्यार्थस्यानिवेदितत्वादत्रैव विस्पष्टयितुमाह—"अय भाव" इत्यादिना।

तस्मादुपपन्नं 'तदपघातके हेतौ' इति ।

तस्य दुःखत्रयस्यापघातकस्तदपघातकः, उपसर्जनस्यापि बुद्ध्या सन्निकृष्टस्य तदा परामर्शः ।

---

सूक्ष्मावस्थया कारणे सन्नेव भावोऽनागतावस्थावान् अव्यपदेश्य इत्याख्यायते, कारणव्यापारेण च स्थूलावस्थामापन्नःसन् वर्तमानावस्थावान् उदित इत्युच्यते, नाशकसामग्र्या च कारणरूपतामापन्न सन् अतीतावस्थावान् शान्त इत्युच्यते, तथा च दु खस्यातीतावस्थीकरणमेवात्र दुःखोच्छेदो नात्यन्तनाश, नचैव तर्कयितव्य-यथाऽनागतावस्थ सूक्ष्म कार्य व्यापारेण पुनर्वर्तमानावस्थमापद्यते तथातीतावस्थमपि सूक्ष्मत्वाविशेषात्कथ न पुन स्थूलावस्थमापद्यत इति, उपलम्भाभावाद् यद्यतीतमपि कार्य्यं पुनर्वर्तमानं स्यात् तदा तदेवेदमिति कदाचित् प्रत्यभिज्ञायमानमुपलभ्येत नोपलभ्यते चातो योग्यानुपलब्ध्याऽतीतव्यक्तेरनुन्मज्जनमेव निश्चीयते ।

यदाहु कृष्णद्वैपायना.—"यथानागतवर्तमानयो पूर्वपश्चिमता, नैवमतीतस्य तस्मान्नातीतस्यास्ति समनन्तरं" इति ।

ननु यज्जिज्ञासित दु ख तत् कीदृगिति विवेचनीय न तावदतीतम्, उपभोगेनातिवाहितत्वात्, नापि वर्तमान क्षणान्तरे स्वयमेव नङ्क्ष्यमाणत्वात्, नाप्यनागत तत्सत्त्वे मानाभावात् इति चेत् अत्राहु सूत्रकारा "हेय दु खमनागतम्" इति, न च तत्सत्त्वे मानाभाव इति वाच्य, यावच्चित्तकालावस्थायिकार्य्यजननशक्त्या यावच्चित्तमनागतदु खानुमानात् स्पष्ट चैतत्-'सर्वं सर्वात्मकम्' इत्यादिना योगभाष्ये इति तत्रैव निरीक्षणीयम् । उपसहरति-"तस्मादुपपन्नम्" इति । यतो दु.खस्याभिभव कर्तुं शक्योऽत तदवघातके=दु खत्रयाभिभावके हेतौ पुरुषाणा जिज्ञासा जायत इति यत्कारिकायामभिहित तद् युक्तमित्यर्थ ।

ननु तदवघातक इत्यत्र तच्छब्देन कथ दु खत्रयस्य परामर्श, समास एकार्थीभावसत्त्वेनोत्तरपदार्थसंसृष्टस्यैव पूर्वपदार्थस्योपस्थितिविषयत्वाभ्युपगमेन केवलस्य पूर्वपदार्थस्य पृथगुपस्थितिविषयत्वाभावाद् दु खत्रयाभिघातरूपसमासैकदेशस्य दु खत्रयस्य परामर्शायोगादित्याशङ्क्य समाधत्ते—"उपसर्जनस्यापि" इति, उपसर्जनस्य=समासे विशेषणीभूतत्वेन स्वातन्त्र्येणोपस्थित्यविषयस्यापि दु खत्रयस्य, तदा=तदवघातकेत्यत्रत्यसर्वनामतच्छब्देन, परामर्शः=उन्नयनम्—अध्याहार इत्यर्थ ॥

ननु सर्वनाम्नामुत्सर्गत प्रधानपरामर्शित्वनियमात्कथ गुणीभूतस्य दु खत्रयस्य परामर्श इत्याकाङ्क्षामपनेतुमाह—"बुद्ध्या सन्निकृष्टस्य" इति, बुद्ध्या=मानस्या कल्पनया समाकृष्टस्य=ज्ञानारूढस्येत्यर्थ ॥

---

१ शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी, पा ३ सू १४ इति योगसूत्रव्याख्याने भाष्यकारा इत्यर्थ । २ समनन्तर-इत्यत्र वर्तमान इति शेष । ३ योगसू १६ पा २॥ ४ चित्ततत्त्वमनागतदु खसत्तावद् भवितुमर्हति यावच्चित्तावस्थायि कार्य्यजननशक्तिमत्वात् वह्निवद् इत्यनुमानादित्यर्थ । ५ तृतीयपादे १४ सूत्रे ॥ ६ पृथगर्थानामेकार्थीभाव सामर्थ्यं क्व पृथगर्थानि क्व चैकार्थानि, वाक्ये पृथगर्थानि समास एकार्थानि इति समर्थसूत्रे महाभाष्योक्ते पृथगर्थाना विशेषणविशेष्यभावापन्नानामेकोपस्थितिविषयत्वमेकार्थीभावत्वमित्यभ्युपगमात्।

अवघातकश्च हेतुः शास्त्रप्रतिपाद्यो नान्य इत्याशयः

अत्राऽऽशङ्कते—"दृष्टे साऽपार्था चेद्" इति, ।

अयमर्थः—अस्तु दुःखत्रयं, जिहासितं च तद् भवतु, भवतु च तत् शक्यहानं, सहतां च शास्त्रगम्य उपायस्तदुच्छेत्तुं तथाप्यत्र प्रेक्षावतां न युक्ता जिज्ञासा,

दृष्टस्यैवोपायस्य तदुच्छेदकस्य सुकरस्य विद्यमानत्वाद् ,

---

एतदुक्तं भवति—न तच्छब्देनात्र पूर्वाभिहित दु खत्रय परामृश्यतेऽपि तु बुद्धयाकृष्टत्वेन ज्ञानारूढ यद् दुःखत्रय तदेव परामृश्यते, एवविधस्थले एवविधाया एव रीतेरौत्सर्गिकत्वनियमाद् , यथाहु प्रदीपकारा—"उत्तरपदार्थान्तर्गतस्याऽपि पूर्वपदार्थस्य बुद्ध्या प्रविभागात् प्रत्यवमर्शो यथा राजपुरुषोयमित्युक्ते कस्य राज्ञ इति" ॥

ननु भवतु दु खत्रयोच्छेदके हेतौ जिज्ञासा तथापि कथ प्रकृतशास्त्रविषयजिज्ञासेत्याशङ्क्य तुरीयविकल्पं निराकुर्वन् समाधत्ते—"अवघातकश्च" इति, चोऽवधारणे भिन्नक्रमश्च प्रकृतशास्त्रप्रतिपाद्यस्तत्त्वविवेक एव दु खोच्छेदको हेतुरिति युक्ता तत्र जिज्ञासेत्यर्थ ॥

पञ्चम विकल्प निराकुर्वन्नेवकाराख्यावर्त्यमाह—"नान्य"इति ॥

नान्य इत्येव दृढीकर्तुमाशङ्कामुत्थापयति—"अत्राशङ्कते" इति, अत्र=नान्यो दु खोच्छेदक उपाय इत्यंशे ॥

कारिकाशमवतारयन् शङ्कास्वरूपमाह—"दृष्टे साऽपार्था चेद् इति" इति, दृष्टे=लोकप्रसिद्धे सुकरे भेषजादौ दु खोच्छेदके हेतौ सुलभे सति, सा=दुष्करे दुर्लभे विवेके जिज्ञासा, अपार्था=निरर्थिका इत्यर्थ ॥

एतदेव स्पष्टयितुमाह—"अयमर्थ" इति, दृष्टे साऽपार्था इति ग्रन्थस्यायमभिप्राय इत्यर्थ ।

तमेवाभिप्रायमाह—"अस्तु" इत्यादिना, विद्यता दु खत्रय, भवतु च तद् हानेच्छागोचर सभवतु च तत् शक्यहान=शक्यसमुच्छेद, सहता च शास्त्रगम्य उपायस्तदुच्छेत्तुं=समर्थश्च भवतु शास्त्रप्रतिपाद्यो विवेकस्तदुच्छेदाय तथापि नात्र विवेके जिज्ञासा युक्तेत्यर्थ ।

विवेकविषयकजिज्ञासाया अयुक्तत्वेऽन्यथासिद्धत्वरूपं हेतुमाह—"दृष्टस्यैव" इति, लोकप्रसिद्धस्य सुकरस्य दु खनाशकस्य भेषजादेरुपायस्य सत्त्वादित्यर्थ ,

---

१ अपघातकावघातकशब्दयो पर्य्यायत्वात् अपघातक इति पाठेति नार्थभेद इति ज्ञेयम् । २ तच्छब्दस्य सामर्थ्यद्वय पूर्वाभिहितवस्तुपरामर्शकत्व, ज्ञानारूढपरामर्शकत्व च तथाचात्र न तच्छब्द पूर्ववस्तुपरामर्शकोपि तु बुद्धयाकृष्टज्ञानारूढदु खत्रयपरामर्शक इति ध्येयम् । ३ अथशब्दानुशासनमितिप्रस्तावे केषा शब्दानामिति महाभाष्यमुपादाय कय्यटोक्तिरियम् । ४ शास्त्रविषयज्ञानस्यानुपायत्वाद्वेत्याकारम् । ५ यत्सन्निधौ श्रुत त विहाय यत्रापेक्षित तत्र योजनीयमित्यर्थ , । यद्वा चेति वाक्यशोभाया, सर्व वाक्य सावधारणमिति न्यायेन चैवकाराध्याहार इति । ६ सुकरस्योपायान्तरस्य सद्भावाद्वेत्याकारम् ।

तथाच लौकिकानामाभाणकः—"अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेद्, इष्टस्यार्थस्य ससिद्धौ को विद्वान् यत्नमाचरेद्" इति

सन्ति चोपायाः शतशः शारीरदुःखप्रतीकारायेषत्करा भिषजावरैरुपदिष्टाः,

मानसस्यापि सन्तापस्य प्रतीकाराय मनोज्ञस्त्रीपानभोजनविलेपनवस्त्रालङ्कारादिविषयप्राप्तिरुपायः सुकरः,

एवमाधिभौतिकस्य दुःखस्य नीतिशास्त्राभ्यासकुशलतानिरत्ययस्थानाध्यासनादिः प्रतीकारहेतुरीषत्करः,

---

सुकरमुपेक्ष्य दुष्कराचरण न योग्यमिति लोकसवादेनापि सिद्धमित्याह—"तथा च" इति, लौकिकाना=लोकव्यवहारविदा प्राकृताना जनानाम्,—आभाणक=प्रसिद्धप्रवाद इत्यर्थ ।

तमेवाऽऽभाणकमाह—"अर्के" इति, । यथा मधुकामस्तदन्वेषणाय पर्वतं प्रस्थित सन् यदि मार्ग एव अर्कवृक्षे मधु विन्देत तर्हि पर्वत किमर्थ किंनिमित्त गच्छेतापि तु न गच्छति, एवम् इष्टस्यार्थस्य=अभिलषितवस्तुन ससिद्धौ=अनायासेन निष्पत्तौ सत्या पुनस्तन्निष्पत्त्यर्थं मायाससाध्य यत्न को विद्वाननुतिष्ठेन्न कोपीत्यर्थ ।

विवेकापेक्षया के सुकरा उपाया इत्याकाङ्क्षाया सुकरान् दृष्टोपायानाह—"सन्ति" इति, भिषजावरै=वैद्यश्रेष्ठैश्चिकित्साकुशलैर्धन्वन्तरिचरकप्रमुखै शारीरदु खापनोदायोपदिष्टा अनेक उपाया ईषत्करा=अनायाससपाद्या —सुकरा विद्यन्त इत्यर्थ । शारीरदु खप्रतीकारकर सुकरमुपायमभिधाय मानसतापप्रतीकारकर सुकरमुपायमाह—"मानसस्यापि" इति, तत्तदभिलषितवनिताऽऽलिङ्गनासवपानसदन्नाशनचन्दनविलेपनवसनभूषणात्मकविषयप्राप्तिरूप उपायो मानससन्तापापहारायालमित्यर्थ ॥

व्याघ्राद्युत्थदु खप्रतीकारकरमुपायमाह—"एवम्" इति, आधिभौतिकस्य दु खस्य प्रतीकारहेतु नीतिशास्त्राभ्यासकुशलता=दंष्ट्रिण शृङ्गिणो दूरत परिवर्ज्या, "नादण्डो बहिर्गच्छेद्," इत्यादिबार्हस्पत्यौशनसकामन्दकीयनीतिशास्त्राभ्यासनिपुणता, तथा निरत्ययस्थानाध्यासनादि =निर्बाधनिरुपद्रवपरिखोपेतमणिमन्त्राद्यन्तर्हितगिरिदुर्गादिरूपस्थानावलम्बनादिरुपाय सुकर इत्यर्थ ॥

यक्षाद्युपद्रवविद्रावकमुपायमाह—"तथा" इति, मणिमन्त्रौषधाद्युपयोग ="दोषोपसर्गप्रभवाश्च ये ते नोपद्रवास्त समभिद्रवन्ति, गुणै समुख्यै सकलैरुपेत य पद्मराग प्रयतो बिभर्ति" इत्यादिना मणिप्रकरणे मणिधारणस्य तत्तदुपद्रवविद्रावकत्वस्मरणाद्, मन्त्रानुष्ठानस्य च तत्तच्छास्त्र उपद्रवापनोदकत्वप्रसिद्धत्वाच्च 'कृष्णामरीचसिन्धूत्थमधुगोरोचनाकृतम् । अञ्जन सर्वदेवादिकृतोन्मादहर परम्' इत्यादिनौषधस्यापि तत्तदुपद्रवविद्रावकत्वाभिधानाच्च मणिमन्त्रौषधाद्युपयोग आधिदैविकदु खस्य प्रतीकारहेतुरित्यर्थ ॥

---

अक्के—इति पाठे तु—समीपे—गृहकोणे, इति वार्थो बोध्य, वस्तुतस्तु जैमिनीयसूत्रभाष्ये शबरस्वामिभि पथि जातेऽर्के मधूत्सृज्य तेनैव पथा यथा मध्वर्थिन पर्वत न गच्छेयुरित्यभिधाय अर्के चेन्मधु विन्देत' इत्येवमुपन्यासाद् अर्के—इत्येव पाठ साधीयान् ।

तथाऽऽधिदैविकस्यापि दुःखस्य मणिमन्त्रौषधाद्युपयोगः सुकरः प्रतीकारोपाय इति ॥

निराकरोति—"न" इति, कुतः—'एकान्तात्यन्ततोभावाद्'

एकान्तः=दुःखनिवृत्तेरवश्यम्भावः, अत्यन्तः=निवृत्तस्य दुःखस्य पुनरनुत्पादः, तयोरेकान्तात्यन्तयोरभाव एकान्तात्यन्ततोऽभाव इति, षष्ठीस्थाने सार्वविभक्तिकस्तसिः,

एतदुक्तं भवति—यथाविधिरसायनादिकामिनीनीतिशास्त्राभ्यासमन्त्राद्युपयोगेपि तस्य तस्याध्यात्मिकादेर्दुःखस्य निवृत्तेरदर्शनादनैकान्तिकत्वं, निवृत्तस्यापि पुनरुत्पत्तिदर्शनादनात्यन्तिकत्वम्, इति सुकरोप्यैकान्तिकात्यन्तिकदुःखनिवृत्तेर्न दृष्ट उपाय इति नापार्था जिज्ञासेत्यर्थः,

यद्यपि दुःखममङ्गलं तथापि तत्परिहारार्थत्वेन तदवघातो मङ्गलमेवेति युक्तं शास्त्रादौ तत्कीर्तनमिति ॥ १ ॥

---

लौकिकेनोपायेन नाभिलषितदु खनिवृत्ति सिद्ध्यतीत्याशयेन 'न' इति कारिकाशमवतारयति—"निराकरोति न इति" इति, । 'न' इति पदेन 'साऽपार्था' इत्याशङ्कामपनुदतीत्यर्थ ॥

लौकिकोपायनिराकरणे हेतु पृच्छति 'कुत' इति,

न दु खनिवृत्तिमात्रमभिलषितमपि त्वैकान्तिकात्यन्तिकदु खनिवृत्ति, सा च दृष्टोपायान्न लभ्येत्याशयेन कारिकागत हेतुमाह—"एकान्तात्यन्ततोभावाद्" इति, दु खनिवृत्तावेकान्तत्वम् उपायानुष्ठानानन्तर नियमेन भवनशीलत्वम् अत्यन्तत्व च भविष्यद्दु खासहवर्तित्व तथा च--दृष्टादुपायाद् एकान्तात्यन्तदु खोच्छेदाभावान्न दृष्टे हेतौ जिज्ञासा कार्ये[2]त्यर्थ,

एतदेवैकान्तात्यन्तपदार्थाख्यानविग्रहाभिधानद्वारा दर्शयति--'एकान्त' इत्यादिना,

फलितमाह--"एतदुक्त भवति"इत्यादिना, 'रसायनादि' इति, 'यज् जराव्याधिविध्वसि भेषजं तद्रसायनम्' इति वैद्यकशास्त्राद्रसायनपदेन भेषज गृह्यतेऽन्यत्प्राग् व्याख्यातम्।

उपसहरति--"इति सुकरोपि" इति, इतिशब्दो हेत्वर्थे, यत एवमत सुकरोपि दृष्ट उपायस्तथाप्यैकान्तिकात्यन्तिकदु खनिवृत्तेर्न स उ[3]पाय इत्यतस्तमुपेक्ष्य विवेक जिज्ञासा न निरर्थिकेत्यर्थ ।

एतेन 'न दृष्टात्[4]तत्सिद्धिर्निवृत्तेप्यनुवृत्तिदर्शनात्' इति साङ्ख्यसूत्रार्थ सगृहीत ॥

---

१ नात्र तसिल् प्रत्यय किमादिपञ्चम्यन्तत्वाभावात् अपि तु आद्यादेराकृतिगणत्वात् 'आद्यादिभ्य उपसङ्ख्यानम्' ५।४।४४। इत्यनेन षष्ठ्यन्तात तसिरिति भाव । २ दृष्ट उपाये नियमेन दु खनिवर्तकत्वरूपमेकान्तत्वं नास्ति, दृष्टोपायजन्यदु खनिवृत्तौ च भविष्यद्दु खासहवर्तित्वरूपमत्यन्तत्व नास्तीत्यपि ज्ञेयम्। ३ अहो विमल जल नद्या कूले महिषश्चरति--इत्यत्र नद्या इव उपायपदमावर्त्य व्याख्येयमित्याशयेन पुनरुपायपदं प्रयुङ्क्ते "स उपाय" इति। ४ (अ १ सू २)।

स्यादेतद्-मा भूद्दृष्ट उपायो वैदिकस्तु ज्योतिष्टोमादिः संवत्सरपर्य्यन्तः कर्मकलापस्तापत्रयमेकान्तमत्यन्त चापनेष्यति,

श्रूयते हि 'स्वर्गकामो यजेत' इति।

स्वर्गश्च—

"यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्,

---

ननु "मङ्गलाचरण शिष्टाचारात्फलदर्शनाच्छ्रुतितश्च" इति[1] साङ्ख्यसूत्राच्छास्त्रादौ मङ्गलाचरणस्यावश्यकत्वात् 'प्रशस्ताचरण नित्यमप्रशस्तविवर्जनम्, एतद्धि मङ्गल प्रोक्त मुनिभिस्तत्त्वदर्शिभि" इति वचनेन प्रशस्ताचरणस्यैव मङ्गलपदार्थत्वादत्र शास्त्रादौ दु.खेत्यप्रशस्तोच्चारण तद्विरुद्ध कथमाचरितमित्याशङ्कामपाकरोति--"यद्यपि"इत्यादिना ॥

दृष्टवदिति द्वितीयकारिकामवतारयितु मीमासकाशङ्कामुत्थापयति—"स्यादेतद्" इति, दृष्ट उपायो दु खनिवृत्तेर्हेतुर्माभूत्=नास्ति इति यदभिहितमेतत्स्याद्=भवतु नाम वैदिकस्तूपायोऽवश्य दुःखत्रयमत्यन्तम् अपनेष्यति=दूरिकरिष्यतीति पुनरपि विवेके जिज्ञासाऽपार्था इत्यर्थ.

विवेकापेक्षयवैदिकस्य सुकरत्वमाह—'सवत्सरपर्य्यन्त' इति, अनेकजन्माभ्यासपरम्परा साध्यविवेकापेक्षयाऽल्पकालसाध्य इत्यर्थ ॥

वैदिककर्मकलापस्य तापत्रयापनोदकत्वे प्रमाणमाह—"श्रूयते हि स्वर्गकामो यजेत"इति॥

ननु स्वर्गविषयाभिलाषवान् यागेनेष्ट स्वर्ग सपादयेदित्येव श्रुत्या बोध्यते नतु यागेनात्यन्तिकी दु खनिवृत्ति सपादयेदित्याम्नायते तत्कथमेतत्प्रकृतार्थे प्रमाणमित्याशङ्क्यैतादृशदु खनिवृत्तेरेव नामान्तर स्वर्ग इत्याशयेन स्वर्ग लक्षयति–"स्वर्गश्च" इति, स्वर्गश्च इति=इति श्रुत्याभिहितो दु खविरोधी सुखविशेष इत्यग्रिमेणान्वय ॥

एतादृशसुखविशेषस्य स्वर्गपदार्थत्व इति पदसूचितामर्थवादरूपा श्रुतिमाह--"यन्न दु खेन सम्भिन्नम्" इति, दु खेन न सम्भिन्न=दु खसम्पर्कविधुर—दु खासम्मिश्रमिति,

ननु किमिद दु खासम्मिश्रत्व, न तावद्दु खासामानाधिकरण्यम्--असम्भवाद्, नहि स्वर्गप्राप्तेरर्वाग् यद्दु खाधिकरणमात्मान्त करण[4] वा ततोऽधिकरणान्तर स्वर्गस्येति सम्भव , नापि दु खासमानकालिकत्व तद्, अस्मदादिसुखस्यापि तथात्वेन[5] विशेषाभावाद् नहि न सुख दु.खकाले सद् येनेद ततो विशिष्येत इति चेद् , अत्रोच्यते—इतरविशेषणसहकारेण लौकिकसुख विलक्षणमोक्षसलक्षणसुखविशेषस्येत्रानेनाभिधानेनोक्तदोषाभावात्, तथाहि—यथा लौकिकं सुख स्वसमयेऽन्यसुखाप्राप्तिनिबन्धनविषादेनानुषक्त न तथेदम् अपि तु–'दु खेन न सभिन्नम्,' इति= वर्तमानकालिकान्याभिलषिताप्राप्तिनिबन्धनदु खासम्मिश्रमित्यर्थ ॥

---

१ (अ ५ सु १) २ यद्वा पूर्वोक्त मा भूद् एतद्=वक्ष्यमाण नु स्यादित्यर्थोऽत्रावसेय ॥ ३ 'यन्न दु खेन सभिन्नम्' इति भट्टवार्तिकमिति केचित्, स्मृतिरियमिति विज्ञानभिक्षव , परिमलादिषु प्रामाणिकग्रन्थेषु श्रुतित्वेन व्यवहारादर्थवादरूपा श्रुतिरियमिति मादृशा , । ४ नैयायिकादिमत आत्मा दु खाधिकरण, साङ्ख्यादिमतेऽन्त करणमधिकरणमित्यर्थ । ५ तथात्वेन= दु खसमानकालासत्त्वेन। ६ इदं=स्वर्गपदाभिधेय सुखम् ।

अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्"
इति दुःखविरोधी सुखविशेषः,
स च स्वसत्तया समूलघातमपहन्ति दुःखं

किञ्च लौकिक सुख यथा सुखसाधनस्रक्चन्दनादिसपादनायासरूपप्राक्कालिकदु खानुषक्त तथा नेद किन्तु "अभिलाषोपनीतम्" इति, सकल्पमात्रेणैवोपनीत=सामीप्यमाप्तं नतु साधनसम्पादनायासाधीनमित्यर्थ ॥

किञ्च यथा लौकिक सुखमन्तराऽन्तरा तिरोभूय विरलप्रवाहशील भवति नेदं तथाविधमपितु—'अनन्तरम्[१]' इति, व्यवधानहीनम्=अविरलसलग्नप्रवाहशीलत्वेन चिरकालस्थायित्वादुत्तरकालिकदु खासम्मिश्रमित्यर्थ ।

किञ्च यथा सार्वभौमादिसुख लौकिक चिरकालस्थाय्यप्यन्ते ग्रस्त भवति न तथेदं ग्रस्तमपि तु "नचग्रस्तम्" इति, नाशाप्रतियोगि-अक्षयि इति यावद्, एवविध यद् त्रैकालिकदु खासम्मिश्रं सुख तत् स्व पदास्पदं=स्वर्गपदाभिधेयमित्यर्थ ॥

तन्त्रवार्तिके[२] कुमारिलभट्टैरपि 'स्वर्गशब्देनापि नक्षत्रदेशो वा वैदिकप्रवादपौराणिकयाज्ञिकदर्शनेनोच्यते, यथा हि वेदे 'ये हि जना पुण्यकृत स्वर्गं लोक यान्ति तेषामेतानि ज्योतींषि नक्षत्राणि' तथा 'यथैष ज्योतिष्मत पुण्यलोक जयति' इति, यदि वेतिहासपुराणोपपन्नं मेरुपृष्ठम् इति मतान्तरेण स्वर्गपदार्थमभिधाय 'अथवाऽन्वयव्यतिरेकाभ्या विभक्तं केवलमेव सुख यत्सवत्सरादिष्वनुभूयमान दु खसाधनशीतोष्णक्षुत्पिपासादिसमस्तद्वन्द्वरहितम्' इत्यादिनेदृग्विध एव स्वर्गपदार्थोऽभिहित , । अत्र[३] यदन्यद्वचनीय तदेतत्पूर्वपक्षसमाधानावसरेऽभिधास्यते ॥

वैदिकेनोपायेनेदृग्विधे स्वर्गेऽवाप्ते सत्यात्यन्तिकी दु खनिवृत्तिरर्थाद् सिद्धा भवतीत्याशयेनाह—"स च" इति, सच स्वर्ग स्वसत्तय=स्वीयोदारावस्थया समूलघात=मूलेन=कारणेनाधर्माख्येन दुरदृष्टेन सह दु ख हन्तीति न पुनर्दु खोद्भवशङ्केत्यर्थ ॥

ननु "तद्[४] यथेह कर्मचितो लोक क्षीयत एवमेवामुत्र पुण्यचितो लोक क्षीयेत" इति

१ अन्तर-शब्दो व्यवधानवाची, निर्=नास्ति-अन्तरो=व्यवधान यस्मिन् तदनन्तरमिति, तदेवाह-'व्यवधानहीनम्' इति, प्रथमत सुख तदव्यवहितोत्तरक्षणे किञ्चिद्दुख, तदनु पुन सुखमित्येवविच्छेदराहित्येनाविच्छिन्नमित्यर्थ । २ अ १ पा ३ अधि २६ । वैदिकेन प्रकृष्टेन स्पष्टेन वादेन, तन्मूलेन च पौराणिकाना मातल्यर्जुनसवादादिगतेन दर्शनेन, याज्ञिकाना 'धाइ गन्म स्तुव सज्योतिषा भूमा' इत्यादिप्रोत्साहनमन्त्रार्थानुसधानरूपेण दर्शनेनेत्यर्थ , वैदिकप्रवादद्वय (यथावेद) इत्युपक्रम्योदाहृतम्, इत्येतदर्थं इति न्यायसुधाकार सोमेश्वरभट्ट । ३ 'यन्न दु खेन' इत्यनेन नाकपृष्ठविशेष स्वर्गपदार्थत्वेनाभिहित उताहो मोक्षरूपसुखविशेष इत्याकाङ्क्षायामाह-"अत्र यद्" इत्यादिना । ४ इह-लोके कर्मचित =कृषिव्यापारादिकर्मणा सपादित लोक =धान्यधनादि क्षीयते तद्यथाऽय दृष्टान्त एवमेव अमुत्र=लोकान्तरेपि, यागादिजन्यपुण्यसपादित सुधापानाप्सरोरमणादिरूपो भोगोपि क्षीयत इति श्रुत्यर्थ , "यत्कृतक तदनित्यम्" इति व्याप्तिमूलेय श्रुतिरिति भाव ,

नचैष क्षयी, तथाहि श्रूयते "अपाम सोमममृता अभूम" इति,
तत्प्रक्षये[1] कुतोऽस्यामृतत्वसम्भवः,
तस्माद् वैदिकस्योपायस्य तापत्रयप्रतीकारहेतोर्मुहूर्तयामाहोरात्रमाससंवत्सरादिनिर्वर्तनीयस्यानेकजन्मपरम्परायाससम्पादनीयाद्विवेकज्ञानादीषत्करत्वात्पुनरपि व्यर्था जिज्ञासेत्याशङ्क्याह—

**दृष्टवदानुश्रविकः, स ह्यविशुद्धिक्षयातिशययुक्तः,**
**तद्विपरीतः श्रेयान्, व्यक्ताव्यक्तज्ञविज्ञानाद् ॥ २ ॥**

श्रुत्या कर्मजन्यस्वर्गस्य क्षयित्वश्रवणेन कथ 'नच ग्रस्तम्' इत्यनेनाक्षयित्वाभिधानमित्याशङ्का प्रतिक्षिपति—"नचष क्षयी" इति,

क्षयित्वाभावे प्रमाणमाह—"अपाम सोमम्" इति,

"अपाम सोमममृता अभूमाऽगन्मज्योतिरविदाम देवान्, किन्नूनमस्मान् कृणवदराति किमु धूर्तिरमृतमर्त्यस्य" इति हि समग्रो मन्त्र, इय च श्रुतिर्भगवता गौडपादाचार्येणेत्थं व्याख्याता कदाचिदिन्द्रादीना देवाना कल्पे[2] आसीत् कथ वयममृता अभूमेति, विचार्य्य यस्माद्वयम् अपाम सोमम्=पीतवन्त सोमं तस्माद् अमृता अभूम=अमरा भूतवन्त इत्यर्थ किंच अगन्म=गतवन्तो—लब्धवन्तो ज्योति=स्वर्गमिति, अविदाम देवान्=दिव्यान् विदितवन्त, एवं च 'किन्नूनमस्माँस्तृणवदराति '=नून=निश्चित किम् अराति=शत्रुरस्मान् तृणवत्कर्तेति, 'किमु धूर्तिरमृतमर्त्यस्य'=धूर्ति=जरा हिंसा वा किं करिष्यति अमृतमर्त्यस्येति[3],

नन्वनया श्रुत्या स्वर्गिणाममृतत्वमेवाभिहित न स्वर्गस्याक्षयित्वमित्यत आह—"तत्प्रक्षये" इति, स्वर्गस्य प्रक्षये सति अमृतत्वासम्भवाद् अमृतत्वश्रुत्यन्यथानुपपत्त्या स्वर्गस्याक्षयित्व कल्पनीयमित्यर्थ,

एवं चामृतत्वश्रुतिविरोधात् "तद्यथेह" इत्यादिश्रुतिर्न स्वार्थपराऽपि तु विधेयसंन्यासपुरस्सरज्ञानफलप्रशसनार्थं निन्दार्थवादरूपेति बोधितम्,

कर्ममीमासकाशङ्कामुपसहरति—"तस्माद्" इति, तस्माद्=उपदर्शिताद् हेतो वैदिकस्योपायस्य तापत्रयनिराकरणकारणस्य विवेकज्ञानरूपादुपायात्सुकरत्वात्पुनरपि विवेकज्ञाने जिज्ञासा व्यर्थेत्यन्वय,

वैदिकस्य सुकरत्वे हेतुमाह—"मुहूर्त" इति, तत्र मुहूर्तमात्रनिर्वर्तनीय सन्ध्योपासनादि, यामनिर्वर्तनीय पिण्डपितृयज्ञादि, मासनिर्वर्तनीय मासाग्निहोत्रादि, सवत्सरनिर्वर्तनीयं ज्योतिष्टोमादि, इत्यर्थ,

विवेकज्ञानस्य दुष्करत्वे हेतुगर्भित विशेषणमाह-"अनेकजन्मपरम्परायाससम्पादनीयाद्[4]" इति

१ तत्क्षये-इति, तदपक्षये—इति च पाठान्तरमपि सम्यक् । २ कल्प=समाज —सभेति यावत् । ३ मर्त्यशब्दोऽत्र शरीरवाची व्यत्ययेन च बहुत्व एकवचन, तथाच—मरणरहितशरीवतामस्माक जरादि नास्तीत्यर्थ । ४ अनेकजन्मपरम्पराया यो ज्ञानसाधनानुष्ठानाभ्यासरूपर आयासस्तेन सम्पादनीयादित्यर्थ ।

गुरुपाठादनुश्रूयत इत्यनुश्रवो वेदः, एतदुक्तं भवति-श्रूयत एव परं न केनापि क्रियत इति, तत्र भव आनुश्रविक इति, तत्र प्राप्तो ज्ञात इति यावत्,

आनुश्रविकोपि कर्मकलापो दृष्टेन तुल्यो वर्तत इति,

ऐकान्तिकाऽऽत्यन्तिकदुःखप्रतीकारानुपायत्वस्योभयत्रापि तुल्यत्वात्,

यद्यपि चाऽऽनुश्रविक इति सामान्येनाभिहितं तथापि कर्मकलापाभिप्रायं द्रष्टव्यं विवेकज्ञानस्याप्यानुश्रविकत्वात्,

---

आनुश्रविकशब्दस्य योगार्थं प्रतिपिपादयिषुरानन्तर्य्यार्थकानूपसर्गापेक्षितावध्याकाङ्क्षा शम, यति "गुरुपाठाद्" इति, गुरुकर्तृकोच्चारणानन्तरमित्यर्थ,

तदेव स्पष्टयति—"एतदुक्तम्" इत्यादिना, विद्यासम्प्रदायप्रवर्तकब्रह्मादिगुरुपरम्परया श्रूयत एव य स वेद इत्यर्थ,

एवकारव्यावर्त्यमाह—"न केनापि क्रियत" इति, भारतादिवन्न केनापि निर्मित इत्यर्थ,

तत्र भव इत्यत्र भवपदस्य जन्यार्थकत्व वारयितुमाह—"तत्र प्राप्त" इति, वेद उपलब्ध इति यावद्, तदेवाह—"तत्र ज्ञात" इति, वेदबोधित इत्यर्थ,

किमखिल एव वेदबोधित उपाय आनुश्रविकशब्देन गृह्यते, नेत्याह—

"कर्मकलाप"इति, ज्योतिष्टोमप्रमुखयागसमूहो य आनुश्रविक सोऽपि लौकिकेनोपायेन सम इत्यर्थ,

केनांशेन साम्यमित्यपेक्षायामाह—"ऐकान्तिक" इत्यादिना, समूलदु खोपरमसाधनत्वाभावस्य उभयत्रापि=लौकिके वैदिके चोपाये तुल्यत्वादित्यर्थ,

एतेन "अविशेषश्चोभयो." इति साङ्ख्यसूत्रार्थो दर्शित ।

ननु 'दृष्टवदानुश्रविक' इत्यनेन साधारण्येन वैदिकोपायमात्रस्य दृष्टसाम्याभिधानेन कथ तद् विहाय तदेकदेशकर्मकलापोपायपरतया व्याख्यातमित्याशङ्क्य समाधत्ते—"यद्यपि" इति, आनुश्रविकपदेनात्रकर्मकलापग्रहण एव वक्तुस्तात्पर्य्यं न वैदिकोपायमात्रग्रहण इत्यर्थ,

आनुश्रविकोपायमात्रग्रहणे दोषमाह—"विवेकज्ञानस्याप्यानुश्रविकत्वाद्" इति, साधारण्येन ग्रहणे हि विवेकज्ञानस्यापि वैदिकोपायत्वात् तस्यापि दृष्टोपायसाम्यमभिहित स्यात्, तच्चानिष्टमित्यर्थ,

---

१ आनुश्रविक इत्यभिधान कर्मकलापाभिप्रायमित्यर्थ, 'कर्मकलापाभिप्राय' इति पुँल्लिङ्गपाठे तु, 'आनुश्रविक इति प्रयोग कर्मकलापाभिप्राय इत्येव योज्यम्। २ अनु श्रूयत इत्यत्र 'अनु' इत्युपसर्ग आनन्तर्य्यार्थक, आनन्तर्य्यं चावधिसापेक्ष भवति 'कस्मादनु' इति, तदेतदपेक्षा पूरयितु 'गुरुपाठाद्' इति पञ्चम्यन्तमध्याहृतमित्यर्थ । ३ गुरुमुखाद् इति पाठान्तरमपि सम्यक् । ४ अ प्र सू ६ उभयो=लौकिकवैदिकोपाययो, अत्यन्तदु खनिवृत्त्यसाधकत्वे अविशेष=साम्यमित्यर्थ । ५ कर्मोपास्तिज्ञानात्मकस्योपायसमुदायस्येत्यर्थ ।

तथा च श्रूयते—"आत्मा वा अरे द्रष्टव्यः" ( प्रकृतितो विवेक्तव्यः ) "न स पुनरावर्तत" इति ।

अस्या प्रतिज्ञायां हेतुमाह—"स ह्यविशुद्धिक्षयातिशययुक्तः"

अविशुद्धिः=सोमादियागस्य पशुबीजादिवधसाधनता,

---

विवेकज्ञानस्य वैदिकत्वे श्रुति प्रमाणमित्याह—' तथाच श्रूयते" इति, द्रष्टव्य इति श्रौत पद व्याचष्टे—"प्रकृतित" इति,

नह्नु भवतु विवेकज्ञानस्य वैदिकत्वमस्तु च तस्यापि दृष्टोपायतुल्यत्व किमेतावता वश्छिन्न-मिति शङ्कायामाह—"न स पुनरावर्तत' इति, स =अहङ्ग्रहोपासनादिना ब्रह्मलोक गत उपासक पुनस्ततोऽवरुह्य जन्मान्तर नानुभवत्यपि तु तल्लोकाधिष्ठातृणा ब्रह्मणा सह परं पदं प्रविशतीत्यर्थ

एषा श्रुति कैमुतिकन्यायेनात्रोपन्यस्ता प्रकृतोपयोगिन्यस्तु "तमेव विदित्वाति मृत्युमेति' "तमेव विद्वानमृतो भवति" "तरति शोकमात्मविद्" इत्यादय उदाहार्य्या,

तथाच विवेकज्ञानस्य दृष्टोपायसाम्याभ्युपगमे तस्यामृतहेतुत्व श्रूयमाण विरुध्येतात सामान्येनाभिधानेपि कर्मकलापाभिप्रायेण व्याख्येयमिति भाव ,

वैदिकस्योपायस्य दृष्टोपायसाम्यसाधक कारिकागत हेतुमवतारयति—"अस्यां प्रतिज्ञा-याम्" इति, वैदिकोप्युपायो लौकिकोपायवन्नामृतत्वसाधक इत्यभ्युपगमे साधकमाहेत्यर्थ ,

तदेव साधकमाह—"स ह्यविशुद्धिक्षयातिशययुक्त" इति, हि=यत स =वैदिक उपायोऽ-विशुद्धिक्षयातिशययुक्तोतो दृष्टवदित्यर्थ ,

तत्राविशुद्धिशब्दार्थमाह—"अविशुद्धि" इति, साध्यसोमादियागनिरूपितां या पशुबीजादि-वधनिष्ठा साधनता=कारणता सैवात्राविशुद्धिरित्यर्थ ।

एतदुक्त भवति—होमदेवपूजनदक्षिणाप्रदानादिरूपपुण्यजनककर्मसाध्यम्य सोमयागादेर्यत् पशुहिंसनबीजवधादिरूपपापजनककर्मसाध्यत्व तदेव सोमयागादेरविशुद्धियुक्तत्वम् ,

योगभाष्ये भगवता व्यासदेवेनापि "शुक्लकृष्णा बहि साधनसाध्या तत्र परपीडानुग्रहद्वारेण कर्माशयप्रचयं"

---

१ उपासकदशानिरूपिकाया 'न स पुनरावर्तत' इति श्रुते , प्रकृते विवेकज्ञाने क उपयोग इत्याशङ्कायामाह 'कैमुतिक' इति, यदा किलाविद्यावतामपि ब्रह्मोपासकानामपुनरावृत्तिस्तदा विध्वस्ताविद्यावता ब्रह्मज्ञानिनामपुनरावृत्तिर्भवतीति किमु वक्तव्यमिति न्यायेनेत्यर्थ । २ सोमा-दियागस्येत्यत्र निरूपितत्व षष्ठ्यर्थ, इत्यर्थ । ३ चतुष्टयी खलु कर्मजाति तत्र तमोमूला दु खमात्रफलिका ब्रह्महत्यादिरूपा कृष्णा, रजोमूला दु खोपसर्जनसुखफलिका यागादिरूपा शुक्लकृष्णा, सत्त्वमूला सुखमात्रफलिका सन्ध्योपासनप्रणवजपादिरूपा शुक्ला, गुणाहेतुका निजान-न्दफलिका सम्प्रज्ञातसमाध्यादिरूपाऽशुक्लकृष्णा, तथाच सूत्र "कर्माशुक्लाकृष्ण योगिनस्त्रिविधमि-तरेषाम्" पा ४ सू १ । एव च यागस्य शुक्लकृष्णकर्मरूपत्वेनाविशुद्धियुक्तत्व स्पष्टमिति बोध्यम् । ४ 'यद् यावद् बहि साधनसाध्य तत्र सर्वत्रास्ति कस्य चित् पीडा, नहि व्रीह्यादिसाधनेपि यागादिकर्मणि परपीडा नास्ति अवघातादिसमये पिपीलिकादिवधसम्भवाद् अन्ततो बीजादिव धेन स्तम्बादिभेदोत्पत्तिप्रतिबन्धाद्, अनुग्रहश्च दक्षिणादिना ब्राह्मणादे ' इत्येतद्भाष्यार्थ इति

## यथाह स्म भगवान् पञ्चशिखाचार्य्यः—

इत्येव यागस्याऽविशुद्धियुक्तत्वमभिहितम्¹,

एव चं यथा यागाङ्गभूतदीक्षणीयादिदक्षिणावसानपुण्यकर्मणाम्मुत्र सुख जन्यत एवं यागाङ्गभूतपशुबीजादिवधपापकर्मणा दु खमपि जन्येत तथा च यथा लौकिकोपायस्य दु खसमिश्रसुखजनकत्व तथा वैदिकोपायस्यापि दु खसम्भिन्नसुखजनकत्वमिति सोपि दृष्टवदिति भाव² ।

यागादेरविशुद्धियुक्तत्वे पञ्चशिखाचार्य्यवचन प्रमाणयति—"यथाह" इत्यादिना,

योगभाष्ये³ तीव्रसवेगेनानुष्ठितस्य कर्मणो दृष्टजन्मवेदनीयत्वमभिधायान्यस्यादृष्टजन्मवेदनीयस्यानियतफलस्य कर्मणस्तिस्रो गतयोऽभिहिता "कृतस्याविपक्वस्य नाश" इत्येका⁴ "प्रधानकर्मण्यावापगमनम्"⁵ इति द्वितीया "नियतविपाकप्रधानकर्मणाभिभूतस्य वा चिरमवस्थानम्"⁶ इति तृतीया, तत्र प्रधानकर्मण्यावापगमने प्रमाणतया "स्यात् स्वल्प सङ्कर सपरिहार सप्रत्यवमर्ष कुशलस्य नापकर्षायाल कस्मात्, कुशल हि मे बह्वन्यदस्ति यत्रायमावाप गत स्वर्गेऽप्यपकर्षमल्प करिष्यति" इत्यय पञ्चशिखग्रन्थ उद्धृत, तत्रत्य प्रकृतोपयुक्त भागमत्र प्रमाणतयोद्धरति—"स्वल्प सङ्कर" इति।

---

वाचस्पतिमिश्रा, "शारीरजै कर्मदोषैर्याति स्थावरता नर" इति मानवरवाद् व्रीह्यादिबीजानामपि प्राणित्वाविशेषात् तत्पीडनमपि हिंसनमेव, अत एव तत्तद्बीजपीडकाना तैलिकशौण्डिकाना सौनिकसाम्यमभिहित मनुना "दशसूनासमश्चक्री दशचक्रसमो ध्वजी" इत्यादिनेति भाव ।

१ यथा दक्षिणाप्रदानादिपुण्यकर्मयोगेन शुक्लात्मत्वाद् यागादेर्विशुद्धियुक्तत्व तथा पशुवधादिपापकर्मयोगेन कृष्णात्मत्वादविशुद्धियुक्तत्वमभिहितमित्यर्थ ।

२ अविशुद्धियुक्तत्वकथनेन कथ दृष्टसाम्य नहि दृष्टे मणिमन्त्रादिरूप उपायेऽविशुद्धियोग कश्चित्प्रतीयत इत्याकाङ्क्षाया तात्पर्य्येण दृष्टसाम्यमाह—"एव च" इत्यादिना। ३ पा ३ सू १३ अत्युग्रपुण्यपापरूपकर्मण इहैव सद्य फलप्रदातृत्वात् दृष्टजन्मवेदनीयत्वम्, इतरस्य च परत्र फलप्रदत्वेनाऽदृष्टजन्मवेदनीयत्व, तत्रादृष्टजन्मवेदनीयकर्मणो नियतफलकालनिर्धारणासत्त्वेन तस्य तिस्रो गतयो भवन्तीत्युक्तमित्यर्थ । ४ अदत्तफलस्य कस्य चित्पापकर्मण प्रायश्चित्तादिना नाश इत्येका गतिरित्यर्थ । ५ प्रधाने कर्मणि ज्योतिष्टोमादिके तदङ्गस्य पशुहिंसादेरावापगमन, द्वे खलु हिंसादे कार्य्ये प्रधानाङ्गतया विधानाद् यागोपकार 'न हिंस्याद्' इति निषिद्धत्वादनर्थश्च, तत्र प्रधानाङ्गतयाऽनुष्ठानादप्रधानतैवेत्यतो न द्रागित्येव प्रधाननिरपेक्षा सती स्वफलमनर्थं प्रसोतुमर्हति किन्त्वारब्धविपाके प्रधाने साहायकमाचरन्ती व्यवतिष्ठते, प्रधानसाहायकमाचरन्त्याश्च तस्या स्वकार्य्ये बीजमात्रतयावस्थान प्रधाने कर्मण्यावापगमनमिति तदर्थ इति वाचस्पतिमिश्रा । अय भाव —यथा धान्यबीजै सहोत्पन्नाना तृणबीजाना तै सहैव कुसूलमध्यस्थापिताना वपनसमये धान्यबीजै सहैव वपनप्राप्तिर्न स्वातन्त्र्येण तद्वत् प्रधानयागाङ्गतयाऽनुष्ठितस्य पशुहिंसादेर्यत् स्वातन्त्र्येण फलदानासामर्थ्यं प्रधानकर्मविपाकसमये च फलदानोन्मुखत्व तदेवाऽऽवापगमनमिति। ६ नियतविपाकेन बलीयसा कर्मान्तरेण प्रतिबद्धस्य बलीय कर्मभोगपर्य्यन्त बहुकालमवस्थानमित्यर्थ, तथा च स्मर्य्यते—"कदाचित्सुकृत कर्म कूटस्थमिह तिष्ठति । मज्जमानस्य ससारे यावद् दु खाद्विमुच्यते" इति,

"स्वल्पः सङ्करः सपरिहारः सप्रत्यवमर्ष"इति। स्वल्पः सङ्करः—ज्योतिष्टोमादिजन्मनः प्रधानापूर्वस्य पशुहिंसादिजन्मनाऽनर्थहेतुनाऽपूर्वेण,

सपरिहारः=कियतापि प्रायश्चित्तेन परिहर्तुं शक्यः

अथ प्रमादतः प्रायश्चित्तमपि नाचरितं प्रधानकर्मविपाकसमये स विपच्यते तथापि यावदसावनर्थं सूते तावत् सप्रत्यवमर्षः—प्रत्यवमर्षेण=सहिष्णुतया सह वर्तत इति,

मृष्यन्ते हि पुण्यसम्भारोपनीतस्वर्गसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम्।

---

केन कस्य सङ्कर इत्याकाङ्क्षा पूरयन् सङ्करशब्दार्थमाह—"स्वल्प सङ्कर ज्योतिष्टोमादि" इति, ज्योतिष्टोमजन्यस्य प्रधानीभूतधर्मस्य य पशुहिंसादिजन्येनाप्रधानीभूताधर्मेण सह सामानाधिकरण्येन सहावस्थानरूप ससर्ग, स सङ्कर इत्यर्थ, पुण्यापेक्षयाऽल्पत्वेन च स स्वल्प, यागे हिंसाजन्य स्वल्प सङ्कराख्य प्रत्यवायो विद्यत इत्यर्थ,

सङ्करस्याल्पत्वेनैवाल्पेनैव प्रायश्चित्तेन सोऽपनेय इत्याशयेन सपरिहारपद व्याचष्टे—"कियतापि" इति, अल्पेनापि इत्यर्थ।

सप्रत्यवमर्षपद व्याचष्टे—"अथ" इति, अथ=यदि प्रमादत=आलस्यात् प्रायश्चित्तमपि नानुष्ठित 'तर्हि' प्रधानकर्मविपाकसमये=ज्योतिष्टोमफलभूतस्वर्गभोगकाले स सङ्कराख्य प्रत्यवाय विपच्यते=फलोन्मुखो भवति तथापि=एवं सति, असौ–हिंसाजन्योऽधर्म यावत्–यत्पर्यन्तम् अनर्थं=स्वफल वृत्रासुरादिभयरूप सूते=उत्पादयति तावत्=तत्पर्य्यन्त सप्रत्यवमर्ष=अवश्यसहनीय, सङ्करजन्यं दु खमवश्य भोक्तव्यमित्यर्थ। तदेवाख्यातु सप्रत्यवमर्षपद विगृह्णाति—"प्रत्यवमर्षेण" इति,

एतदेव स्पष्टयति—"मृष्यन्ते हि" इति, हि–शब्द, वैदिकपौराणिकप्रसिद्धिद्योतनार्थ, पुण्यपुञ्जोपनतस्वर्गाख्यसुखमयामृतसरोवरावगाहनशीला कुशला य इन्द्रादयस्ते हिंसाजन्यस्वल्पपापेन जनिता देवासुरसग्रामादिरूपा दु खवह्निकणिका मृष्यन्ते=सहन्ते हि=प्रसिद्धमेतदित्यर्थ।

यद्यवश्य सङ्करजन्य दु ख सहनीय तत् त्यज्यता यागानुष्ठानमित्यपेक्षायाम् "कुशलस्य नापकर्षायालकस्मात्, कुशल हि मे बह्वन्यदस्ति यत्रायमावाप गत स्वर्गेऽप्यपकर्षमल्प करिष्यति" इत्यग्रिमपञ्चशिखग्रन्थ इति बोध्यम्, अस्य चायमर्थ—अय स्वल्प सङ्कर कुशलस्य=महत

---

१ "यत् पशुर्मायुमकृतोरो वा पद्भिराहते, अग्निर्मा तस्मादेनसो विश्वान् मुञ्चत्वहस" इत्यादिमन्त्रवर्णबोधितेनाल्पेन प्रायश्चित्तेनेत्यर्थ। २ 'यावन्तमसावनर्थं सूते तावान् सप्रत्यवमर्ष' इति–पाठान्तरे तु 'असौ=हिंसाजन्योऽधर्म यावन्तमनर्थं=वृत्रासुरादिजन्य भय सूते=जनयति तावाननर्थं सप्रत्यवमर्ष=अवश्य सहनीय इत्यर्थो बोध्य, परन्त्वेव सति सप्रत्यवमर्ष इति अनर्थविशेषणमित्यायाति तथाच सङ्कर सप्रत्यवमर्ष इति श्रूयमाण सामानाधिकरण्य व्याकुप्येतेति मूलधृतपाठ एव साधीयान्।

न च "मा हिंस्यात्सर्वाभूतानि" इति सामान्यशास्त्रं विशेषशास्त्रेण "अग्नीषोमीयं पशुमालभेत" इत्यनेन बाध्यत इति युक्तं,

विरोधाभावात्, विरोधे हि बलीयसा दुर्बलं बाध्यते न चेहास्ति कश्चिद् विरोधः भिन्नविषयत्वात्।

तथाहि 'न हिंस्याद्' इति निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते न त्वक्रत्वर्थत्वमपि 'अग्नीषोमीयं पशुमालभेत' इत्यनेन वाक्येन च पशुहि-

---

पुण्यकर्मण अपकर्षाय=प्रक्षयाय न अल=पर्याप्त, कस्माद्, हि=यत मे=यागानुष्ठातुः कुशल=पुण्यात्मक कर्म दीक्षणीयादिदक्षिणावसान बहु विद्यते यत्र प्रधानकर्मणि अयं स्वल्प सङ्करोऽन्तर्भूत सन् स्वर्गेऽपि स्वर्गादल्प दु खसभेद करिष्यतीति। एवं चाल्पदुःखभयेन महत्सुख न त्याज्यमिति याज्ञिकाशय।

यागादेरविशुद्धियुक्तत्वममृष्यमाणस्य कर्ममीमासकस्याशङ्कामुत्थाप्य निराकरोति—"न च मार्हिस्याद्" इति।

शङ्ककमीमांसकस्यायमाशय—सामान्यशास्त्रं हि विधेयसामान्यद्वारा विशेषमुपसर्पतीति विलम्बेन प्रवृत्तत्वाद् दुर्बलं तद्, विशेषशास्त्र तु साक्षादेव विशेषमुपसर्पतीत्याशुतरप्रवृत्तत्त्व-त्प्रबल तद्, एव च यथा प्रबलेन "अश्वस्य पदे जुहोति"[1] इति विशेषशास्त्रेणाश्वपदाधिकरणकहोमविधानपरेण "आहवनीये जुहोति" इति होममात्रस्याहवनीयाधारत्वविधायकस्य सामान्यशास्त्रस्य बाधात् सामान्यशास्त्रस्य तदितरपरत्वेन सकोच, तथाऽग्नीषोमीयपशुहिंसाविषयेण विशेषशास्त्रेण हिंसानिषेधपरस्य सामान्यशास्त्रस्य बाधात् सामान्यशास्त्रस्य यागीयहिंसातिरिक्तहिंसाविषयत्वेन सकोच आस्थेय, एतन्मूलकमेव सामान्यशास्त्राद्विशेषशास्त्रं प्रबलमिति न्याय इति[2]।

न च युक्तमित्युक्तौ हेतुमाह—"विरोधाभावाद्" इति, नहि प्रबलमित्येतावता दुर्बल बाध्यते किन्तु सति विरोधे नचेहास्ति कश्चिद् विरोधो भिन्नगोचरचारित्वादुभयोरित्यर्थ।

भिन्नविषयत्वमेव स्पष्टयति—"तथाहि" इति निषेधेन हि 'हिंसा पुरुषानर्थकरी' इत्येव बोध्यते नतु 'हिंसा यागोपकारिणी न' इत्येवमपि, एव पशुमालभेतेतिवाक्येनापि "हिंसा यागोपकारिणी" इत्येव ज्ञाप्यते नतु 'हिंसा नानर्थकरी' इत्येवमपि, एवं च भिन्नविषयत्वान्न विरोध इत्यर्थ।

ननु न हिंस्यादित्यस्यार्थद्वय हिंसानर्थहेतुरित्येक अक्रत्वर्था च सेत्यपर एवम् 'अग्नीषोमीयं पशुमालभेत' इत्यस्याप्यर्थद्वय पश्वालम्भनं क्रत्वर्थमित्येक, इद चालम्भनं नानर्थहेतुरित्यपर,

---

१ अश्वमेधप्रकरणे तुरङ्गमविमोचनोत्तर स्वैर विचरन्तमश्व दशममासादूर्ध्वं रथकारगृहे समानीयं बद्ध्वा तस्य चतुर्षु पदेषु 'इह धृति स्वाहा' इत्याद्याहुतिचतुष्टय जुह्वति चत्वार ऋत्विज इति याज्ञिकसम्प्रदाय। २ अयमेव चोत्सर्गापवादन्याय तथाचाहु शङ्कराचार्य्या—'उत्सर्गस्तु स, अय चापवादोऽग्नीषोमीय पशुमालभेत इति–ब्रह्मसू अ ३ सू १३

सायाः क्रत्वर्थत्वमुच्यते नानर्थहेतुत्वाभावः, तथा सति वाक्यभेदप्रसङ्गात्, नचाऽनर्थहेतुत्वक्रतूपकारकत्वयोः कश्चिद् विरोधोस्ति, हिंसा हि पुरुषस्य दोषमावक्ष्यति क्रतोश्चोपकरिष्यतीति,

एवञ्च सामान्यशास्त्रबोधितयोरनर्थहेतुत्वाक्रत्वर्थत्वयोर्विशेषशास्त्रबोधितानर्थहेतुत्वक्रत्वर्थत्वाभ्यां विरोधात्कथं विरोधाभाव इत्याशङ्क्याह—"तथासति" इति, तथासति=अर्थद्वयस्वीकारे सति, अन्याय्यश्चानेकार्थं, इतिन्यायेन वाक्यभेदस्य मीमांसकैर्दुष्टत्वस्थापनादित्यर्थ,

यथाश्रुतैकार्थत्वस्वीकारे तु न कश्चिद् विरोध इत्याह—"नचानर्थहेतुत्व" इति,

विरोधाभावायोभयो समावेशमाह—"हिंसाहि"इति,दोषम् आवक्ष्यति=सम्पादयिष्यतीत्यर्थ।

एतदुक्त भवति—क्रतुप्रकरणे समाम्नात पश्वालम्भन क्रत्वर्थतामेवास्य गमयति नत्वपनयति निषेधापादित हिंसाया पुरुष प्रत्यनर्थहेतुत्व तेनास्तु निषेधात्पुरुष प्रत्यनर्थहेतुता विधेश्च क्रत्वर्थता को नाम विरोधावकाश।

अय भाव—यथा "आमतक्र कोष्ठे कफ हन्ति" इति वाक्यस्येष्टसाधनत्वं विषय "कण्ठे च तद् तक्र कफ करोति" इति वाक्यस्यानिष्टसाधनत्व विषय इति विषयभेदादुभयोरविरोधस्तथा निषेधवाक्यस्यानर्थहेतुत्व विषयः पश्वालम्भनवाक्यस्य च क्रतूपकारकत्व विषय इति विषयभेदादुभयोरविरोध इति।

ननु[1] वैधपश्वालम्भनस्यानिष्टजनकत्वे आलभेतेत्यत्र बलवदनिष्टाननुबन्धीष्टसाधनत्वरूपस्य विध्यर्थस्य कथमक्षतिरिति चेद्—

अत्राहु साङ्ख्यप्रवचनभाष्यकारा विज्ञानभिक्षवः—"वैधहिंसाजन्यानिष्टस्येष्टोत्पत्तिनान्तरीयकत्वेनेष्टोत्पत्तिनान्तरीयकैर्दुःखाधिकदुःखाजनकत्वरूपस्य बलवदनिष्टाननुबन्धित्वस्य विध्यर्थस्याक्षते। यत्तु वैधहिंसातिरिक्तहिंसाया एव पापजनकत्वमिति, तदसत्, सङ्कोचे प्रमाणाभावाद्, युधिष्ठिरादीना स्वधर्मेपि युद्धादौ ज्ञातिवधादिप्रत्यवायपरिहाराय प्रायश्चित्तश्रवणाच्च, 'तस्माद् यास्याम्यहं तात दृष्ट्वेम दुःखसन्निभ, त्रयीधर्ममधर्माढ्यं किम्पाकफलसन्निभम्' इति मार्कण्डेयवचनाच्च, 'अहिंसन् सर्वाणि भूतान्यन्यत्र तीर्थेभ्य' इति श्रुतिस्तु वैधातिरिक्तहिंसा-

१ ननु माभूद् 'न हिंस्याद् इति निषेधवाक्यस्यार्थद्वय पशुमालभेत इतिवाक्यस्य त्वर्थद्वय दुर्वारम् आलभेत इत्यत्र विधिप्रत्ययेन बलवदनिष्टाजनकत्वेष्टसाधनत्वरूपार्थद्वयस्य बोधनादित्याशयेन शङ्कते—"ननुवैध" इति। २ अ १ सू ७। ३ अन्तरा—इत्यव्यय विनार्थकम्—अन्तरा=विना भवम् अन्तरीय गहादित्वाच्छ, नान्तरीय नान्तरीयकम्, इष्टोत्पादकयत्नानुनिष्पादनीय, यद् विनेष्टोत्पत्तिर्न भवत्येवविध यदिष्टोत्पत्त्यविनाभूतमिष्टोत्पत्तिसहभूत वा दुःख तदितरदुःखाजनकत्वमेव बलवदनिष्टाजनकत्वमित्यर्थ, युक्त चैतद् अन्यथा लौकिकपाकादिकर्मणो धूमादिप्रयुक्तदुःखजनकत्वात्,स्वर्गप्रापककर्मणश्च मरणपातभयाध पातादिदुःखजनकत्वात्, राज्यप्रापककर्मणश्च गर्भवासादिदुःखजनकत्वात्, कुत्रापि दुःखाजनकत्व न स्यात्, एव च हिंसाजन्यप्रत्यवायफलीभूतस्याल्पदुःखस्येष्टस्वर्गोत्पत्त्यविनाभूतत्वेन तद्दुःखजनकत्वेपि तदितरदुःखाजनकत्वाद्भवति यागादेर्बलवदनिष्टाजनकत्वमिति न विध्यर्थक्षति।

निवृत्तेरिष्टसाधनत्वमेव वक्ति नतु वैधहिंसाया अनिष्टसाधनत्वाभावमपीत्यादिक योगवार्तिके द्रष्टव्यमिति दिक् इति ।

किञ्च—इष्टस्वर्गापेक्षया हिंसाजन्यानिष्टस्याल्पत्वेन बलवदनिष्टाजनकत्वरूपविध्यर्थस्याक्षतेर्नात्र विध्यर्थस्यानुपपत्तिरिति ।

वस्तुतस्तु—अङ्गविधीनां विनियोगमात्रतात्पर्यकत्वेन बलवदनिष्टाननुबन्धित्वबोधने तात्पर्याभावान्न काचिदत्रापत्तिरिति ।

अय भाव —यो हि पुरुषप्रवर्तक प्रधानविधिस्तेन स्वप्रवृत्तिसिद्धये बलवदनिष्टाननुबन्धित्वमपि तात्पर्यतो बोध्यते 'अग्नीषोमीय पशुमालभेत' इत्याद्यङ्गविधयस्तु न पुरुषप्रवर्तका अपि त्वङ्गानां प्रधानविनियोगतात्पर्यका तत्सिद्धये चेष्टसाधनत्वमेव तात्पर्यगत्या तै प्रतिपादनीय तस्मिन् प्रतिपादिते किं तदिष्टमित्याकाङ्क्षायामुपस्थितत्वात्क्रतूपकार एवेत्यवगम्यते नत्वनर्थहेतुत्वाभावोऽपि, एव चानर्थहेतुत्वाभावस्य विधिनाऽस्पृष्टत्वाद् 'विधिस्पृष्टे निषेधानवतार' इति न्यायावतारोऽप्यत्र न भवतीति बोध्यम् ।

नन्वेव क्रत्वन्तर्गता हिंसापि निषेधविषयत्वेनानर्थहेतुरित्यायातं तथा च यागमध्ये निषिद्धानुष्ठानेन कथ न क्रतोर्वैगुण्यमिति चेद्—

अत्र ब्रूम —यथा 'न कलञ्ज भक्षयेद्' इति कलञ्जभक्षणप्रतिषेधस्य क्रतुप्रकरणेऽनाम्नानात् क्रतुशेषत्वाभावेन यजमानकर्तृककलञ्जभक्षणेन न क्रतोर्वैगुण्य तथा हिंसानिषेधस्यापि क्रतुशेषत्वाभावेन हिंसयापि न क्रतोर्वैगुण्य,

तथाचाहुर्भट्टपादा 'यो नाम क्रतुमध्यस्थ कलञ्जादीनि भक्षयेद्, न क्रतोस्तत्र वैगुण्य यथाचोदितसिद्धित इति, ।

नचैकत्रेष्टहेतुत्वानिष्टहेतुत्वयोर्वृत्तौ विरोधाद् नैयागीयहिंसाऽनिष्टहेतुरिति वाच्यम् । मधुविषसम्पृक्तभोजने परकीयकमनीयरमणीरमणे चोभयो समावेशदर्शनेन विरोधाभावाद् ।

१ पा २ सू ३४ । कार्यत्वमिष्टसाधनत्व वा विध्यर्थो न पुनरनिष्टाननुबन्धित्वमपि, राजत्वादिप्रापककर्मणा गर्भवासजन्याद्यनर्थहेतुताया सर्वसमतत्वात्, नच बलवदनिष्टाननुबन्धित्वमपि विध्यर्थो वक्तु शक्यते, अनिष्टेषु पुरुषाणा बलवद्द्वेषस्याव्यवस्थिते , दु खमेव सर्वं विवेकिन इत्युक्तत्वात्, किच बलवदनिष्टाननुबन्धित्वस्य विध्यर्थत्वेपि यज्ञादिनान्तरीयकहिंसाया सामान्यतोनिष्टजनकत्वश्रुत्यविरोध इत्यादिना योगवार्तिकेऽयमेव मार्ग उपदिष्ट इति बोध्यम् । २ विषाक्तास्त्रहतमृगपक्षिसबन्धिमास कलञ्ज इति त्रिकाण्डशेष । केचित्तु विष्णुसिद्धान्तसारावल्यभिधाने वैद्यकग्रन्थे धूमवर्णीधूमपानगुणवर्णन प्रतिज्ञाय 'कलञ्जसवेष्टनधूमपानात्स्याद्दन्तशुद्धिर्मुखरोगहानि' इत्यभिधानात्कलञ्जपद ताम्रकूटवाचकमपीत्याहु । ताम्रकूट =तमाकू इति लोकप्रसिद्ध क्षुपविशेष । ३ तन्त्रवार्तिके अ ३ पा ४ सू १३ कुमारिलस्वामिन । ४ कलञ्जभक्षणादिनिषेधाना पुरुषार्थत्वात् तदतिक्रमे पुरुषस्यैव प्रत्यवायो न क्रतोर्वैगुण्य यथाविहितस्य तस्य सिद्धे , नहि क्रतुशेष प्रतिषेधो यतस्तदतिलङ्घनात्क्रतोर्वैगुण्य स्यादिति भट्टोक्तेरर्थ, इति भामतीव्याख्याने कल्पतरुकार । ५ आलभेत इत्यत्र विधिप्रत्ययेन हिंसाया इष्टहेतुत्व बोध्यते न हिंस्यात् इति निषेधेन च हिंसाया अनिष्टहेतुत्व बोध्यते तथा चैकत्र हिंसायामुभयवर्तन विरुद्धमित्यर्थ । ६ विषसम्पृक्तज्ञाने सति तत्र न प्रवर्तेत इत्यत आह 'परकीय' इति । ७ उभयो =इष्टहेतुत्वानिष्टहेतुत्वयो ।

ननु यागीयहिंसाया अनिष्टहेतुत्वे तत्र कथमास्तिकाना प्रवृत्तिरिति चेद्,

अत्रोच्यते—यथा सत्यप्यभिचारस्यानिष्टहेतुत्वे तद्दोषसहिष्णोरेव क्रोधान्धस्य श्येनयागादौ प्रवृत्तिर्नेतरस्य तथात्रापि तद्दोषसहिष्णो रागान्धस्यैव प्रवृत्तिर्नेतरस्येति न प्रवृत्तिविरह ।

केचित्तु यथा मरणरूपमहानिष्टसाधने सहगमनवेणीप्रवेशनादावात्माहुत्यङ्गके सर्वस्वारयज्ञे चोत्कटफलेच्छावशात्प्रवृत्तिस्तथात्राप्युत्कटफलरागवशात्प्रवृत्तिरित्याहु ।

अन्ये तु यथा द्रव्यव्ययादिना यागादीनामनिष्टफलकत्वेपि यागजनितफले रागवशात्प्रवर्तते तथा हिंसाया प्रत्यवायकरत्वेपि यागफलेऽत्यन्तरागवशात्प्रवर्तते, इयोस्तु विशेष –द्रव्यव्ययादिना प्राप्तमनिष्ट प्रत्यक्षप्रमाणक, हिंसादौ तु प्रत्यवायकरता न हिंस्यात् इति शास्त्रप्रमाणिकेत्याहु ।

स्वर्गसुखापेक्षया हिंसाजन्यदु खस्याल्पत्वज्ञानेन यागादौ प्रवृत्तिरिति तत्त्वम्, एतच्च ‘कुशलस्य नापकर्षायालम्’ इत्यत्र पञ्चशिखाचार्यवचनेन पूर्वत्र व्यक्तीकृतम् ।

ननु योहि क्रतुप्रकरणे समाम्नात स क्रतुशेषत्वेन क्रत्वर्थ इत्याख्यायते यस्तु कस्य चित् क्रतो प्रकरणेऽनाम्नातत्वेनाऽनारभ्याधीत स पुरुषार्थ इत्यभिधीयत इति हि मीमासकसमय, तथा च न हिंस्यादिति निषेधस्यानारभ्याधीतत्वेन पुरुषार्थत्वात् ‘यदर्थो निषेधस्तदर्थमेव निषेध्यम्’ इति नियमेन पुरुषार्था एव हिंसा अनेन निषेध्या न क्रत्वर्था, अत एव ‘नानृतं वदेत्’ इति स्मार्तेऽनृतवदननिषेधे पुरुषार्थरूपे सत्यपि पुनर्दर्शपौर्णमासप्रकरणे ‘नानृतंवदेत्’ इति क्रत्वर्थतया पुन समाम्नात संगच्छते, यदि हि पुरुषार्थोपि निषेध क्रत्वर्थो भवेत् तर्ह्येकेनैव निषेधेनाल किं पुनराम्नानेन, स्पष्ट चैतत् ‘पुरुषार्थाया एव हिंसाया न हिंस्यादिति प्रतिषेधात्’ इति भामतीग्रन्थमुपादाय कल्पतरौ परिमले च, तथा च न यागीयहिंसाविषयत्वं निषेधस्येति चेत्,

अत्र ब्रूम —भवेदेतदेव यदि ‘यदर्थो निषेधस्तदर्थमेवनिषेध्यम्’ इति नियम सुस्थिरो भवेत्, तदेव तु न ह्युपगमनमांसभक्षणादिप्रतिषेधस्य पुरुषार्थस्यापि क्रत्वर्थत्वदर्शनान्नियमस्य व्यभिचरितत्वात्, यदाहु — ह्युपायमासभक्षादिपुरुषार्थमपि श्रित । प्रतिषेध क्रतोरङ्गमिष्ट प्रकरणाश्रयात् इति ।

---

१ अभिचार =श्येनयागादिना शत्रुमारण, ‘गोवधोऽयाज्यसयाज्यपारदार्यात्मविक्रय’ इत्युपक्रम्य अभिचारो मूलकर्म च इति मध्ये पठित्वाऽन्ते ‘नास्तिक्य चोपपातकम्’ इत्येव याज्ञवल्क्येनोपसहारादभिचारस्योपपातकत्वेनानिष्टहेतुत्वस्य स्पष्टत्वादिति भाव । २ बृहद्वैयाकरणभूषणकारा कौण्डभट्टा इत्यर्थ । ३ सहगमन=पत्न्या पत्या सहैकचित्यारोहण, वेणीप्रवेशन=अनशनादिना मज्जनेन वा प्रयागमरणम्, आदिना हिमालयगमनरूपमहाप्रस्थानगमनम्, आत्माहुत्यङ्गकसर्वस्वारयज्ञस्तु—एकाहसाध्य स्वर्गकामस्य विहित क्रतुविशेष, तत्र हि आर्भवस्तोत्रकाले ‘ब्राह्मणा समापयत मे यज्ञम्’ इति प्रैषमृत्विग्भ्य प्रदाय यजमानेनात्माहुतिप्रदानेन मर्तव्यमिति विहितम्, एतच्च ‘सर्वस्वारस्य दिष्टगतौ समापन न विद्यते कर्मणो जीवसयोगात्’ अ १० पा २ इति द्वाविशेधिकरणे जैमिनीये व्यक्तम् । ४ ब्रह्मविद्याभरणकारा अद्वैतानन्दा । ५ प्रभाकरोक्तप्रकारमालम्ब्य शङ्कामुत्थापयति ‘ननु योहि’ इति । ६ येन दृष्टान्तोपन्यासेन भामती कल्पतरुब्रह्मविद्याभरणकारैर्मीमासकसाहायकमाचरित तद्दृष्टान्तोपन्यासेन प्रभाकरोक्त द्रढयति ‘अत एव’ इत्यादिना ।

"आत्मज्ञानं हि संयोगपृथक्त्वात्क्रत्वर्थत्वेन ज्ञायते" इत्यादिना तन्त्रवार्तिके आत्मज्ञानस्योभयार्थत्वोपगमाच्च।

क्रत्वर्थहिंसाया अपि परम्परया पुरुषोपकारकत्वेन पुरुषार्थत्वसंभवाच्च।

किञ्च—यदि 'नहिंस्याद्' इति निषेधस्य क्रत्वर्थहिंसाविषयत्वं नाभिमन्येत मीमांसकैस्तर्हि ('पशुमालभेत' इति विधेर्विशेषविषयत्वात् सामान्यविषयो निषेधस्तद्विरोधाद् हिंसान्तराण्यवलम्बते) इति, "न हिंस्यादित्युत्सर्गं अग्नीषोमीयं पशुमालभेत" इति चापवाद इति च तेषामभिधानं कथं सङ्गच्छेत, नहि सामान्यशास्त्रस्य विशेषशास्त्रविषयाननुप्रवेशे बाधो दृष्टचरो नाम।

अयं भावः—यत्र हि सामान्यविधिना विशेषविहितस्यार्थस्याऽपि विषयीकरणं तत्र हि बाध्यबाधकभावो भवति यथा 'आहवनीये जुहोति' इति सामान्यविधिना होममात्रस्याहवनीयान्वयविधानपरेण पदहोमस्यापि विषयीकरणाद् 'अश्वस्य पदे जुहोति' इति पदहोमान्वयविशेषविधिना सामान्यविधेर्बाधः, इह तु भवन्मते न हिंस्यादिति निषेधेन क्रत्वर्थहिंसाया अविषयीकरणेन कथं तयोर्बाध्यबाधकभावाभिधानम्।

तत्सिद्धमेतद्—न हिंस्यादितिनिषेधः क्रत्वर्थहिंसामपि विषयी करोतीति।

सत्यप्यनयोः सामान्यविशेषभावे विषयभेदान्न विरोध इति न बाध्यबाधकभाव इत्यभिहितं प्रागिति नात्र किञ्चिद्वचनीयम्—

यत्तु नानृतं वदेद् इति पुनराम्नातं तत्तु 'यथा क्रतुमध्ये निषिद्धकलञ्जभक्षणेन न क्रतोर्वैकल्यमपि तु पुरुषस्यैव प्रत्यवायस्तथा निषिद्धानृतवदनेऽपि न क्रतोर्वैगुण्यमिति न मन्तव्यमपि त्वत्रानृतवदने दर्शपौर्णमासापूर्वमेव वैगुण्यान्न स्यादित्यवश्यमत्र वर्जनीयमनृतवदनम्' इत्यर्थकं, न तु 'सामान्यनिषेधः पुरुषार्थ एव न क्रत्वर्थः' इत्याशयकम्।

तथा चाहुस्तन्त्रवार्तिककाराः "दर्शपौर्णमासयोरनृतं वदन् नरकं च प्राप्नुयाद् दर्शपौर्णमा-

---

१ अ ४ पा ३ सू २५। २ ननु 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' अ ४ पा ३ सू ५ इति जैमिनीयं एकस्य वस्तुनः क्रत्वर्थत्वपुरुषार्थत्वे विनियोजकवाक्यभेदस्य नियामकत्वकथनान्न सर्वत्रोभयार्थतेत्याशङ्कमानं प्रत्याह "क्रत्वर्थहिंसाया" इति। वस्तुतस्तु ब्राह्मणहननसुरापानादिनिषेधानामुभयार्थत्वोपगमेन 'दीक्षितो न ददाति न जुहोति' इत्यादौ प्रतिषेधस्य क्रत्वर्थत्वेऽपि प्रतिषेध्यानां दानादीनां पुरुषार्थत्वाभ्युपगमेन च प्रतिषेधप्रतिषेध्ययोः समानविषयकत्वनियमः न सार्वत्रिक इति बोध्यम्। ३ अ ४ सू २ शास्त्रदीपिकाकारोक्तिरियम्। ४ सामान्यविषयकत्वमुत्सर्गत्वम्=विशेषविषयकत्वं चाऽपवादत्वम्। ५ अ ३ पा १ सू २५ शङ्कराचार्य्योक्तिरियम्। ६ यत्र हि सामान्यशास्त्रं विशेषशास्त्रविषयं क्रोडीकरोति यथा—'आद् गुणः' इति सामान्यशास्त्रं 'वृद्धिरेचि' इति विशेषशास्त्रविषयं गङ्गौघ इति, तत्रैव बाध्यबाधकभावो नान्यत्रेत्यर्थः। ७ नन्वेवंसामान्यविशेषभावसत्त्वात्कथं न बाध्यबाधकभाव इत्याशङ्क्याह "सत्यपि" इति, यथा सत्यपि सामान्यविशेषभावे लिङः सीयुटो न "सुट् तिथोः" इति सुटा बाधो, लिङो यासुट् तकारथकारयोः सुडिति विषयभेदात्, तथाऽत्रापि विषयभेदान्न बाध्यबाधकभावः। ८ अ ३ पा ४ विधिर्वा संयोगान्तराद् १ ३ इतिसूत्रे कुमारिलस्वामिनः।

सफल चाविकलमेवाप्नुयादिति च स्मृत्यर्थ, श्रौत पुन प्रकरणप्रयुक्तपुरुषधर्म इति अत्रैषोर्थो विज्ञायते—वर्जितानृतवचनकेन पुरुषेण कृतौ दर्शपौर्णमासौ फलं साधयत इति, प्रकरणसामर्थ्याद्धि पुरुषगतमपूर्वसाधनत्वं कक्षयित्वाऽनृतं प्रतिषिद्धमतस्तदतिक्रमे दर्शपूर्णमासापूर्वमेव वैगुण्यान्न स्याद्" इति ।

एतदुक्त भवति—य सामान्येन निषेधस्तस्योभयार्थत्वे सत्यपि तन्निषेधातिक्रमे पुरुषस्यैव प्रत्यवायो न क्रतोर्वैकल्य यस्तु विशेषेण क्रतुप्रकरणे निषेधस्तदतिक्रमे च क्रतोरपि वैगुण्यमिति । तथा च न हिंस्यादिति निषेधस्य सामान्यतयोभयार्थत्वेपि विशिष्य क्रतुप्रकरणेऽपठनात्तन्निषेधातिक्रमे पुरुषस्यैव प्रत्यवायो न क्रतोर्वैगुण्यमिति ।

न चैवमेकस्यैव वाक्यस्य क्रत्वर्थपुरुषार्थनिषेधबोधकतया क्रत्वर्थपुरुषार्थत्वापत्त्या स्वातन्त्र्यपारतन्त्र्यलक्षण वैरूप्य स्यादिति वाच्यम्, अविशेषेण प्रतिषेधे वैरूप्याभावात्

तथा चाहुः—शास्त्रदीपिकाकारा (यदि हि क्रत्वर्थत्वपुरुषार्थत्वरूपविशेषणोद्दिश्य प्रतिषेध क्रियेत तत स्यादपि वैरूप्य प्रतिषेध्योपस्थापितक्रतुपुरुषगोचरत्वात्प्रतिषेधस्य, यदा तु हिंसामात्रमुद्दिश्य प्रतिषेध क्रियते तदास्य कि वैरूप्यं, तद् यथा—या भोजनार्थं मांसोत्पादने हिंसा या च वैरिनिर्य्यातनार्थतया साक्षात्पुरुषार्था तस्यामुभय्यामप्यविशेषेण प्रतिषिध्यमानायामपि नास्ति वैरूप्यमेवमिहापि, इतरथा तत्रापि भोजनाङ्गता पुरुषार्थता च प्रतिषेधस्य स्यादिति वैरूप्य स्यात्, तस्माद् यैव काचिद् येन केनापि प्रकारेण प्रसक्ता हिंसा सा सर्वा सामान्येन प्रतिषिध्यते) इति ।

यत्त्वेतदग्रिमग्रन्थे "अग्नीषोमीयहिंसाप्यसति विधेयत्वे प्रतिषेधगोचर स्याद् विधेयत्वे तु विधेर्विशेषविषयत्वात्सामान्यविषयो निषेधस्तद्विरोधाद् हिंसान्तराण्यवलम्बत" इत्यभिहित तत्तु विषयभेदाद् इष्टहेतुत्वानिष्टहेतुत्वयोरेकत्रवृत्तौ विरोधाभावेन च न बाध्यबाधकभाव इत्येवं पूर्वं समाहितत्वेनाकिञ्चित्करम्—

यत्पुनरग्रे "सत्यमङ्गविधिमात्रालोचनायां नास्ति विरोधो ज्योतिष्टोमविधिस्तु साङ्गं प्रधान पुरुषस्य विदधत्पुरुषार्थहिंसानिषेधमग्नीषोमीयहिंसायामवतरन्त निरुणद्धि" इत्यभिहित, तदपि विधिना विधेयस्य साङ्गप्रधानस्य बलवदनिष्टाजनकत्वबोधनेऽपि स्वल्पानिष्टाजनकत्वबोधनाभावाद् विध्यर्थस्याऽक्षतेरित्येव पूर्वं समाहितत्वेन न पुन समाधानीयम्—

एतेन (काम्यप्रकरणे यागे रागात्प्रवृत्तिरङ्गे तु वैधी प्रवृत्तिरिति वैधहिंसाया न प्रत्यवायजनकत्वम्) इति प्रभाकरोक्तमपि निरस्त वेदितव्य, हिंसाया वैधत्वेपि विधिनेष्टोत्पत्तिनान्तरीयकानिष्टजनकत्वस्यानिषेधाद् ।

१ न विगताकलापस्य फलस्य तत्तथाविधम्—यथाश्रुतमिति तदर्थ । २ पूर्वपक्षे प्राप्ते इति शेष । ३ क्रत्वर्थनिषेधत्वे हि क्रत्वर्थत्वात्पारतन्त्र्यम्, पुरुषार्थनिषेधत्वे च पुरुषार्थत्वात् स्वातन्त्र्यमित्यर्थ । ४ प्रथमलक्षणे धर्मलक्षणाख्यानपरे द्वितीयसूत्रे पार्थसारथिमिश्रा । ५ प्रतिषेध्यपुरुषविषयत्वादुपस्थापितक्रतुगोचरत्वाच्चेत्यर्थ । ६ क्रतूपकारकत्वपुरुषानर्थहेतुत्वयोरेकत्र वृत्ते पूर्वमभिहितत्वादिति भाव । ७ एतेन=विधिना विधेयस्य बलवदनिष्टाजनकत्वबोधनेपि स्वल्पानिष्टाजनकत्वबोधने मानाभावेनेत्यर्थ । ८ विधिना वेदेन वा विहितेत्यर्थ । वैधी चासौ हिंसा च वैधहिंसा ।

किञ्च—यागे रागात्प्रवृत्तिरित्यङ्गीकारे यागस्य वेदविहितत्वाभावेन कथ यागस्य धर्मत्वमित्यपि स प्रष्टव्य ।

दूषणान्तरं च शास्त्रदीपिकाया व्यक्तमिति तत्रैवान्वेष्यम् ।

यदपि शारीरकीये भाष्ये ( हिंसादियुक्तत्वेन वैदिककर्मणोऽशुद्धत्वेन तत्प्रयुक्त एव स्वर्गादव रोहतां व्रीह्यादिभावेन प्रादुर्भाव ) इत्याशङ्कायाम् 'अशुद्धमिति चेन्न शब्दाद्' इति सूत्रमवतार्य्य ( शास्त्राद् हिंसानुग्रहात्मकज्योतिष्टोमस्य धर्मत्वावधारणान्न वैदिक कर्माशुद्धम् ) इत्येव शङ्कराचार्य्यैर्यागस्याविशुद्धियुक्तत्वविरहाभिधान तदपि भट्टपक्षसंरक्षणमात्र न व्यासाशयानुगुण, योगभाष्ये भगवता व्यासेन स्पष्ट यागादे शुक्लकृष्णत्वप्रतिपादनेन धर्माधर्मात्मत्वाभिधानेनात्र तद्विपरीताशयवर्णनस्यायुक्तत्वाद् ।

कस्तर्ह्यत्र व्यासाशयानुसारी सूत्रार्थ इति चेच्छ्रूयतामवधानेन—छान्दोग्ये इष्टादिकर्मकारिणा प्रेत्य धूममार्गेण चन्द्रलोकमारूढानां तत्र यावत्कर्मफलं भुक्तभोगानाम् "अथैतमेवाध्वानं पुनर्निवर्तन्त" इत्यादिना पुनरवरोहमाम्नाय तदनु कथमवरोहन्तीत्याकाङ्क्षायाम् आकाशवायुधूममेघसमतामासाद्य वर्षधाराद्वारा भूमिं प्रविश्य व्रीहियवाद्यन्नसंसर्गिणो भूत्वा भक्षणद्वारा रेत - सिक्पुरुषयोगेन शुक्रमधिष्ठाय मिथुनीभावद्वारा स्त्रियोनौ प्रविश्य रमणीयाचरणशीला ब्राह्मणादियोनिमापद्यन्ते कुत्सिताचरणशीलाश्च शूकरादियोनिमापद्यन्त इत्यभिहित, तत्र स्वर्गादवरोहता यो व्रीहियवादिरूप स्थावरभाव आम्नात स किं तेषा व्रीह्यादिरूपेणोत्पत्तिरुतान्यैर्जीवैरधिष्ठितेषु व्रीह्यादिषु ससर्गमात्रमिति सशये—

"त इह जायन्त" इति जनिश्रुतेर्मुख्यमेव व्रीह्यादिरूपेण तेषा जन्मेति प्राप्ते "अन्याधिष्ठिते पूर्ववदभिलापाद्" इति सूत्रेण (अन्यैर्दुराचारैरधिष्ठितेषु व्रीह्यादिषु ससर्गमात्रमेव न मुख्य जन्म) इत्येव सिद्धान्तिते, पुन "शारीरजै कर्मदोषैर्याति स्थावरतां नर" इति स्थावरभावस्य पापफलत्वेन मनुना स्मरणात् कथ पापफलमशुद्ध व्रीह्यादिभावमवरोहन्त प्राप्नुयुरिति, न च व्रीह्यादि-

१ काम्येष्वपि विधिरेव प्रवर्तको न फल तस्य विध्यधीनोत्पत्तिकत्वेन यागापेक्षाभावाद्, विधिस्तु यागाधीननिष्पत्तित्वाद् यागमनुष्ठापयतीति युक्त, यदि च विधिरप्रवर्तक काम्येषु स्यादितिकर्तव्यताप्यविधेया स्यात् तस्यामपि फलत एव प्रवृत्तिसिद्धे, साङ्गप्रधानसाध्यत्वात्फलस्य- वक्ष्यति हि 'तद्युक्ते तु फलश्रुतिस्तस्मात्सर्वचिकीर्षा' इति, ततश्चाग्नोषोमीयहिंसायामपि विध्य, भावेन निषेधविषयत्वात् तद्युक्तस्य ज्योतिष्टोमस्याप्यनर्थत्वापत्ते 'कोर्थो यो नि श्रेयसाय ज्योतिष्टोमादि' इति भाष्यानुपपत्तेरित्येव शास्त्रदीपिकाया व्यक्तम् । २ अ ३ पा १ सू २५ । ३ पञ्चमप्रपाठके दशमखण्डे । ४ रेत =शुक्र—वीर्य्यं 'सिञ्चतीति' रेत सिगित्यर्थ । ५ "त इह व्रीहियवा औषधिवनस्पतयस्तिलमाषा इति जायन्त" इति जनिश्रुतेरित्यर्थ ६ अ ३ पा १ सू २४ 'पूर्ववदभिलापाद्'=यथा पूर्वत्र "वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्र भवत्यभ्र भूत्वा मेघो भवति मेघो भूत्वा वर्षति" इत्यादौ वाय्वादिससर्गमात्र तथात्रापि व्रीह्यादिससर्गमात्रमेव न मुख्य जन्म, कुत पूर्ववदभिलापाद्—आकाशादिमेघपर्य्यन्तवत् केवलतद्भावाभिलापाद्—यत्र हि भोक्तृत्वमभिप्रेत तत्र तत्साधनभूत कर्माभिलप्यते 'रमणीयचरणा कुपूयचरणा' इति, इह चाकाशादिवन्नाभिलप्यते कर्मातो न मुख्यं जन्मेत्यर्थ ।

रूपेण जनिरेव पापफल तत्र स्मर्य्यते नतु व्रीह्यादिसंसर्गमात्र पापफलमिति साम्प्रत, विशेषानुपलब्धे.—नहि दुष्कृतकर्माण स्थावरादिभावमापन्ना व्रीह्यादिरूपेण परिणमन्ते किन्तु व्रीह्यादीनधिष्ठाय तदवच्छेदेन दु खादिभाजो भवन्ति स चावच्छेद ससर्गविशेष, सचोभयो[1] समान इति नास्ति विशेष, नच सञ्चितदुरितवतामेवावरोहतामय स्थावरादिभावोऽभिहित इति वक्तु युक्त सञ्चितसुकृतवतामपि तदभ्युपगमात्[2], तथाच कथमशुद्ध पापफल तेषा व्रीह्यादिजन्मेति शङ्कायाम् "अशुद्धमिति चेन्न शब्दाद्" इति सूत्रम्, अस्यायमर्थ —पापफलत्वेनाशुद्ध व्रीह्यादिजन्मेति कथ कृतसुकृतस्तत्प्राप्नुयादिति न शङ्क्य, कुत शब्दाद्=वेदात् तथाप्रतीते स्वतस्त्वादेतस्यार्थस्याऽशङ्कनीयत्वाद् ।

अयं भाव —द्विविधो हि स्थावरभाव —एको व्रीह्यादीनधिष्ठाय तदभिमानित्वरूपोऽपरश्च व्रीह्यादिससर्गमात्ररूप, तत्राद्यो व्रीह्याद्यभिमानेन तदवच्छेदेन दु खभाक्त्वसद्भावात्पापफलरूप, तदभिप्रायणैव "शारीरजै" इति स्मरण, द्वितीयस्तु तदभिमानाभावेन न पापफलत्वरूप., किन्तु रेत सिग्योगयोनिप्रवेशद्वारा पुनर्जन्मग्रहणे द्वारभूतो व्रीह्यादिसंश्लेषरूप., समानेपि व्रीह्यादिससर्गे 'तयोरन्य पिप्पल स्वाद्वत्यनश्नन्योभिचाकशीति'[3] इतिवदभिमानाभावेन न ससर्गिणा दु खयोग, अत एव व्रीह्यादिषु लूयमानेषु कण्ड्यमानेषु पच्यमानेषु भक्ष्यमाणेषु च तदभिमानिनामेवोत्क्रमण न ससर्गिणा, यो हि जीवो यच्छरीरमभिमन्यते स तस्मिन् पीड्यमाने तत उत्क्रमतीति प्रसिद्धे, ससर्गिणा तदभिमानित्वे तु व्रीह्यादिदेहनाशे तेषा देहिनामप्युत्क्रान्तेरवश्यम्भावाद् रेत सिग्योगादिना पुनस्तेषा जन्माभिधानं न सभवेत्,

एव च व्रीह्यादिसंश्लेषरूपजन्मन पापफलत्वाभावेन नाशुद्ध तदिति सिद्धम् ।

यद्वा पशुहिंसादियोगादशुद्ध वैदिक कर्मेति तस्यानिष्टमपि फल कल्प्यत इत्यतो मुख्यमेवावरोहता जन्म न श्लेषमात्रमित्याशङ्कायाम्—

"अशुद्धमिति चेन्न शब्दाद्" इति सूत्रम्,

भवतु वैदिक कर्माशुद्धं तथापि न तत्फल व्रीह्यादिजन्म कुत शब्दाद्—"यावत्सपातमुषित्वा"[4] इति श्रुतौ यावदिति शब्दाद् "प्राप्यान्त कर्मणस्तस्य यत्किञ्चेह करोत्यय[5] तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे" इति श्रुतौ यत्किञ्चेह कर्म कृत तस्यान्त प्राप्येति शब्दाच्चेहानुष्ठितसाङ्गयागादे कृत्स्नकर्मण. तत्र भोगेन क्षयित्वश्रवणान्न यागाङ्गहिंसाजन्यपापप्रयुक्तं व्रीह्यादिजन्मेत्यर्थ ।

१ उभयो =भोक्तृत्वेन व्रीह्यादिशरीरवत, अवरोहतश्च व्रीह्यादिससर्गिण । २ व्रीह्यादिभावापत्त्युत्तर रेत सिग्योगेन योनि प्रविश्य गर्भाशयगतानामुत्तरत्र 'रमणीयचरणा' इत्येव सुकृतवतामपि जन्मकीर्तनादित्यर्थ. । ३ यथा समानेपि जीवेश्वरयोरन्त करणससर्गे देहसबन्धे वा तयोरेको जीवस्तदभिमानित्वेन तत्प्रयुक्त फल भुङ्क्तेऽन्यस्तु कूटस्थ सन् साक्षितया प्रकाशत एव समानेपि व्रीह्यादिससर्गे तदभिमानिनो लवनकण्डनपेषणादिजन्य दु खमनुभवन्तीतरे तु तत्ससर्गिणो न तत्प्रयुक्त दु खमनुभवन्तीत्यर्थ । ४ सम्पतति=गच्छति अस्माल्लोकादमु लोक फलोपभोगाय येन कर्माशयेन स सम्पात चन्द्रलोकप्रापक कर्मेति यावद् । ५ अय नरो यत्किञ्चिदिह लोके कर्म करोति तस्य अन्त=फल परलोके प्राप्य पुनर्जन्मग्रहणद्वाराऽन्यत्कर्मानुष्ठानायास्मै लोकाय एति=गच्छतीत्यर्थ ।

अथ भाव —यद् यदङ्गतयाऽनुष्ठीयते तत् तत्साहित्येनैव फलं जनयति न स्वातन्त्र्येणेति हि समय, एवं च प्रधानयागाङ्गतयानुष्ठितं पशुत्वसोमोच्छिष्टभक्षणादिकं प्रधानकर्मविपाक-स्वर्गभोगसमसमयमेवान्तराऽन्तरा दु खधारा प्रसौतु पारयति न तत पृथक्त्वेन ।

अत एवाश्वमेधशतफलकस्वाराज्यभोगसमय एवेन्द्रादेरनेकशो रावणवृत्रासुरमहिषासुरा-दिभ्यो दु खधारा श्रुतिपुराणादिषूपवर्णिता सङ्गता भवति ।

पञ्चशिखाचार्य्यैरपि 'स्वर्गेऽप्यपकर्षमल्पमनुभविष्यति' इति वाक्येन स्वर्गभोगसमय एव हिंसादिजन्यपापप्रयुक्तोऽल्पो दु खप्राप्तिरूपोऽपकर्षोऽभिहितो न स्वातन्त्र्येण ।

एव च यागीयहिंसाफलस्य दु.खस्य स्वर्ग एव भुक्तत्वान्न तत्प्रयुक्त व्रीह्यादिजन्मापि तु सञ्चि-तसुकृतदुष्कृतवशेन पुनर्जन्मग्रहणाय द्वारभूत व्रीह्यादिसंश्लेषरूप एवाभ्युपेय इति ध्येयम् ।

केचित्तु[1] "शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जद् याति" इति श्रुत्यनुसारेणेश्वरा-धिष्ठितानामेव जीवानामारोहावरोहौ भवत इति स्थिरीकृत्य ( ननु अशुद्ध नरकाद्यवरोहि पापि-जीवजात तत्र परमेश्वराधिष्ठान नोचितमितिचेन्न शब्दाद्=नहि शब्दसिद्धेऽर्थे तर्कविरोधो दूषणमित्यर्थ ) इत्येव सूत्रार्थयन्ति ।

अन्ये तु[2]—यातनाजीवानामशुद्धत्वादशुद्धमन्न स्यात् तथा च कथ योग्यदेह इति चेन्न शब्दाद्="देवा अन्नं जुह्वति तस्या आहुते रेत सम्भवति" इ ा देवैराहुतिरूपेण होमवचना-च्छुद्धत्वम्, अन्नस्य हि संस्कारेणैव शुद्धिरन्यथा यावज्जीव का गति स्यात्, तस्मात् संस्का-रशब्दाच्छुद्धमेवान्नम्, इत्येव व्याचक्षते ।

यत्तु—अस्मिन्नेव सूत्रे श्रीभाष्ये रामानुजाचार्य्यैं "स्वर्गोपभोगफलमिष्टादिकमेवाशुद्ध=पाप-मिश्रम् अग्नीषोमीयादिहिंसायुक्तत्वाद् अत इष्टादीना पापमिश्रत्वेनाशुद्धियुक्ताना स्वर्गेऽनुभाव्य फल स्वर्गेऽनुभूय हिंसाशस्य फल व्रीह्यादिस्थावरभावेनानुभूयते स्थावरभाव च पापफल स्मरन्ति "शारीरजै कर्मदोषैर्याति स्थावरता नर" इति, अतो व्रीह्यादिभावेन भोगायानुशयिनो जायन्ते इत्याशङ्क्यानुत्थाप्य तत्र कुत शब्दाद्=अग्नीषोमीयादे सज्ञपनस्य[3] स्वर्गलोकप्राप्तिहेतुतया हिंसात्वाभावशब्दात्, पशोर्हि सज्ञपननिमित्ता स्वर्गलोकप्राप्ति वदन्त शब्दमामनन्ति "यज्ञे हिसित पशुर्दिव्यदेहो भूत्वा स्वर्गं लोक याति" इति, शब्दार्थं कुर्वन्ति "हिरण्यशरीर ऊर्ध्वं स्वर्गं लोकमेति" इत्यादिकम्, अतिशयिताभ्युदयसाधनभूतो व्यापारोऽल्पदु खदोपि न हिंसा प्रत्युत रक्षणमेव, तथा च मन्त्रवर्ण[4] "न वा उं एतन् म्रियसे न रिष्यसि देवान् इदेषि पथिभि सुगेभि, यत्र यन्ति सुकृतो नापि दुष्कृतस्तत्र त्वा देव सविता दधातु" इति, चिकित्सक च

१ स्वमतेन सूत्रस्यार्थद्वयमभिधाय मतान्तरेणार्थान्तरमाह—"केचित्तु" इति=विज्ञानामृत कारा विज्ञानभिक्षव इत्यर्थ । २ अणुभाष्यकारा वल्लभाचार्य्या । ३ सञ्ज्ञपनम्—आलम्भन, हिंसनमित्यनर्थान्तरम् । ४ यजुर्वे अ २३ म १६ 'हे अश्व यत् त्वमस्माभि सज्ञप्यसे एतत् त्व न म्रियसे=मरण न प्राप्नोषि न च रिष्यसि=विनश्यसि, वै–उ–निपातौ पादपूरणे, अपि तु सुगेभि =साधुगमनै 'सुदुरोरधिकरणे' इति गमेर्डे, पथिभि =देवयानमार्गै देवान् इत्=प्रति गच्छसि, यत्र लोके सुकृत =पुण्यात्मानो यन्ति=गच्छन्ति दुष्कृतश्च न गच्छन्ति तस्मिन् लोके सविता देवस्त्वा दधातु=स्थापयतु' इति मन्त्रार्थ ।

तादात्विकाल्पदु खकारिणमपि रक्षकमेव वदन्ति पूजयन्ति च तज्ज्ञा इत्येव सौत्र शब्दादित्यश व्याख्याय हिंसनीयानुग्राहकप्राणवियोगकरव्यापारस्यैव हिंसात्व न यागीयपशुप्राणवियोगानुकूलव्यापारस्य, तस्य पश्वनुग्रहकरत्वादिति बोधित तत्तु ( प्राणवियोगफलोपहितस्तदनुकूलो व्यापारो हिंसा यागीयपश्वालम्भोऽपि भवति तथेति कथ न हिंसा, यथा हि व्रणिनो व्रणछेदनादिकं तदनुग्राहकमपि छेदन भवत्येव न तत्र तदनुग्राहकं यन्न भवति छेदनादि तदेव छिदिधात्वर्थ इति कल्प्यते, एवमत्रापि न हिंसनीयानुग्रहरहित यत्प्राणवियोजन सैव हिंसेति कल्पयितुमुचित, ततश्च यदि यागीयपशो 'हिरण्यशृङ्ग' इत्यादिवचनानुसारेण स्वर्गप्राप्ति प्रतीयते तदा सा भवतु नाम, देवताधिकरणोक्तन्यायेनार्थवादात्प्रतीयमानस्याप्यर्थस्योपगमाद् 'न वा उ एतन् म्रियसे' इत्यादिवाक्यप्रतिपाद्य तु तदालम्भस्याहिंसात्व स्तुत्यर्थमारोप्यत इत्येवमुचित प्रवृत्तिनिमित्तसद्भावेन तस्य हिंसात्वावश्यम्भावाद् ) इत्येवं ब्रह्मविद्याभरणे दूषितत्वादश्रद्धेयमेव।

किञ्च—यागीयहिंसाया पश्वनुग्रहार्थत्वेन प्रत्यवायकरत्वाभाव ब्रुवता श्रीभाष्यकाराणां 'परानुग्रहकरो व्यापारो धर्म परपीडाकरश्च व्यापारोऽधर्म' इत्येव धर्माधर्मयोर्निर्वचनमभिमत भाति, तच्च न स्थाने—तप स्वाध्यायजपादीना परानुग्रहकरत्वाभावेन धर्मत्वाभावप्रसङ्गाद्, मद्यपानादेश्च परपीडाकरत्वाभावेनाधर्मत्वाभावप्रसङ्गाच्च, परकीयरमणीमन सन्तोषाय परकीयरमणीरमणे धर्मोत्पादापत्तेश्चातो विहितव्यापारस्य धर्मत्व निषिद्धव्यापारस्य चाधर्मत्वमित्येवास्थेय न श्रीभाष्यकृद्भ्यूहित, स्पष्ट चैतत्—

" अनुग्रहाच्च[३] धर्मत्वं पीडातश्चाप्यधर्मता, २४३
वदतो जपसीध्वादिपानादौ नोभयं भवेत्,
क्रोशता हृदयेनापि गुरुदाराभिगामिना २४४
भूयान् धर्म प्रसज्येत भूयसी ह्युपकारिता"

इत्यादिना चोदनासूत्रे श्लोकवार्तिक इति तत्रैव निरीक्षणीयम्।

अपि च—एव कथंचिद् यागीयहिंसाया अहिंसात्वापादनेपि सोमोच्छिष्टभक्षणस्य सौत्रामण्यादिषु सुराग्रहणादीना चानुच्छिष्टभक्षणत्वासुराग्रहणत्वाद्यापादनस्य वक्तुमशक्यत्वात् तत्प्रयुक्ताशुद्धेर्दुर्वारत्वात्कथ यागादेरविशुद्धि युक्तत्वविरहाभिधानमित्यपि ते प्रष्टव्या,

१ अस्यार्थस्य लोकसिद्धत्वमाह—"चिकित्सक च" इति, हिंसात्वे सति ह्युक्तदोषसम्भव हिंसात्वाभावादेव दूरोत्सारितो दोष, अयमेव समीचीनो दुष्प्रधर्षेण परिहार, अत श्येनाग्निषोमीयवैषम्य चेदमेवाल्पदु खदोऽप्यतिशयिताभ्युदयसाधको व्यापारो रक्षणम् अनर्थोदर्को व्यापारो हिंसेत्यर्थ, इत्येतद्भाष्यव्याख्याने सुदर्शनाचार्य्यै । २ अर्थवादवाक्याना न स्वार्थे प्रामाण्यमपि तु विधेयनिषेध्यस्तवननिन्दनद्वारा प्रवृत्तिनिवृत्तिरूपे तात्पर्य्ये प्रामाण्यमिति कर्ममीमासका, प्रमाणान्तराविरुद्धस्वार्थेऽप्यर्थवादवाक्याना प्रामाण्यमिति प्रथमाध्यायतृतीयपादेऽष्टमदेवताधिकरणे ब्रह्ममीमासका इति भाव । ३ विषयानुरूपफलदायिवादिना परस्यात्मनो वा पीडानुग्रहनिबन्धन धर्माऽधर्मत्वमाश्रित, ततश्च जपे सुरापाने च परोपकारापकाराभावाद् धर्माधर्मत्वे न स्यातामित्याह "अनुग्रहाच्च" इति, गुरुदाराभिगमश्च धर्म स्यादित्याह "क्रोशता" इति, यद्यपि गुरुदाराभिगामी हृदयक्रोशमल्पमात्मनोऽपकार करोति तथाप्युपकारभूयस्त्वाद् धर्म एव भूयान स्याद् इत्येतदर्थ इति न्यायरत्नाकरकार ।

किञ्च—केनचिन्निमित्तेन शप्तेन धर्मेण मृगयोनिमापन्नेन ( यदि त्वा कश्चिद् यज्ञे हन्यात् तदा तव मृगत्व नङ्क्ष्यति ) इति शापान्तं बुद्ध्वा श्यामाकनीवारादिचरुणा देवयजन कुर्वाणं कञ्चिद् वनवासिन सत्यनामान ब्राह्मणमुपसृत्य छलेन ( पशुपुरोडाश विना यज्ञोऽयमङ्गहीनो न स्वर्गफलक पशुक्रयणासामर्थ्ये तु "मा भो प्रक्षिप होत्रे त्व गच्छ स्वर्गमनिन्दित" ) इत्येव प्रलोभ्य स्वकीयहिंसाया प्रवर्तित स, प्रवृत्तस्य च तस्यानुष्ठित बहु तपो नष्टमित्येवमाख्यायते भारते यदि च हिंसनीयाननुग्रहकरव्यापारस्यैव प्रत्यवायकरत्वं नेतरस्येत्यभ्युपेयेत तर्हि कथमेतत्सङ्गच्छेत, तदवश्यं चैतन्मन्तव्य यद् यागीयापि हिंसाऽनर्थजनिकेति ।

एव विचख्नुगीतेऽपि "अव्यवस्थितमर्यादैर्विमूढैर्नास्तिकैर्नरै, सशयात्मभिरव्यक्तैर्हिंसा समनुवर्णिता, सर्वकर्मस्वहिंसा हि धर्मात्मा मनुरब्रवीत्" इति हिंसां निन्दित्वा "पायसै सुमनोभिश्च तस्यापि यजन मतम्" इत्येव सात्त्विक यजनमेवाभिहितं न हिंसादिमिश्रम् ।

तथा पितापुत्रसवादेऽपि "तातैतद् बहुशोऽभ्यस्त जन्मजन्मान्तरेष्वपि, त्रयीधर्मसधर्माढ्य न सम्यक् प्रतिभाति मे" इत्यादिना यागादेरधर्मयुक्तत्वमभिहित भारते ।

तुलाधारजाजलिसवादेऽपि व्यासदेवेनाहिंसैव समनुवर्णिता भारते ।

एव च स्पष्टार्थकव्यासवचोविरुद्ध शाङ्कराणा रामानुजीयाना माध्वाना च व्याससूत्रार्थ वर्णनमसमीचीनमिति निष्पन्नम् ।

अन्ये तु—'अग्नीषोमीय पशुमालभेत' इत्यत्रालम्भन न हिंसन किन्तु स्पर्श, अग्निहोत्र प्रकरणपठिते 'वत्समालभेत' इति वाक्ये स्पर्शार्थकत्वनिर्णयाद्, हिंसा त्वङ्गयागविशसन-प्रकारोपदेशाभ्यामाक्षेपलभ्या एव चाक्षेपलभ्यार्थेन विरोधेपि वेदस्याप्रामाण्यप्रसक्त्यभावेन तत्सकोचे न मानम्, अन्यतराप्रामाण्यभीत्या हि सङ्कोच इत्येव व्यवस्थापनेन 'न हिंस्याद्' इति सामान्यविधे सङ्कोचं वारयन्ति ।

ननु 'यज्ञार्थं पशव सृष्टाः स्वयमेव स्वयम्भुवा, यज्ञोऽस्य भूत्यै सर्वस्य तस्माद् यज्ञे वधोऽवध' - 'या वेदविहिता हिंसा नियतास्मिँश्चराचरे, अहिंसामेव ता विद्याद् वेदाद् धर्मो हि निर्बभौ' इति मनुवाक्यैर्यागीयहिंसाया अहिंसात्वबोधनेन पापाभावप्रतिपादकै ( निन्दाप्रायश्चित्तोपदेशासमभिव्याहृतविधिवाक्यबोध्यप्रवर्तनाया स्वविषयप्रवृत्तिविषये धात्वर्थे सामान्यतोऽनर्थ

१ शान्तिपर्वणि मोक्षधर्मे २७२ एतदध्याये "तस्य तेनानुभावेन मृगहिंसात्मनस्तदा । तपो महत्समुच्छिन्न तस्माद् हिंसा न यज्ञिया" इत्येतदष्टादशे श्लोके 'यज्ञियापि हिंसा न धर्माय' इति स्पष्टमभिधानान्न तद्विरुद्ध व्याससूत्रार्थवर्णन समीचीनमिति भाव । २ महाभा० मोक्षध० अ० २६५ श्लो० ५। ३ मध्वाचार्यैरपि 'हिंसारूपत्वात्पापसम्भवाद् दुःख भवत्विति चेन्न शब्द-विहितत्वाद्' 'हिंसा त्ववैदिकी या तु तयानर्थो ध्रुव भवेद्, वेदोक्तया हिंसया तु नैवानर्थ कथञ्चन' इत्येव व्याससूत्रार्थकरणात् तदीयोऽप्यर्थ शाङ्करभाष्यानुसारीति भाव । ४ शाब्दिकमञ्जूषाकार-नागोजिभट्टा । ५ विशसन=हनन, तत्प्रकारोपदेशश्च "हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षस" इत्यादिश्रुत्युक्तो बोध्य । ६ अ ४ श्लो ३९। ७ अ ४ श्लो ४४। ८ 'श्येनेनाभिचरन् यजेत' इति वाक्यबोध्यप्रवर्तनाया अभिचारस्योपपातकत्वेन गणनान्निन्दासमभिव्याहृतत्वेन "अभिचारहीन च त्रिभि कृच्छ्रैरिति प्रायश्चित्ताम्नानेन च प्रायश्चित्तोपदेशसमभिव्याहृतत्वेन च न तस्या स्वप्रवृत्तिविषये धात्वर्थेऽनर्थहेतुत्वप्रतिक्षेपकत्वमिति भाव ।

हेतुत्वप्रक्षेपकत्वम् ) इति कल्पनेन 'न हिंस्याद्' इति सामान्यनिषेधस्य वैधहिंसातिरिक्तहिंसापरत्वमास्थीयते, आक्षेपलभ्याया अपि हिंसाया विधितात्पर्यविषयत्वेन तत्राप्यनर्थहेतुत्वप्रतिक्षेप सूपपाद , अत एव "हिंसा चैवाविधानतः" इत्यवैधहिंसैव पापजनिकोक्ता मनुना न वैधहिंसा, छान्दोग्यश्रुतिरपि "अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्य" इति तीर्थपदाभिधेययज्ञादिभ्योतिरिक्तस्थल एवाहिंसामुपदिशति, अत एव मरणान्तप्रायश्चित्ताहवाभिमुखहननोचितदण्डरूपचौरहननादीना न पापजनकत्व, शुद्ध्यर्थं विहितमरणे तस्यायुक्तत्वाद् 'न दोषो हिंसायामाहवे' इति स्मृतेश्च चौराद्यवधे राज्ञो दोषश्रवणाच्च, तस्मादगर्हितहिंसातिरिक्तविषयोय 'न हिंस्याद्' इति निषेध , अगर्हिता चानुपदिष्टप्रायश्चित्तिका हिंसेति चेद्,

अत्राहुर्मञ्जूषाकारा —( मनुवचनेऽवध इत्यादावनुदरा कन्येतिवदल्पार्थे नञ सत्त्वाद्, अन्यथा घटोऽघट इतिवदस्याबोधकत्वेनावधपदस्य पापाजनकत्वलक्षणापत्ते , यज्ञानुपक्रम्य 'अहिंसा परमो धर्मो गीतो वै मनुना पुरा' इति ब्रह्मवैवर्तप्रथमखण्ड उक्ततया च मदुक्तस्यैवौचित्याच्च, परमत्र च पापाजनकत्वेनास्य, अल्पीय प्रायश्चित्तेन परिहर्तुं शक्यत्वात् तत्र न द्वेष , किञ्च महत फलस्य कामनया क्षुद्रे तत्र न द्वेष, पशुहिंसाजन्यपापस्याल्पप्रायश्चित्तोपदेशेन बहुव्ययायाससाध्ययागजन्यस्वर्गात् प्रथममेवाल्पस्य मनुना यागविषयेऽत्यल्पत्वबोधनात्, एव च न तद्बलेन विधेः स्वविषयेऽनर्थहेतुताप्रतिक्षेपकत्वम्,

अत एव गीताया 'यज्ञाना जपयज्ञोस्मि' इत्यादिना जपयज्ञस्याहिंसारूपत्वेन प्राशस्त्यमुक्त, तथा 'स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि, धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यत' इत्युपक्रम्य 'सुखदु खे समे कृत्वा लाभालाभौ जयाजयौ । ततो युद्धाय युज्यस्व नैव पापमवाप्स्यसि' इत्यनेन विहितेपि युद्धे पाप वदताऽतादृशस्यँ यज्ञेपि तदुक्तप्रायमेव न चापशब्दज्ञानजाधर्मस्य कूपखानकन्यायेन सुशब्दज्ञानजधर्मेण नाश फलान्तर चेति

---

१ 'अदत्तानामुपादान हिंसा चैवाविधानत । परदारोपसेवा च शारीर त्रिविध स्मृतम् ' अ १२ श्लो ७। २ अतएव=निन्दाप्रायश्चित्तोपदेशसमभिव्याहृतहिंसाया एव पापजनकत्वं न निन्दाद्यसमभिव्याहृतहिंसाया इत्यङ्गीकारादेवेत्यर्थ । ३ 'सुरापस्य ब्राह्मणस्योष्णामासिञ्चेयु सुरामास्ये मृत शुद्ध्येद्' इति शुद्ध्यर्थं विहितात्महननस्य पापजनकत्वाभिधानस्यायुक्तत्वादित्यर्थं । ४ परस्पराह्वानपूर्वके धर्मयुद्धे योद्धुमभिमुखस्य हनने दोषाभावस्य कण्ठतएवोक्तेश्चाहवाभिमुखहननस्य न पापजनकत्वमित्यर्थं । ५ 'अदण्ड्यान् दण्डयन् राजा दण्ड्यॉश्चैवाप्यदण्डयन्। अयशो महदाप्नोति नरक चैव गच्छति' 'स्तेन प्रकीर्णकेशो मुसली राजानमीयात्कर्माचक्षाण पूतो वधमोक्षाभ्याम् अघ्नन्नेनस्वी राजा' इति राज्ञो दण्डरूपचोरहननाननुष्ठाने स्तेनाहनने च दोषस्मरणात् तादृशहननेपि दोषाभाव सिद्ध एवेत्यर्थ । ६ 'खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा। सङ्करीकरण ज्ञेय मीनाहिमहिषस्य च' इति अ १० श्लो ६९ मनुना खरतुरगादिपशुहननस्य सङ्करीकरणरूपपापत्वमभिधाय 'सङ्करापात्रकृत्यासु मास शोधनमैन्दवम्' श्लो १२६ इति चान्द्रायणानुष्ठानरूपाल्पप्रायश्चित्तोपदेशेनेत्यर्थ । ७ 'नैव पापमवाप्स्यसि' इत्यनेन ( एव फलाभिसन्धिशून्यतयाऽनुष्ठिते पाप न प्राप्नोषि ) इत्युक्त्याऽर्थादेतद् गम्यते 'सकामकृते पाप प्राप्नोषि इति, एव च अतादृशस्य=सकामस्य यज्ञेपि तत्—पापसत्त्वमुक्तप्रायमित्यर्थं ।

पस्पशायाम्[1] उक्त, कूपखानकस्तत्खननवेलाया मृदालिप्तस्ततो जल लब्ध्वा त लेप दूरीकरोति फलान्तर च लभते तेन न्यायेन यज्ञजधर्मेण तत्पापनाश फलान्तरलाभश्चेति न दोष इति वाच्यम्, अपशब्दज्ञानादधर्मस्यावाचनिकत्वेन केवल वैपरीत्यमात्रेण कल्प्यस्यातिस्वल्पत्वादुत्कृष्टेन साधुशब्दज्ञानजधर्मेण नाशेपि न हिंस्यादिति वचनबोधितपापस्य तेन धर्मेण वचन विना नाशायोगाद्, उक्तगीतावाक्याच्च, अत एव इन्द्रादे शताश्वमेधफलस्वर्गभोगसमयेऽनकशो रावणमहिषासुरादिभ्यो दु खधारा श्रुतिपुराणादिषूपवर्णिता, यज्ञान्तर्गतहिंसादिजन्यपापफलस्य यज्ञफलभोगान्तरुत्पत्तेरुपपत्तिसिद्धत्वाद्, एतेन (अध्वर इति यज्ञनाम ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधोऽध्वर) इति निरुक्तम् "अहिंस्र" इति तद्भाष्यमपि व्याख्यातं, नञोऽल्पार्थत्वात्, अत एव "तस्मादभ्युदययोगादहिंस्र इत्युपपद्यत" इति तद्भाष्य उपसहृतम्, उक्त च—"स्वर्गेपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृति" इति, "अहिंसन् सर्वभूतानि" इति श्रुतिस्त्ववैधहिंसात्यागस्येष्टसाधनत्व वैध्याश्च तत्त्वमाह नतु वैध्या अनिष्टसाधनत्वाभाव, हिंसाविषयोपि हि हिंसाया स्वर्गसाधनत्वमात्रमाहुर्नत्वनर्थहेतुताप्रतिक्षेपमपि, अल्पायुष्ट्वाद्यनिष्टबोधकस्मृतिविरोधात्, तदुक्त पातञ्जलभाष्ये—'यदि कथञ्चित्पुण्यावापगता हिंसा भवेत् तदा तत्र सुखप्राप्तौ भवेदल्पायु'[2] इति, अत एव क्षत्रियाणामपि युधिष्ठिरादीना स्वधर्मयुद्धेन जातज्ञातिहिंसाया प्रायश्चित्तश्रवणं, तथा च भागवते मुचुकुन्द प्रति कृष्णवाक्य 'क्षत्रधर्मे स्थितो जन्तून्न्यवधीर्मृगयादिभि, समाहितस्तत्तपसा जह्यघ मदपाश्रित' इति, आदिना[3] युद्धम् इति।

अत्रेद बोध्यम्—शूद्रव्यापादकदण्डप्रायश्चित्तरूपहननस्य पापाजनकत्वेप्यदण्डनीयाप्रायश्चित्तिपशुहननस्य पापाजनकत्वे मानाभावान्न तद्दृष्टान्तबलेन यागीयपशुहननस्य पापाजनकत्वमास्थातु युक्तम्,

वस्तुतस्तु—तैत्तिरीयश्रुतौ "परागावर्ततेऽध्वर्यु पशो सञ्ज्ञप्यमानात्" इति पापभयेनाऽध्वर्यो पशुहननपराङ्मुखत्वाभिधानात्, "रिच्यत इव वा एष प्रेव वा रिच्यते यो याजयति प्रति वा गृह्णाति याजयित्वा प्रतिगृह्य वानश्नन् त्रि स्वाध्यायमधीयीत" इति ऋत्विजां प्रायश्चित्तोपदेशाच्च "यत्पशुर्मायुमकृतोरो वा पद्भिराहते, अग्निर्मा तस्मादेनसो विश्वान् मुञ्चत्वंहसा"[4] इति मन्त्रवर्णे पशुहननजन्यपापविमोचनायाग्निप्रार्थनाश्रवणाच्च यागीयहिंसाया अपि

---

१ महाभाष्ये प्रथमाह्निके भगवता पतञ्जलिना 'कि पुन शब्दज्ञाने धर्म आहोस्वित्प्रयोगे' इति पक्षद्वयमुत्थाप्य 'ज्ञाने धर्म इति चेत् तथाऽधर्मोपि प्राप्नोति यो हि शब्दाञ् जानात्यपशब्दानप्यसौ जानाति यथैव शब्दज्ञाने धर्म एवमपशब्दज्ञानेप्यधर्म' इत्याक्षेपे 'शब्दप्रमाणका वय यच्छब्द आह तदस्माक प्रमाण शब्दश्च शब्दज्ञाने धर्ममाह नापशब्दज्ञानेऽधर्ममाह' इति समाधाय 'अथवा कूपखानकवदेतद् भविष्यति' इति समाधानान्तरमुक्तमित्यर्थ। २ यो सू ३४ पा २।
३ मृगयादिभिरित्यत्रादिपदेन युद्ध गृह्यते—तथाचाखेटे रणे च यत्प्राणिहननमाचरित तत्प्रयुक्तमघ मत्परायण सन् तपसा विनाशयेत्युक्त्याऽऽहवाभिमुखहननेपि प्रत्यवायोस्तीति बोधित, यदि नाम 'न दोषो हिंसायामाहवे' इति कण्ठतोऽभिहितेपि दोषाभावे प्रत्यवायसत्ताभ्युपेयते तदा किमुवचनीयं कण्ठतो दोषाभावानभिधानस्थले प्रत्यवायोस्तीति भाव। ४ हन्यमान पशुर्यद् मायुम्=आर्तनाद कृतवान् यच्च पीडया पादाभ्या वक्ष स्थल ताडितवान् तत्पशुपीडारूपपापादग्निर्मा मोचयत्विति भाव।

क्षयातिशयौ च फलागतावप्युपाय उपचरितौ, क्षयित्वं च स्वर्गादेः सत्त्वे सति कार्यत्वादनुमितम् । ज्योतिष्टोमादयः स्वर्गमात्रस्य साधनं, वाजपेयादयस्तु स्वाराज्यस्येत्यतिशययुक्तत्वम्,

परसम्पदुत्कर्षो हि हीनसम्पदं पुरुषं दुःखाकरोति,

---

पापरूपत्वेन प्रायश्चित्तोपदेशसमभिव्याहृतत्वेन गर्हितत्वाच्च 'अगर्हितहिंसातिरिक्तविषयोय न हिंस्यादितिनिषेध' इत्यभ्युपगमेऽपि न निस्तार इत्यलमतिविस्तरेण ।

एव हिंसाद्यविशुद्धियुक्तत्वेन यागादेर्हिंसादिजन्यदु खसभिन्नस्वर्गरूपसुखसाधनत्वेन दृष्टोपायसाम्यमभिधाय धर्मान्तरेणापि साधर्म्यमाख्यातु 'क्षयातिशययुक्त' इत्यभिहित मूले, तत्र क्षयातिशयदोषयोरुपेये सत्त्वेऽप्युपाये तद्विरहात्कथमुपायस्य क्षयातिशययुक्तत्वाभिधानमित्यत आह—'क्षयातिशयौ च' इति, क्षय=नाशप्रतियोगित्वम्, अतिशय=तारतम्य, न्यूनाधिक्यमिति यावद्, यद्यपि क्षयातिशयौ फलगतौ=यागफले स्वर्ग एव वर्तमानौ नतु तदुपाये यागे तथापि उपाये=स्वर्गसाधने यागे, उपचरितौ=उपचारेणाभिहितावित्यर्थ, उपचारश्चात्र स्वाश्रयजनकत्वरूपं, उपायोपेययोरभेदविवक्षा वा ।

एव च यथा लौकिक उपाय क्षयिसातिशयसुखजनकस्तथा वैदिकोऽपि यागाद्युपायस्तथाविधसुखजनक इति सिद्धमानुश्रविकस्य दृष्टसाम्यमिति भाव ।

'तद्यथेह' इत्यादिश्रुत्या स्वर्गादे सिद्धेऽपि क्षयित्वे दार्ढ्याय तत्र तर्कसहकारमप्याह—"क्षयित्वं च" इति, 'स्वर्गादिक क्षयित्ववद् भावत्वे सति कार्य्यत्वाद् घटादिवद्' इत्यनुमानेन स्वर्गादे. क्षयित्वमवगतमित्यर्थ, ध्वसे व्यभिचारवारणाय 'सत्त्वे सति' इति विशेषणम् ।

स्वर्गादे क्षयित्व प्रसाध्य सातिशयत्व प्रदर्शयति—'ज्योतिष्टोमादय' इति, स्वर्गमात्रस्य=देवभावावाप्तिपुरस्सरामृतपानाप्सरोविहारादिरूपसुखमात्रस्य साधन ज्योतिष्टोमादय, स्वाराज्यस्य=स्वर्गाधिपत्यरूपदेवेन्द्रभावस्य साधन वाजपेयादय इत्यस्ति यागादेरतिशययुक्तत्वमित्यर्थ ।

नन्वस्तु सातिशयत्वमेतावता कथं दु खसम्भिन्नसुखजनकत्व यागादेरित्यत आह 'परसम्पदुत्कर्षो हि' इति ।

हि=यतोऽन्यदीयैश्वर्य्याधिक्यमुपलभ्यमानं न्यूनैश्वर्य्यशालिन जन दु खाकरोति=पीडयति अतोऽतिशययुक्तत्वमपि दु खकरमित्यर्थ,

एवं च स्वर्गादेरपि क्षयातिशययुक्तत्वेन दु खसंभिन्नत्वात् तदुपाययागादेर्नात्यन्तिकसुखजनकत्वमिति सिद्धमानुश्रविकस्यापि कर्मकलापस्य दृष्टोपायसाम्यमिति बोधितम् ।

स्पष्टीकृत चैतद् भगवता व्यासेनापि 'एव लोक पर विद्यान्नश्वर कर्मनिर्मित, सतुल्यातिशयध्वंस यथा मण्डलवर्तिना' 'श्रुत च दृष्टवद् दुष्ट स्पर्द्धाऽसूयात्ययव्ययै, बह्वन्तरायकामत्वात्

---

१ स्वौ=क्षयातिशयौ, तदाश्रय स्वर्गादि, तज्जनकत्व यागादेरित्यर्थ । २ 'दु खात्प्रातिलोम्ये' इति सूत्रेण डाचि दु खाकरोतीति साधु । ३ भाग० स्क० ११ अ० ३ श्लो० २० । जनक प्रति प्रबुद्धाख्ययोगेश्वरवाक्यमिद, 'सतुल्यातिशयध्वस=सह तुल्येनातिशयेन ध्वसेन च वर्तमानम्, अतस्तुल्ये स्पर्धा अतिशयेऽसूयाध्वसालोचनैर्भयादिक चापरिहार्यमित्यर्थ, यथा खण्डमण्डलपतीना स्पर्धादि तद्वत्' इत्येतट्टीकाया श्रीधर ।

"अपाम सोममममृता अभूम" इति चामृतत्वाभिधानं चिरस्थेमानमुपलक्षयति, यदाहुः—"आभूतसंप्लवं स्थानममृतत्वं हि भाष्यत" इति— अत एव च श्रुतिः—"न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः, परेण नाकं निहितं गुहायां विभ्राजते यद् यतयो विशन्ति"

---

कृषिवच्चापि निष्फलम्' इत्येव भागवते ।

ननु स्वर्गस्य क्षयित्वे प्रागुक्ताया अमृतत्वबोधिकाया श्रुते का गतिरित्यत आह "अपाम सोमममृता" इति, चिरस्थेमान=चिरकालस्थायित्वम्, अमृता इत्यत्र नञोऽल्पार्थकत्वेन अल्पं=मर्त्यापेक्षया न्यून मृत=मरण येषा तेऽमृताश्चिरकालस्थायिन इत्यर्थ,

"नाकस्य पृष्ठे सुकृतेऽनुभूत्वेम लोक हीनतर वा विशन्ति" 'क्षीणे पुण्ये मर्त्यलोक विशन्ति' इति श्रुतिस्मृतिभ्या स्वर्गिणामध पतनरूपमरणसत्त्वावगमेनैतादृशार्थस्यैवाऽौचित्यमिति भाव,

एतदेव विष्णुपुराणवाक्येन द्रढयति—'यदाहु' इत्यादिना—

'आभूतसप्लव स्थानममृतत्व हि भाष्यते। त्रैलोक्यस्थितिकालोयमपुनर्मार उच्यते' इति हि समग्र श्लोकं 'आभूतसप्लव=ब्रह्माह पर्यन्त यत् स्थानं तदेवामृतत्वमुपचारादुच्यते, उपचारबीजमाह 'त्रैलोक्येति' अपुनर्मार=पुनर्मृत्युरहित क्रममुक्तिस्थानत्वाद्' इत्येतद् व्याख्याया रत्नगर्भभट्ट, श्रीधरस्वामी च ।

यागादेर्नामृतत्वप्रापकत्वमिति स्वोक्त दृढीकर्तुमाम्नायसाक्ष्यमाह—अत एव च श्रुति इति यतो न यागादेरमृतत्वोपायत्वमत एव च श्रुतिरपि तथा शास्तीत्यर्थ,

का सा श्रुतिरित्याकाङ्क्षाया कैवल्यश्रुतिमुदाहरति-"न कर्मणा" इति, कर्मणा=श्रौतेन स्मार्तेन वा कर्मकलापेन नामृतत्वम् आनशु=प्राप्तवन्त पूर्वे महात्मान इति शेष। एवं प्रजया=पुत्रेणापि न[3], एव धनेन[4]=दैवेन मानुषेण वा वित्तेनापि नेत्यनुषङ्ग किन्तु एके=मुख्या विवेकिन=त्यागेन=त्यागसाध्येन[5] विवेकज्ञानेनामृतत्व प्रापुरित्यर्थ,

"सोय मनुष्यलोक पुत्रेणैव जय्यो नान्येन कर्मणा, कर्मणा पितृलोको विद्यया देवलोक"इति बृहदारण्यकश्रुत्या कर्मादीनामन्यसाधनत्वेनाभिधानान्न कर्मादीनाममृतत्वोपायत्वमिति तत्त्वम्।

---

१ भा० स्क० ११ अ० १० श्लो० २१ उद्धव प्रति श्रीकृष्णवाक्यमिद, श्रुत=स्वर्गादि तदपि दुष्ट, स्पर्द्धा=परसुखासहनम्, असूया=परगुणे दोषाविष्करणम्, अत्यय=नाश, व्यय=अपक्षय तैर्दुष्ट, 'यद्वा व्ययो नाश, अत्यय=अन्यस्यातिशय, त दृष्ट्वा तदप्राप्त्या दु खमित्यर्थ, किञ्च बहवोऽन्तराया=वैगुण्यादिरूपा विघ्ना यस्मिन् कामे सुखे तस्य भावस्तत्त्व तस्मात् कृषिर्यथा बहुविघ्ना तद्वद्' इत्येतदर्थ इति श्रीधर। २ विष्णुपु० अश २ अ० ५ श्लो० ९६ पूर्वत्र 'देव यानमार्गेण जनादिलोक गता अमृतत्व भजन्त' इत्यभिहित, तत्र कीदृशममृतत्वमित्याकाङ्क्षायामुक्तम् 'आभूतसप्लवम्' इति, एव च यदा ब्रह्मलोकनिवासिनामपि गौणममृतत्व तदा किमु वक्तव्य स्वर्गिणा गौण तदिति बोधितम्। ३ 'अमृतत्वमानशु' इति वक्ष्यमाणस्यानुषङ्ग, एवमग्रेपि। ४ धनं द्विविधम्, अपरविद्याभिधेय प्राणोपासनादि दैवम्, पशुवित्तादि मानुषमिति। ५ त्यागेन=अभिमानत्यागेन एके केचिदेवामृतत्वमानशु प्राप्तवन्तो न सर्वे, अभिमानत्यागस्य तत्त्वज्ञानजन्यतया दुर्लभत्वादित्यर्थ इति साङ्ख्यप्रवचनभाष्यकारा विज्ञानभिक्षव। अ० १ सू० ८५।

**तथा "कर्मणा मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः, तथाऽपरे ऋषयो मनीषिणः पर कर्मभ्योऽमृतत्वमानशुः" इति,**

---

तदमृतत्व किं स्वर्ग एव नेत्याह—"परेण नाकम्" इति, नाक=नाकपदाभिधेयस्वर्गात् =रण=परम्—उत्कृष्टं भिन्न चेत्यर्थ, स्वर्गाद् भिन्नत्वेऽपि न ब्रह्मलोकवद् दूरमपि तु सन्निहितमित्याह—"निहितम्" इति, गुहाया=बुद्धौ निहित=ब्रह्मरूपेण स्थित विभ्राजते=स्वयप्रकाशत्वेन दीप्यते, तर्हि बुद्धिस्थत्वेनातिसुलभत्वात्सर्वैरेव कथ न प्राप्यमित्यत्राह—"यद् यतयो विशन्ति" इति, यतय=यत्नशीला सन्यासिनो यत्स्वरूपभूतं तत्त्व विशन्ति=स्वात्मतया साक्षात्कुर्वन्ति, विवेकिना स्वरूपभूतत्वेन सन्निहितमप्यविवेकिना दूरभूतमित्यर्थ ।

एतच्छ्रुतिसमानार्थकश्रुत्यन्तरमप्यस्तीत्याह–'तथा' इति, तदेव श्रुत्यन्तर दर्शयति "कर्मणा मृत्युम्" इति, ये प्रजावन्त =पुत्रिणो गृहस्था द्रविणमीहमाना =सुवर्णपशुप्रभृति मानुष वित्तमभिलषन्त सकामा ये चैवविधा सकामा ऋषय =वानप्रस्थास्ते सर्वे कर्मणा मृत्युमेवं निषेदु = प्रापु नामृतत्वमित्यर्थ , यथा सकामा गृहस्था वानप्रस्था वा कर्मणा मृत्यु प्रापुस्तथा तेभ्योऽपरे ये निष्कामा मनीषिण =पुत्रवित्तादिभ्यो विरज्य सन्यासपुरस्सर प्रकृतिपुरुषान्यताप्रत्ययशालिनस्ते ऋषय कर्मभ्यः पर कर्मकलापजन्यस्वर्गादिभ्य उत्कृष्टममृतत्व प्रापुरित्यर्थ ।

नन्वेव[6] यागादिजन्यस्वर्गस्य हिंसाजन्यदुरदृष्टप्रयुक्तदुःखेन सातिशयत्वप्रयुक्तदुःखेन च सम्भिन्नत्वात् क्षयित्वेन च वस्तुतत्त्वसद्भावादौपचारिकामृतत्वे कथ 'यन्न दुःखेन सम्भिन्नम्' इति श्रुत्यभिहितामृतत्वरूपस्वर्गलक्षणसङ्गतिरिति चेद्—

अत्र ब्रूम —तत्त्ववित्प्राप्यनिरतिशयानन्दरूपमुख्यामृतत्वलक्षणसुखविशेषस्यैव 'यन्न दुःखेन' इति श्रुत्या स्वर्गपदार्थत्वेन लक्षितत्वाद् यागादिजन्यसातिशयसुखविशेषरूपस्वर्गे लक्षणसङ्गमनाभावेऽपि दोषाभावान्नाऽसङ्गतिरिति ।

अत्रेद बोध्यम्—स्वर्गशब्दो हि तत्तदर्थविशेषे तत्र तत्र प्रयुज्यमान उपलभ्यते, एकत्र तावद् 'अणु पन्थाः वितत पुराणो मा स्पृष्टोऽनुवित्तो मयैव, तेन धीरा अपियन्ति[7] ब्रह्मविद स्वर्गं

---

१ एनबन्त परेणेत्यव्यय तेन योगे नाकशब्दादुत्सर्गेणान्याराादित्यादिना सूत्रेण प्राप्ता पञ्चमी बाधित्वा, एनपाद्वितीयेत्यनेन द्वितीया केवलेन दिशि दृष्टेन परशब्देन योगे तु नाकात्पञ्चम्येवेतिबोधयितु विवृणोति स्वर्गात्परमिति । २ नाकमित्यविद्यामुपलक्षयति–अविद्यात परमित्यर्थ इति तात्पर्य्यटीकाया वाचस्पतिमिश्रा , स्वर्गस्योपरि अथवा पर नाकम्=आनन्दात्मानमित्यर्थ इति दीपिकाया शङ्करानन्दा । ३ निहित गुहायामिति लौकिकप्रमाणागोचरत्व दर्शयति, इति तात्पर्य्यटीका । ४ मृत्युमेव=प्रेत्यभावाख्य पुनर्जन्मैवेत्यर्थ । ५ यद्वा कर्मभ्य इति ल्यब्लोपे पञ्चमी, कर्माणि सन्यस्येत्यर्थ । तात्पर्य्यटीकाया मिश्रास्तु 'पर कर्मभ्य इति कर्मपरित्यागमपवर्गसाधन सूचयति, अमृतत्वम् इति चापवर्गो दर्शित' इत्यर्थमाहु । ६ यदुक्त पूर्वत्र 'अत्र यद् वचनीय तत्समाधानावसरे वक्ष्यत' इति तदेव वक्तुमारभते–'नन्वेवम्' इत्यादिना । ७ अणु = सूक्ष्म –दुर्विज्ञान , वितत =विस्तीर्ण –विस्पष्टतरणहेतु , पुराण =चिरन्तन –श्रुतिसिद्ध , पन्था = ज्ञानरूपब्रह्मप्राप्त्युपाय मा स्पृष्ट =स्पृष्टवान्—मया स्पृष्ट इति वा मया लब्ध इति यावद् मयानुवित्त =फलपर्यवसायिनी परिपाकदशामानीत , मयेति शब्दो मन्त्रद्रष्टृऋषिपरामर्शी, तेन=ज्ञान मार्गेण धीरा —प्रज्ञावन्तोऽन्येपि ब्रह्मविद इत =शरीरपाताद् ऊर्ध्वं, स्वर्ग लोक=प्रकाशस्वरूपनिरतिशयब्रह्मानन्दम्, अपियन्ति=प्राप्नुवन्ति, इति मन्त्रार्थ ।

लोकमित ऊर्ध्वं विमुक्ता' इत्यादौ मोक्षस्थले तत्त्ववित्प्राप्यनिरतिशयब्रह्मानन्दरूपसुखविशेषे, अपरत्र "स्वर्गकामो यजेत" इत्यादौ 'नाकस्य पृष्ठे सुकृतेऽनुभूत्वा इति वाक्यान्तरसहकारेण कर्मिप्राप्यनाकपृष्ठभोग्यक्षयिसुखविशेषे, इतरत्र च 'चन्दन सूक्ष्मवासासि च स्वर्ग' इत्यादौ क्षणिकसुखसाधने मनोज्ञे चन्दनादौ, तत्र तत्त्ववित्प्राप्यो यो निरतिशयाऽलौकिकसुखविशेष स एव स्वर्गशब्दस्य मुख्योऽर्थ., तदभिप्रायेणैव च 'यत्र दु खेन सम्भिन्नम्' इत्यादिलक्षण-वाक्यम्, इतरत्र च क्वचिल्लक्षणावृत्त्या[1], क्वचिद्गौण्या[2] वृत्त्या स्वर्गशब्दस्य प्रयोग ,

तथाचाहुरप्पयदीक्षिता[3] "निरतिशयब्रह्मानन्दवाचकस्य स्वर्गशब्दस्य स्वर्गकामादिवाक्येऽनेकमन्त्रलिङ्गाद्यवगतनाकपृष्ठभोग्यसुखविशेषे लक्षणा, तत्प्रशसार्थं तस्य लक्षणोपपत्ते, चन्दन स्वर्ग सूक्ष्मवासासि स्वर्ग इति सुखसाधनेपि प्रशसार्थं तत्प्रयोगदर्शनाद्, ऐहिकसुखापेक्षया नाकलोकभोग्यसुखे नितान्तोत्कर्षसत्त्वेन निरतिशयसुखवाचिना तत्प्रशसौचित्याच्च" इति ।

यत्तु परिमले 'स्वर्गकामो यजेत' इत्यादावपि ब्रह्मानन्द एव स्वर्गशब्दार्थ, अन्तःकरण-शुद्धिद्वारा कर्मणामपि ब्रह्मप्राप्तिसाधनत्वसम्भवाद्, 'य कामयेत सर्वमिद भवेयम्' इत्यादि-ब्रह्मप्राप्तिरूपकर्मफलश्रवणानामेवोपपादनीयत्वाद्, दर्शपूर्णमासादिष्वपि 'दिवि ज्योतिरजरमा-रभेनाम्' इत्यादिमन्त्रलिङ्गैर्ब्रह्मप्राप्तिफलावगमाच्च, उक्त च वार्तिके 'स्वर्गोऽयमेव प्रागुक्तं[4] स्वर्ग कामवचस्यपि । कर्मभिस्तदसिद्धेर्हि वेदान्तज्ञानमिष्यते' इति पक्षान्तरमुपन्यस्त तत्तु न सर्वेषा स्वान्तमाशान्तयतीति प्रौढिवादत्वेनानादेयमेव[5] ।

'सर्वे वेदा यत्पदमामनन्ति' इति श्रुतिसाहाय्यमवलम्ब्य तात्पर्यतया तथाभिधाने तु यथाकथञ्चिदादेयमेव,

केचित्तु[6] 'यत्र दु खेन सम्भिन्नम्' इति वाक्येन नाकलोकभोग्य क्षयी सुखविशेष एव लक्ष्यते न निरतिशयब्रह्मानन्दरूपो मोक्षाख्य सुखविशेष इत्याशयेन 'दु खासम्भिन्नत्व नाम दु.खजनकाधर्माजन्यशरीरजन्यत्वम्[7], अग्रस्तत्व च चिरकालस्थायित्वम्, अनन्तरत्व च— अविरलप्रवाहत्वम्, अभिलाषोपनीतत्व च—इच्छामात्रयोनित्वम् इत्येवमुपलक्षणतया तात्पर्यतया वा वाक्यार्थमुपवर्ण्य दु खजनकाधर्माजन्यशरीरजन्याविरलप्रवाहचिरस्था-यीच्छामात्रयोनिसुखत्व स्वर्गपदशक्यतावच्छेदकम्' इत्येवं वर्णयन्ति—

१ क्वचिद्=स्वर्गकामो यजेत इत्यादौ, लक्षणावृत्त्या=निरतिशयालौकिकसुखविशेषस्य स्वग पदाभिधेयत्वेपि भागत्यागलक्षणयाऽलौकिकसुखविशेषरूपमर्थमादाय स्वर्गशब्दस्य प्रयोग इत्यर्थ । २ क्वचित्=चन्दन स्वर्ग इत्यादौ, उत्कृष्टत्वमनोज्ञत्वादिक गुणमादाय स्वर्गशब्दस्य प्रयोग इत्यर्थ । ३ परिमले अ० ४ पा० ३ पञ्चमेधिकरणे । ४ प्रागुक्त =निरतिशयब्रह्मानन्दरूप इत्यर्थ । ५ 'ते त भुक्त्वा स्वर्गलोक विशालम्' इत्यादौ स्वर्गशब्दस्य तथाविधार्थासम्भवात्प्रौढिवादोय मिति भाव । ६ जानकीनाथभट्टाचार्य्यविरचितन्यायमञ्जर्य्या टीकाया बृहत्तर्कप्रकाशाभिधाया श्रीकण्ठदीक्षिता । ७ ननु मरणस्य दु खनियतत्वात्स्वर्गशरीरेपि मरणजन्यदु खसम्भव, नच ते नरा सुखमृत्यव इत्यनेन विरोध, तस्य दु खाल्पत्वपरत्वाद् इति चेन्न, अनुकूलतर्काभावेन मरणस्य दु खनियतत्वे मानाभावाद् भावे वा मरणजन्यदु खजनकाधर्मान्याधर्माजन्यशरीरजन्य-सुखत्वस्य प्रवृत्तिनिमित्तत्वाद्, एतेन 'स्वर्गेपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृति' इति विष्णु-पुराणात्स्वर्गेपि पुण्यक्षयशङ्कया स्वर्गे दु खोत्पत्ते सम्भव इति निरस्त, तदन्यत्वेनाप्यधर्मस्य विशेषणीयत्वादित्यप्यधिकमत्रावधेयम् ।

अन्ये तु न दुःखेन सम्भिन्नं=स्वावच्छेदकशरीरावच्छेदेन स्वसमवायिसमवेतत्त्वसम्बन्धेन दुःखवद्भिन्नं, न च यत्र द्वित्रिक्षणावस्थायिखण्डशरीरावच्छेदेन सुखमेवोत्पन्नं न तु दुःखं तदनन्तरं तच्छरीरविनाशेन तदवयवारब्धशरीरावच्छेदेन दुःखमुत्पन्नं यस्य तस्य तत् खण्डशरीरावच्छिन्नस्य सुखस्यापि स्वर्गत्वापत्तिरिति वाच्यं, स्वावच्छेदकशरीरपदेन स्वावच्छेदकवृत्तिशरीरत्वव्याप्यजातिमतो विवक्षणात्, स्वावच्छेदकशरीरवृत्तिद्रव्यत्वादिकमादायासम्भववारणाय शरीरत्वव्याप्यत्वं जातिविशेषणं, तादृशी जातिश्चावस्थाभेदेन स्थूलकृशशरीरवृत्तिदेवदत्तत्वादिरूपा, एवं च निरुक्तखण्डशरीरस्य तत्पूर्वापरकालीनतत्पुरुषीयदुःखावच्छेदकशरीरवृत्तिशरीरत्वव्याप्यजातिमत्त्वान्न तदवच्छेदेनोत्पन्नसुखेऽतिव्याप्तिः, 'न च ग्रस्तमनन्तरम्' इति—अनन्तरं=शरीरप्राप्त्यनन्तरं न च ग्रस्तं=सुखाभावावच्छेदकशरीरावच्छिन्नभिन्नं, शरीरोत्पत्तिकाले स्वर्गीयशरीरे सुखाभावावच्छेदकत्वेनासम्भववारणाय 'शरीरप्राप्त्यनन्तरम्' इति, स्वाश्रयपुरुषसम्बन्धवैशिष्ट्यावच्छेदेन सुखाभावावच्छेदकशरीरावच्छिन्नं यत्तदन्यदिति पर्यवसन्नं, स्वपदं भेदप्रतियोगिपरम्, एतेन स्वर्गशरीरे सुखायोगव्यवच्छेदलाभः, अभिलाषोपनीतम्=अभिलाषमात्रेण उपनीतम्=उत्पन्नं न तु प्रयासेन, नच वनितादिसम्भोगजनितसुखस्य वनिताद्यधीनत्वेन कथमभिलाषमात्रोपनीतत्वं स्वर्गसुखेष्विति वाच्यं, वनितादेरप्ययत्नलभ्यत्वात् स्वर्गजनकादृष्टस्य प्रतिबन्धकत्वादेव तन्नान्तरीयकदुःखादेरनुत्पत्तिः, अत एव न तत्र पातभीरुत्वदुःखशङ्कापि, 'यद्यप्येतत्त्रितयैकतमस्य स्वर्गपदार्थतावच्छेदकत्वसम्भवस्तथापि कामनाया औत्कट्यप्रयोजकतया मिलितस्यैव स्वर्गपदार्थतावच्छेदकत्वात्, एवं दुःखासम्भिन्नसुखमुद्दिश्य यागादौ कृते विच्छेदेन तादृशसुखोत्पत्त्यापि कामनाविषयसिद्ध्यापत्तिः, एवं प्रथमतः सुखं तदव्यवहितक्षणे दुःखं तदव्यवहितक्षणे सुखमितिरीत्या सुखधारासम्पत्त्यापि द्वितीयविशेषणविशिष्टस्य सम्भवस्तथाऽभिलषितसुखानुत्पत्त्या दुःखानवच्छिन्ननिकृष्टसुखधारा स्यादिति विशेषणत्रयोपादानमिति, इत्येवं परिष्कुर्वते,

मीमांसाबालप्रकाशे भट्टशङ्करस्तु 'यन्न दुःखेन' इत्यादि न स्वर्गलक्षणं विशेषणचतुष्टयव्यावर्त्याभावात् किन्तु स्वरूपकथनमात्रं, विशेषणचतुष्टयेनापि हि सांसारिकसुखवैलक्षण्यमस्य ब्रुवता सुखत्वावान्तरजातिः स्वर्गत्वमुपलक्ष्यते, तद्धि दुःखमिश्रमिदं तु न तथा, एवं सांसारिकं राज्यादिसुखं वर्षायवधिप्रमाणाभावाच्छत्रुकृतापहारादिशङ्काग्रस्तम् इदन्त्वर्थवादादिप्रमाणतो वर्षादियावत्कालभोग्यतया प्रमितं न तन्मध्येऽपहारादिशङ्काग्रस्तं, तथेदम् अनन्तरम्=अनवच्छिन्नं सन्ततं वर्षादिपर्यन्तम्, इतरत्तु न तथा किन्तु सुखदुःखोभयरहितावस्थयावच्छिन्नम्, एवमिदम् अभिलाषमात्रेणोपनीतम्=उपस्थितं न स्रक्चन्दनवनितादिविषयापेक्षम् इतरत्तु विषयापेक्षमेव । यद्वा प्रयत्नानपेक्षाभिलाषमात्रोपनीतविषयमितरत्तु प्रयत्नोपनीतविषयम् इत्येवम्भूतार्थवादोदाहरणमिदमित्याह ।

इतरे तु 'आद्यपादेनैहिकरत्यन्तकालदुःखसदृशसुखसमानदुःखनिरासः, नच ग्रस्तमित्यनेन तदधिकदुःखनिरासः, अनन्तरमित्यनेन निद्राकालवद्वैषयिकोभयरहितदिनरूपकालनिरासः,

१ रघुनन्दनभट्टाचार्यकृतैकादशीतत्त्वटीकाया राधामोहनतर्कालङ्कारा इत्यर्थः । २ एतत्त्रितयाऽन्यतमस्य । ३ एतन्मतद्वये नाकलोक एव 'यन्न दुःखेन सम्भिन्नम्' इति वाक्येन स्वर्गपदार्थोऽभिहितो न मोक्ष इति बोध्यम् । ४ शाब्दिकमञ्जूषाकारा नागेशभट्टा इत्यर्थः ।

अन्यथा सकलदुःखाभावस्याप्यपादेनैव प्रतिपादने सिद्धे न च ग्रस्तमित्यस्य वैयर्थ्यापत्ते अभिलाषोपनीतत्वेन विषयसम्पादनक्लेशनिरास' इत्येव व्याचक्षते,

ननु यन्मते नाकलोकानुभवनीय एव सुखविशेष स्वर्गपदार्थो नतु निरतिशयब्रह्मानन्दरूप-स्तन्मते कथ परविद्याप्रकरणे तत्त्वविदनुभवनीये निरतिशयब्रह्मानन्दे स्वर्गपदप्रयोग इति चेद्

अत्राहुर्बृहदारण्यकभाष्ये शङ्कराचार्या —( स्वर्गलोकशब्दस्त्रिविष्टपवाच्यपि सन्निह प्रकरणान्मोक्षाभिधायकं ) इति,

विवृत चैतद् भाष्य वार्तिककारै —"परमानन्दएवात स्वर्गशब्देन गृह्यते, मोक्षप्रकरणान्नित्य क्रियार्थोतो न गृह्यते" इति,

एतेन "कर्ममीमासकमते स्वर्ग एव मोक्षो न तयोर्भेद" इति कस्य चिदुक्तिर्निरस्ता वेदितव्या, क्षयित्वाक्षयित्वसातिशयत्वनिरतिशयत्वाभ्या भेदस्य प्रतीतिसिद्धत्वेनाभेदग्रहस्य भ्रान्तित्वाद् ।

अतएव श्लोकवार्तिके—"सुखोपभोगरूपश्च यदि मोक्ष प्रकल्प्यते, स्वर्ग एव भवेदेष पर्य्यायेण क्षयी च स, १०५ न हि कारणवत्किञ्चिदक्षयित्वेन गम्यते" इत्यादिना जन्यस्य स्वर्गसुखस्य क्षयित्वमभिधाय, कुतस्तर्हि मुक्ति किंस्वरूपा चेत्याकाङ्क्षाया तस्मात्कर्मक्षयादेव हेत्वभावेन मुच्यते । १०६

१ ब्रह्मविद स्वर्गं लोकमित ऊर्द्ध्वं विमुक्ता इति पूर्वोक्ताया श्रुतावित्यर्थ । २ 'यथा ज्योति ष्टोमप्रकरणे श्रुतो ज्योति शब्दो ज्योतिष्टोमयागविषयस्तथा मोक्षप्रकरणे श्रुत स्वर्गशब्दो मोक्षमधिकरोति, रूढ्यङ्गीकारे ब्रह्मविद्याया निकृष्टत्वप्रसङ्गादिति भाव ' इत्येतद्भाष्यव्याख्यायामानन्दविज्ञान । ३ सम्मतश्चाय स्वर्गमोक्षयोर्भेदो मीमासकशिरोमणेर्भट्टपादस्य कुमारिलस्वामिनोपीत्याह—"अतएव" इति, श्लोकवार्तिके=जैमिनीयदर्शनीयपञ्चमसूत्रे सबन्धाक्षेपपरिहारप्रकरणे साङ्ख्यमतनिराकरणप्रस्तावे श्लोकात्मकवार्तिक इत्यर्थ । ४ आत्मज्ञानेन मुक्ति क्रियत इति साङ्ख्यमत निराकर्तुं साङ्ख्याभिमत मोक्षरूप निराकरोति "सुखोपभोग" इति । ५ 'तस्माद्' इति, शरीरसबन्धो बन्ध , तदभावो मोक्ष , तेन निष्पन्नाना देहाना य प्रध्वसाभाव , यश्चानुत्पन्नाना प्रागभाव स मोक्ष , कर्मनिमित्तश्च बन्ध कर्मक्षयादेव न भवति, १०६ सिद्धयति चाभावात्मकत्वे मोक्षस्य नित्यता नत्वानन्दात्मकत्वे इत्याह—"नहि" इति, यदि, त्वभावरूपस्यापि मोक्षस्य ज्ञानमेव साधनमित्युच्यते, अत आह—"न च क्रियाया" इति १०७ यदि च न क्रियाफलमभाव कुतस्तर्हि तत्सिद्धि, ननु कर्मक्षयादेव, सत्य, स एव तु कुत सिद्धयति, तत्राह—'तत्र ज्ञात' इति, यो हि देहाद् विविक्तमजरममरमदुःखमात्मान जानाति तस्य देहसम्प्रयोगविरक्तस्य पूर्वकृताना कर्मणा फलोपभोगेन क्षयात् तन्निमित्ते शरीरे पतितेऽनागताना च कर्मणामननुष्ठानादेवासत्वाद् देहान्तरानुत्पत्तेरत्यन्तासबन्ध शरीरेण भवति, १०८ न चाऽसत्यपि कर्मणि मातापितृसयोगादेव शरीरनिष्पत्तेर्न मोक्षसिद्धिरत आह—"कर्मजन्य" इति धर्माधर्मसहितो मातापितृसयोग शरीरहेतुर्न तन्मात्रमिति। 'न =अस्माक शरीरमित्यन्वय ' १०८। तेन मोक्षार्थिभिर्न विवेकज्ञानमात्रेण कृतार्थं मन्यमानै स्थातव्य किन्त्वेव कर्तव्यमित्याह—"मोक्षार्थी" इति, काम्यनिषिद्धे हि स्वफलयोरभ्युदयप्रत्यवाययोरुपभोगाय शरीरमारभेते, न शरीरारम्भ परिजिहीर्षता ते कर्तव्ये, नित्यनैमित्तिके च पूर्वकृताऽधर्मक्षयाय कर्तव्ये तदैव चात्मोपासनस्यापि पूर्वकृतकर्मक्षयद्वारेणैव मोक्षसाधनत्वम्, उपासनाभिप्रायमेव च 'ज्ञानाग्नि

तदेतत्सर्वमभिप्रेत्याह—"तद्विपरीतः श्रेयान्"

तस्माद्=आनुश्रविकाद् दुःखापघातकादुपायात् सोमपानादेरविशुद्धाद-नित्यसातिशयफलाद्, विपरीतः=विशुद्धो हिंसादिसङ्कराभावाद्, नित्य-निरतिशयफलोऽसकृदपुनरावृत्तिश्रुतेः,

नच कार्य्यत्वेनानित्यता फलस्य युक्ता, भावकार्य्यस्य तथात्वाद्, दुःखप्र-ध्वंसस्य तु कार्य्यस्यापि तद्वैपरीत्याद्,

---

नह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम्।
न च क्रियाया कस्याश्चिदभावः फलमिष्यते ॥ १०७ ॥
तत्र ज्ञातात्मतत्त्वानां भोगात्पूर्वक्रियाक्षये।
उत्तरप्रचयासत्त्वाद् देहो नोत्पद्यते पुनः ॥ १०८ ॥
कर्मजन्योपभोगार्थं शरीरं न प्रवर्तते।
तदभावे न कश्चिद्धि हेतुस्तत्रावतिष्ठते ॥ १०९ ॥

इत्यादिना कर्मक्षयनिमित्तं शरीरसबन्धरूपबन्धप्रध्वंसं मोक्षस्वरूपमभिधाय—

'मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः।
नित्यनैमित्तिके कुर्य्यात्प्रत्यवायजिहासया ॥ ११० ॥

इत्येव मुक्तय उपायान्तरमभिहितम्,

यदि च यागादिकाम्यकर्मजन्यस्यैव स्वर्गस्य मोक्षत्वमभ्युपेतं भवेत्, तर्हि काम्ययागादि-त्यागपुरस्सरं 'मोक्षार्थी न प्रवर्तेत' इत्येव मोक्षायोपायान्तरश्रवणं व्याकुप्येत,

तत्सिद्धमेतद्—आनुश्रविककर्मकलापोपायप्राप्यक्षयिसातिशयसुखविशेषरूपस्वर्गादतिरिक्तोऽ-क्षयिनिरतिशयसुखरूपो मोक्ष इति, तस्य च कर्मकलापातिरिक्त एव प्रकृतशास्त्रप्रतिपाद्यस्त-त्त्वविवेक उपायोऽत स एव जिज्ञासागोचर इत्याशयेनाभिहितं कारिकायां 'तद्विपरीतः श्रेयान्' इति, तदेवाह—"तदेतत्सर्वम्" इति,

तद्विपरीत इत्यत्रत्य 'तद्' इति शब्दं व्याचष्टे—'तस्माद्' इत्यादिना, विपरीतपदार्थ-माह—"विशुद्ध" इति, विशुद्धत्वे हेतुमाह—"हिंसादिसङ्कराभावाद्" इति, विवेकज्ञानस्य नित्यनिरतिशयफलत्वे हेतुमाह—'असकृदपुनरावृत्तिश्रुतेः' इति, 'न स पुनरावर्तते न स पुनरावर्तते' इति पौनःपुन्येन मुक्तस्याऽनावृत्तिश्रवणादित्यर्थः।

ननु यथा यागादिकार्य्यत्वेन स्वर्गादेरनित्यत्वं पूर्वमभिहितं तथा विवेककार्यस्य मोक्षस्या-प्यनित्यत्वं दुर्वारं तथाच कथं विवेकस्य नित्यफलत्वेन तद्विपरीतत्वमित्याशङ्कां निराकरोति—

---

सर्वकर्माणि भस्मसात्कुरुते तथा' इति भगवद्वासुदेववचनं न विवेकज्ञानाभिप्रायम्, इति श्लोकवार्त्ति-कार्थ इति न्यायरत्नाकरकारः पार्थसारथिमिश्रः। 'स्वर्गादतिरिक्तो मोक्षो मीमांसकैरभ्युपेयत इत्येतस्मिन्नर्थेऽयं कुमारिलग्रन्थः साक्षित्वेनोपन्यस्तो नतूपादेयमिदं मतमित्याशयेन—नैष्कर्म्य-सिद्धावेतन्मतस्य दूषितत्वेन विवेकिभिरुपादेयत्वेनानभ्युपगमादित्यपि ध्येयम्'।

१ 'तद्विपरीत' इत्यत्र विवेक इत्यध्याहार्य्यम्।

**न च दुःखान्तरोत्पादः, कारणाप्रवृत्तौ कार्यानुत्पादाद्, विवेकज्ञानोपजननपर्यन्तत्वाच्च कारणप्रवृत्तेः, एतच्चोपरिष्टादुपपादयिष्यते,**

---

'नच' इत्यादिना,फलस्य=विवेकज्ञानसाध्यस्य मोक्षस्येत्यर्थ ,नच युक्तेत्यत्र हेतुमाह—"भावकार्यस्य तथात्वाद्" इति, भावरूपकार्यस्यैव तथात्वात्=यत्कृतकं तदनित्यमितिव्याप्त्याऽनित्यत्व बोधनादित्यर्थ , घटध्वसस्य कृतकत्वेपि नित्यत्वसप्रतिपत्तेर्यत्कृतक तदनित्यमिति व्याप्तेर्व्यभिच रितत्वेन भावत्वे सति यत्कृतक तदनित्यमित्यास्थेय, तथाचात्यन्तिकदु खोपरमात्मकमोक्षस्य विवेकज्ञानसाध्यत्वेन कृतकत्वेपि भावरूपत्वाभावान्न कृतकत्वमात्रेणानित्यता युक्तेतिभाव , तदेवाह—"दु खप्रध्वसस्य" इति, तद्वैपरीत्याद्=उक्तव्याप्तिप्रयुक्तभावरूपकार्यगतानित्य त्वधर्मविभिन्ननित्यधर्मवत्त्वादित्यर्थ ,

'मोक्षोऽनित्य कृतकत्वात्स्वर्गादिवद्' इति प्रयोगो भावत्वोपाधिसवलितत्वेन सोपाधिकत्वाद् दुष्ट इति भाव ,

वस्तुतस्तु नरशिर कपालशुचित्वानुमानवद् मेरो पाषाणमयत्वानुमानवच्चागमबाधितत्वेन नायं प्रयोग उत्थातुमर्हतीति बोध्यम् ।

यद्यपि साङ्ख्यनये सत्कार्यवादाङ्गीकारेण दु खप्रध्वंसस्य मोक्षत्वाभिधान व्याहत तथापि दु खप्रध्वंसपदेनात्र दु खातीतावस्थाया एव तात्पर्यविषयत्वेनाभिधानाद् व्याहत्यभावोऽवसेय , यथाचातीतावस्थाया नित्यत्व तथाभिहित प्रागित्यत्रमाम्रेडितेन ।

नन्वतीतावस्थाया नित्यत्वेन माभूदतीतावस्थ दु खमुदितावस्थापन्न दु खान्तरोत्पत्तिस्तु केन वार्येतेत्यत्राह—"नच दु खान्तरोत्पाद" इति, अन्यद् दु ख नोत्पद्यत इत्यत्र हेतुमाह—"कारणाप्रवृत्तौ कार्यानुत्पादाद्" इति, कारणस्य=दु खजनकस्य पुम्प्रकृत्योरविवेकस्य, अप्रवृत्तौ=विवेकेन विनाशितत्वादनुपस्थितौ सत्या दु खरूपकार्योत्पत्त्यसम्भवादित्यर्थ. ।

ननु भुक्तिविवेकख्यातिनिष्पत्त्यर्थं प्रकृतिप्रवृत्तिरिति हि सिद्धान्तरीति तथा च यथा प्रकृत्या जनितेपि भोगे भूयो विवेकख्यात्यर्थं प्रकृते प्रवृत्तिरभ्युपेयते तथा जातायामपि विवेकख्यात्या कथ न भूय प्रकृते प्रवृत्तिरित्याशङ्कायामाह—

'विवेकज्ञान' इति, कारणप्रवृत्तेः=मूलकारणभूताया प्रकृते प्रवृत्तेर्विवेकज्ञानजननपर्यवसानत्वाभ्युपगमान्न विवेकज्ञानोत्तर प्रकृतिप्रवृत्त्युपपत्तिरित्यर्थ ,

---

१ यत्रानित्यत्व घटादौ तत्र भावत्वस्य सद्भावात्साध्यव्यापकत्व, यत्र च कृतकत्व घटध्वसादौ तत्र भावत्वस्याभावात् साधनाव्यापकत्वमिति ज्ञेयम् । २ यथा 'नार स्पृष्ट्वास्थि सस्नेह सचैल जलमाविशेद्' इत्यागमपराहतत्वेन 'नरशिर कपाल शुचि प्राण्यङ्गत्वाच्छङ्खवदित्यनुमानानुत्थान, यथा वा 'देवर्षिगन्धर्वयुत प्रथमो मेरुरुच्यते। प्रागायत स सौवर्ण उदयो नाम पर्वत' इतिवचनबाधितत्वाद्—मेरु पाषाणमय पर्वतत्वाद् विन्ध्यादिवदित्यनुमानानुत्थान तथाऽपुनरावृत्तिबोधकागमपराहतत्वेन मोक्षानित्यत्वानुमानानुत्थानमित्यर्थ । ३ प्राग्=यद्यपि दु ख न सन्निरुद्ध्यते इत्यस्य व्याख्याने । ४ अविवेकस्य नष्टत्वेपि मूलकारणप्रकृतेर्नित्यत्वेनानिवृत्तत्वात् तत्प्रवृत्तेर्दुवारत्वात् तन्निबन्धनदु खान्तरोत्पादोऽनिवार्य इत्याशयेन शङ्कते "ननु" इति भुक्ति =शब्दाद्युपभोग ।

अक्षरार्थस्तु—तस्माद्=आनुश्रविकाद् दुःखापघातकाद् हेतोः, विपरीतः=सत्त्वपुरुषान्यताप्रत्ययः—साक्षात्कारो दुःखापघातको हेतुः, अत एव श्रेयान्, आनुश्रविको हि वेदविहितत्वान्मात्रया दुःखापघातकत्वाच्च प्रशस्यः, सत्त्वपुरुषान्यताप्रत्ययोऽपि प्रशस्यः, तदनयोः प्रशस्ययोर्मध्ये सत्त्वपुरुषान्यताप्रत्यय श्रेयान्।

कुतः पुनरस्योत्पत्तिरित्यत उक्तं—"व्यक्ताऽव्यक्तज्ञविज्ञानाद्" इति, व्यक्तं चाव्यक्तं च ज्ञश्च व्यक्ताव्यक्तज्ञाः, तेषां विज्ञानं=विवेकेन ज्ञानं, व्यक्तज्ञानपूर्वकमव्यक्तस्य तत्कारणस्य ज्ञानं, तयोश्च पारार्थ्येनात्मा परो ज्ञायत इति ज्ञानक्रमेणाभिधानम्,

---

कथमेतन्निश्चीयत इत्याकाङ्क्षायामाह—"एतच्च" इति, उपरिष्टाद्='दृष्टामयेत्युपक्षक' इति ६६ कारिकाव्याख्यायामित्यर्थः,

तद्विपरीत इत्यस्य तात्पर्यमभिधाय साम्प्रतमक्षरार्थमाह—"अक्षरार्थस्तु" इति,

सत्त्वपुरुषान्यताप्रत्यय =सत्त्व=बुद्धितत्त्व, सत्त्वादिगुणत्रयात्मकप्रकृतितत्त्व वा, जडपरिणामिप्रकृतितत्त्वाद् विभिन्नोऽहमपरिणामी दृशिरूप इत्याकारक प्रकृत्यवधिकपुरुषान्यतारूपसाक्षात्कार इत्यर्थ, तदेवाह—'साक्षात्कार' इति ।

ननु "द्विवचनविभज्योपपदे तरबीयसुनौ" इति सूत्रेण द्वयोर्मध्य एकस्यातिशये बोधनीये प्रशस्यशब्दादीयसुनि सति 'प्रशस्यस्य श्र' इत्यनेन श्रादेशे श्रेयश्शब्दनिष्पत्तिस्तथाच कोन्य प्रशस्यो यदपेक्षयाय विवेक प्रशस्यतर इत्याकाङ्क्षायामाह—"आनुश्रविको हि" इति, आनुश्रविक =यागादि, मात्रया=लेशेन ।

एवंविधस्य तत्त्वसाक्षात्कारस्य किं कारणमित्याशयेन पृच्छति—"कुत पुन" इति ।

ननु ज्ञस्य चेतनत्वेनाभ्यर्हितत्वादल्पाच्तरत्वाच्च[1] 'ज्ञाव्यक्तव्यक्तविज्ञानाद्' इति क्रमेण प्रयोक्तव्ये कथं व्यक्ताव्यक्तज्ञविज्ञानादिति विपरीतक्रम आश्रित इत्याशङ्क्य मननोपयोग्यनुष्ठानक्रममादाय[3] पूर्वनिपातविपरीतक्रमाश्रयणमित्याशयेनाह—"व्यक्तज्ञानपूर्वकम्" इति, 'स्थूलात्पञ्चतन्मात्रस्य[4]' 'बाह्याभ्यन्तराभ्यां तैश्चाहङ्कारस्य[5]' 'तेनान्त करणस्य[6]' 'तत प्रकृते[7]' इति

---

१ लौकिकाद्वैदिकाद्वा तत्तत्क्रियारूपोपायाद्विपरीतो यस्तत्त्वसाक्षात्काररूपोपाय स एव दु खात्यन्तोच्छेदकत्वेन श्रेयस्त्वाद् जिज्ञासनीय इति भाव । २ अभ्यर्हितमल्पाच्क च पूर्वं प्रयुज्यत इति हि शाब्दिकसङ्केत इति भाव । ३ 'समुद्राभ्राद्ध' इत्यादिनिर्देशेन पूर्वनिपातप्रकरणस्य नियामकत्वाभावात् तात्पर्य्यविशेषमादायान्यथा प्रयोगेपि न दोष इति भाव । ४ अ० १ सू० ६२ स्थूलभूतरूपात्कार्यात् तत्कारणतन्मात्रानुमानमित्यर्थ, स्थूलभूतानि स्वविशेषगुणवत्सूक्ष्मद्रव्योपादानकानि स्थूलत्वाद् घटादिवदिति चात्र प्रयोग । ५ सू० ६३ बाह्याभ्यन्तराभ्यामिन्द्रियाभ्या, तैश्च तन्मात्रैस्तत्कारणाहङ्कारानुमान, तन्मात्रेन्द्रियाण्यभिमानवद्द्रव्योपादानकान्यभिमानकार्यद्रव्यत्वाद् यन्नैव तन्नैव यथा पुरुष इति, इन्द्रियादीना प्रवृत्तेरहङ्कारपूर्वकत्व प्रसिद्धमेव। ६ सू० ६४ तेनाभिमानेन अन्त करणस्य बुद्ध्याख्यमहत्तत्वस्यानुमानम्, अभिमानस्य निश्चयपूर्वकत्वाद् । ७ सू ६५ तत =बुद्धेश्च सुखाद्यात्मकत्वेन गुणत्रयात्मकतत्कारणभूतप्रधानानुमानमित्यर्थं ।

एतदुक्तं भवति—श्रुतिस्मृतीतिहासपुराणेभ्यो व्यक्तादीन् विवेकेन श्रुत्वा शास्त्रयुक्त्या च व्यवस्थाप्य दीर्घकालनैरन्तर्यादरसेविताद् भावनामयाद् विज्ञानादिति,

तथा च वक्ष्यति "एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम्, अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम्" इति ॥ २ ॥

तदेवं प्रेक्षावदपेक्षितार्थत्वेन शास्त्रारम्भं समाधाय शास्त्रमारभमाणः श्रोतृबुद्धिसमवधानाय तदर्थं सङ्क्षेपतः प्रतिजानीते—"मूलप्रकृतिः" इत्यादिना—

मू० 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त, षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः । ३ ।'

---

साङ्ख्यसूत्रोक्तप्रकारेणोत्तरोत्तरकार्येण पूर्वपूर्वकारणानुमानं, तयोश्च=व्यक्ताव्यक्तयोः 'संहतपरार्थत्वात्पुरुषस्य' इतिसूत्राभिहितपारार्थ्यहेतुनाऽसंहतपुरुषार्थत्वज्ञानादात्मज्ञानमित्यर्थः ।

विज्ञानमित्यनेन न श्रवणमात्रेण व्यक्तादीनां स्वरूपज्ञानं विवक्षितमपि तु निदिध्यासनपर्यवसन्नं स्वसाक्षात्कारजनकं भावनारूपमपेक्षितमित्याशयेन विज्ञानादित्येतत् स्पष्टयति—"एतदुक्तं भवति" इति,

श्रुत्वा=श्रवणेन तत्त्वसङ्ख्या तत्त्वस्वरूपं चावगत्येत्यर्थः, मननमाह—'शास्त्रयुक्त्या=प्रकृततन्त्राभिहितपरस्परतत्त्ववैधर्म्यालोचनरूपमननेन, व्यवस्थाप्य=प्रमेयासम्भावनानिरासमुखेन तत्त्वस्वरूपं विनिश्चित्येत्यर्थः, निदिध्यासनमाह—'दीर्घकाल' इति, अदीर्घकालसेवने, दीर्घकालत्वेऽपि विच्छिद्य विच्छिद्य सेवने च नैरन्तर्येऽपि श्रद्धातिशयाभावे च सङ्गदोषाद् विजातीयप्रत्ययप्राबल्येनादृढभूमिरभ्यासः फलाय न प्रभवेत् प्रत्युत विपरीतभावनातः स्वरूपात्प्रच्यवेतातो विशेषणत्रयविशिष्टोऽभ्यासः[2] सम्पादनीयः, एतादृशाच्च भावनामयाद्विज्ञानात् तत्त्वसाक्षात्कारो जायत इत्यर्थः ।

एतच्चाग्रे[3] मूलकृता विस्पष्टयिष्यत इत्याह—"तथा च वक्ष्यति" इति ॥ २ ॥

येषां व्यक्ताव्यक्तज्ञतत्त्वानां विज्ञानाच्छ्रेयस्करः साक्षात्कारः समुदेति तेषां तत्त्वानामवान्तरं विशेषमभिधातुं प्रवृत्ता तृतीयां कारिकामवतारयति—"तदेवम्" इत्यादिना । प्रेक्षावदपेक्षितार्थत्वेन=मतिमतामभीप्सितो यो दुःखात्यन्तोच्छेदरूपोऽर्थस्तद्वत्त्वेन हेतुना—प्रकृतशास्त्रानारम्भशङ्कां निरस्येत्यर्थः[4] ।

तदर्थं=प्रकृतशास्त्राभिधेयविवेकानुयोगिप्रतियोगिभूततत्त्वजातमित्यर्थः[5] ।

---

१ सू० ६६ एतच्च "संघातपरार्थत्वाद्" इति १७ कारिकायां व्यक्तीभविष्यति । २ एतेन—"स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः" इति पातञ्जलसूत्रार्थो वर्णित इति ज्ञेयम् । ३ 'जहत्येनां भुक्तभोगाम्' इत्यस्य व्याख्यायां प्राङ् निरूपितमिदमित्यपि ध्येयम् । ४ अनन्यथासिद्धप्रयोजनवत्त्वादेतच्छास्त्रमारम्भणीयमिति सिद्धान्तीकृत्येति भावः । ५ विवेकानुयोगी—पुरुषः, प्रतियोगिनश्च प्रकृतिमहदादयो विकारा इत्यर्थः ।

सङ्क्षेपतो हि शास्त्रार्थस्य चतस्रो विधाः, कश्चिदर्थः प्रकृतिरेव, कश्चिदर्थो विकृतिरेव, कश्चित् प्रकृतिविकृतिः, कश्चिदनुभयरूपः, तत्र का प्रकृतिरेवेत्यत उक्तम्—'मूल' इति, मूलं चासौ प्रकृतिश्चेति मूलप्रकृतिः, विश्वस्य कार्यसङ्घातस्य सा मूलं न त्वस्या मूलान्तरमस्ति, अनवस्थाप्रसङ्गात्, नचानवस्थायां प्रमाणमस्तीति भावः ।

---

कारिका व्याख्यास्यन् तत्त्वानामवान्तरविशेषमाह—"सङ्क्षेपतो हि" इति । शास्त्रार्थस्य=एतच्छास्त्राभिधेयतत्त्वग्रामस्य अवान्तरप्रकाराश्चत्वार इत्यर्थ, तानेव प्रकारभेदानाह—"कश्चिदर्थ" इत्यादिना ।

कस्य मूलमित्यत्राह—"विश्वस्य" इति, पुरुषस्यापि विश्वान्तःपातित्वादतिप्रसङ्ग इत्यत आह—"कार्यसङ्घातस्य" इति ।

ननु प्रकृतिशब्दस्य कारणार्थकत्वात्प्रकृतिरित्येतावतैव प्रधानस्य जगत्कारणत्वे लब्धे पुन कारणार्थकमूलपदोपादानं किमर्थमित्याशङ्कायामाह—"नत्वस्या मूलान्तरम्" इति, कारणमेव प्रधान न कस्य चित्कार्यमिति विशेषबोधनाय मूलपदोपादानमित्यर्थ ।

प्रधानस्य कार्यत्वे दोषमाह—"अनवस्थाप्रसङ्गाद्" इति, ननु बीजाङ्कुरवदनवस्थाया अदोषत्वमित्यत्राह—"न चानवस्थाया प्रमाणम्" इति व्यवस्थाया सत्यामनवस्थाभ्युपगमस्याप्रामाणिकत्वादित्यर्थ ।

अयमाशय—प्रधानकारणत्वेनाभिमत यत् तत्त्वान्तर तस्मिन् प्रधानापेक्षया कश्चिद् अतिशयविशेषोऽभ्युपेयते न वा, न वेति चेद् न तस्य कारणभावोऽतिशयाभावाद्, नह्यतिशयमन्तरेण कार्यकारणभाव कुत्रापि दृष्टचर, अस्त्यतिशय इति चेत्, किंरूपोसाविति कथनीय, निर्गुणत्वचेतनत्वापरिणामित्वरूपोऽसाविति चेत्, तथापि न कारणत्वम्, अपरिणामिन कार्यजनकत्वस्यादृष्टत्वात्, शक्तिरूपोतिशय इति चेत्, सापि जन्याऽजन्या वा, जन्येति चेत् तदवस्थानवस्था, अजन्येति चेत् सैव शक्ति प्रकृतिरजाविद्या प्रधानमिति नाममात्रे विवाद, अत्र यदन्यद् वचनीय तदभिहित प्रागित्यलमाम्रेडनेन ।

तथाचाहु=महर्षिकपिलाचार्या —'मूले मूलाभावादमूल मूलम्[३]" पारम्पर्येप्यैकत्र परिनिष्ठेति सञ्ज्ञामात्रम्" इति ।

---

१ 'अजामेकाम्' इत्यादिश्रुत्या 'प्रकृति पुरुष चैव विद्ध्यनादी उभावपि' इति स्मृत्या च प्रकृतेरजन्यत्वेनानादित्वेन च तत्रैव कारणपरम्पराया विश्रान्ते सत्त्वाद् व्यवस्थाया सम्भवेनानवस्थाया मूलक्षयकरीरूपाया अनभ्युपगमादित्यर्थ । बीजाङ्कुरस्थले व्यवस्थासम्भवेनाना सत्या तथास्वीकारेपि व्यवस्थास्थलेऽनवस्थाकल्पने मानाभावादिति तत्त्वम् । २ प्राग्='अजामेकाम्' इत्यस्य व्याख्यायाम् । ३ अ० १ सू ६७ । ६८ । त्रयोविंशतितत्त्वाना मूलम्=उपादानम्–अमूलम्=मूलशून्यम् अनवस्थापत्त्या मूले मूलान्तरासम्भवादित्यर्थ । ६७ । 'ननु तस्माद्व्यक्तमुत्पन्नम्' इत्यादिना प्रधानस्यापि पुरुषादुत्पत्तिश्रवणात्पुरुष एव प्रकृतेर्मूल भवतु, पुरुषस्य नित्यतया च नानवस्था, अविद्याद्वारकतया च न पुरुषकौटस्थ्यहानि, तथा च स्मर्यते 'तस्मा

कतमाः पुनः प्रकृतिविकृतयः कियत्यश्च इत्यत—

उक्तम्—"महदाद्याः प्रकृतिविकृतयः सप्त" इति। प्रकृतयश्च विकृतयश्च ता इति प्रकृतिविकृतयः सप्त,

तथाहि—महत्तत्त्वमहङ्कारस्य प्रकृतिः, विकृतिश्च मूलप्रकृतेः, एवमहङ्कारतत्त्वं तन्मात्राणामिन्द्रियाणा च प्रकृतिः, विकृतिश्च महतः, एवं पञ्चतन्मात्राणि तत्त्वानि भूतानामाकाशादीना प्रकृतयो, विकृतयश्चाहङ्कारस्य,

अथ का विकृतिरेव कियती चेत्यत उक्तं—"षोडशकस्तु विकार" इति, षोडशसङ्ख्यापरिमितो गणः षोडशकः, तु—शब्दोऽवधारणे भिन्नक्रमः, पञ्च महाभूतानि एकादशेन्द्रियाणीति षोडशको गणो विकार एव न प्रकृतिः।

यद्यपि पृथिव्यादीनामपि गोघटवृक्षादयो विकाराः, एवं तद्विकारभेदानां पयोबीजादीनां दध्यङ्कुरादयः, तथापि न पृथिव्यादिभ्यस्तत्त्वान्तरं,

---

"कतमा" इति, चतुर्विंशतितत्त्वाना मध्ये प्रकृतिविकृतय का इति नामजिज्ञासा, कियत्य इति चेयत्ताजिज्ञासा। तत्त्वान्तरोपादानत्वे सति तत्त्वान्तरोपादेयत्व प्रकृतिविकृतित्व, तच्च महदादीना सप्तानामित्याशयेन स्पष्टयति—"तथाहि" इति ।

ननु 'अविकृति' इत्युक्त्यैवाजन्यत्वलाभात्पुनर्मूलपदोपादानं किम्प्रयोजनमिति चेच्छृणु—तत्त्वान्तरोपादानत्व हि प्रकृतित्वं—तच्च महदादिविकारेष्व्यस्तीत्यत उक्त—'मूलम्' इति, तत्त्व च तत्त्वान्तरानुपादेयत्व, तदेव स्पष्टयितुमुक्त मूले 'अविकृति' इति ।

'भिन्नक्रम'=पाठस्थानाद् अन्य क्रम=निवेशस्थान यस्यासौ भिन्नक्रम, विकार इत्यस्याग्रेऽवधारणार्थकस्तुशब्दो निवेशनीय इत्यर्थ, तदेवाह—"पञ्च" इत्यादिना। ननु षोडशको गणो विकार एवेत्यवधारणमनुपपन्नम्, एकादशेन्द्रियाणा क प्रति प्रकृतित्वाभावेपि षोडशान्त पातिना पञ्चस्थूलभूताना गोघटवृक्षादीन् प्रति प्रकृतित्वस्य सम्प्रतिपन्नत्वादित्याशयेन शङ्कते—"यद्यपि" इति । तद्विकारभेदानां=पृथिव्यादिविकारभूतगोवृक्षादेर्विकारविशेषाणा दुग्धादीनां दध्य दयो विकारा इत्यर्थ ।

अन्यदेव प्रकृते प्रकृतिलक्षणमित्याशयेन समाधत्ते "तथापि" इति—न पृथिव्यादिभ्यस्तत्त्वान्तरम् इत्यत्र गोघटादयो विकारा इति शेषो बोध्यः,

---

दज्ञानमूलोऽय ससार पुरुषस्य हि' इति, इत्याशङ्क्याह 'पारम्पर्येऽपि' इति—अविद्यादिद्वारेण परम्परया पुरुषस्य जगन्मूलकारणत्वेप्यविद्यादौ यत्र कुत्रचिन्नित्ये द्वारे परम्पराया पर्यवसान भविष्यति पुरुषस्यापरिणामित्वाद् यतो यत्र पर्यवसान सैव नित्या प्रकृति, प्रकृतिरिह मूलकारणस्य सञ्ज्ञामात्रमित्यर्थ ॥ ६८ ॥ इति साङ्ख्यप्रवचनभाष्ये विज्ञानभिक्षव ।

१ 'तदस्य परिमाणम्' ५ । १ । ५७ इत्यधिकारे 'सङ्ख्याया सञ्ज्ञासङ्घसूत्राध्ययनेषु' ५ । १ । ५८ । इत्यनेन सङ्घार्थे कन्प्रत्यये साधुरयम् । २ तत्त्वान्तरं=विजातीयतत्त्वम्—एतत्तत्त्वमग्रे व्यक्तीभविष्यति । ३ तत्त्वं च=मूलत्व च ।

**तत्त्वान्तरोपादानत्वं च प्रकृतित्वमिहाभिप्रेतमिति न दोषः,**

नन्वु,मा भूद् गोघटादीना पृथिव्यादिभ्यस्तत्त्वान्तरत्व तथापि गोघटादिजनकत्वेन कुतो न पृथिव्यादीना प्रकृतित्वमित्याशङ्क्य प्रकृताभिप्रेत प्रकृतिलक्षणमाह–"तत्त्वान्तरोपादान्त्वम्" इति।

ननु—"सत्त्वरजस्तमसा साम्यावस्था प्रकृति" इत्यादिसाङ्ख्यसूत्रे सत्त्वादीनि द्रव्याणि न वैशेषिका गुणा सयोगविभागवत्त्वाद् लघुत्वचलत्वगुरुत्वादिधर्मकत्वाच्च, तेष्वत्र शास्त्रे श्रुत्यादौ च गुणशब्द पुरुषोपकरणत्वात् पुरुषपशुबन्धकत्रिगुणात्मकमहदादिरज्जुनिर्मातृत्वाच्च प्रयुज्यते, तेषा सत्त्वादिद्रव्याणा या साम्यावस्था=अन्यूनानतिरिक्तावस्था न्यूनाधिकभावेनासहतावस्थेति यावद्, अकार्यावस्थेति निष्कर्ष, अकार्यावस्थोपलक्षितं गुणसामान्य प्रकृतिरित्यर्थ, यथाश्रुते वैषम्यावस्थाया प्रकृतित्वनाशप्रसङ्गाद् 'सत्त्व रजस्तम इति एषैव प्रकृति सदा। एषैव ससृतिर्जन्तोरस्या पारे पर पदम्' इत्यादिस्मृतिभिर्गुणमात्रस्यैव प्रकृतित्ववचनाच्च, सत्त्वादीनामनुगमाय सामान्येति, पुरुषव्यावर्तनाय गुणेति, महदादिव्यावर्तनाय च 'उपलक्षितान्तम्' इति महदादयोऽपि हि कार्यसत्त्वादिरूपा पुरुषोपकरणतया च गुणा भवन्तीति तद्भाष्ये च

"प्रकृष्टवाचक प्रश्च कृतिश्च सृष्टिवाचकः, सृष्टौ प्रकृष्टा या देवी प्रकृति सा प्रकीर्तिता ॥
गुणे प्रकृष्टसत्त्वे च प्रशब्दो वर्तते श्रुतौ, मध्यमे रजसि कृश्च तिः शब्दस्तमसि स्मृत ।
त्रिगुणात्मस्वरूपा या सर्वशक्तिसमन्विता, प्रधान सृष्टिकरणे प्रकृतिस्तेन कथ्यते ॥
प्रथमे वर्तते प्रश्च कृतिश्च सृष्टिवाचक, सृष्टेराद्या च या देवी प्रकृति सा प्रकीर्तिता ॥

इत्येवमादिपौराणिकवाक्येषु च श्रूयमाण प्रकृतिलक्षणमपहाय कुतस्तद्विपरीत प्रकृते प्रकृतेर्लक्षणान्तरमाश्रितमित्याक्षेपापोहायाह—"इहाभिप्रेतम्" इति, प्रकृतिविकृतिभूते महदादावपि प्रकृतित्वव्यवहृतिनिष्पत्त्यर्थं तत्त्वान्तरोपादानत्वरूपमेव प्रकृते प्रकृतित्वलक्षणमाश्रित न सूत्रायभिहितमित्यर्थ ।

---

१ गुणत्वे तु सयोगविभागवत्त्व न स्याद्, गुणे गुणानङ्गीकारादित्यर्थ । २ अ १ सू ६१।
३ ब्रह्मवैवर्ते प्रकृतिखण्डे प्रथमाध्याये, देवीभागवते नवमस्कन्धे प्रथमाध्याये चेमे ५।६।७।८। श्लोका 'तत्र प्रथमतस्तटस्थलक्षणमाह–प्रकृष्टवाचक' इति, प्रापूरण इति धातो पचाद्यचि निष्पन्न प्रशब्द, कृतिशब्दस्य व्यापारसामान्यार्थकत्वात् सृष्टिव्यापारार्थकत्व, तथाच–प्रा=प्रकृष्टा मुख्या कृतौ=सृष्टौ या सा प्रकृतिरिति व्यधिकरणपदबहुव्रीहिणा त्वेतस्यार्थस्य लाभ, पृषोदरादित्वात्प्राशब्दस्य ह्रस्वत्व, तथा च मुख्यत्वेन सृष्टिकर्त्री या सा प्रकृतिरित्यर्थ । ५ । स्वरूपलक्षणमाह—'गुणे सत्त्वे' इति, प्रकृष्टे सत्त्वे गुणे प्रशब्दो वर्तते, व्युत्पत्तिस्तु पूर्ववदेव, मध्यमे रजसि मध्यम कृशब्दो वर्तते मध्यमत्वसादृश्यात्, तमसि तमोगुणे चरमेति शब्दो वर्तते चरमत्वतादित्वसादृश्यादित्यर्थ । ६ । पदार्थमुक्त्वा विशिष्टार्थमाह–त्रिगुणात्मा निरतिशयावरणविक्षेपादिशक्तिरहिता गुणत्रयसाम्यावस्थात्मिका सृष्टिकरणे प्रधाना या सा प्रकृतिशब्देनोच्यत इत्यर्थ, तथा च प्रसयुक्त कृ प्रकृ=सत्त्वेन गुणेन सहितो रजोगुण, शाकपार्थिवादित्वात्सयुक्तपदलोप, पुन प्रकृयुक्त ति=सत्त्वगुणरजोगुणेन युक्त ति=तमोगुणो यस्या वर्तत इति बहुव्रीहिणा गुणत्रयात्मिकेत्यर्थ, पृषोदरादित्वात्साधुत्वम्। ७। पुनर्लक्षणान्तरमाह–'प्रथमे वर्तत' इति, प्रशब्दव्युत्पत्ति पूर्ववत्, तथा च प्रा=प्रथमा सृष्टेर्या सा प्रकृति सृष्टेरादिभूतेत्यर्थ, व्यधिकरणबहुव्रीहि, पृषोदरादित्वात्साधुत्वम् । ८। इत्येतेषामर्थ इति देवीभागवतव्याख्याया नीलकण्ठ ।

सर्वेषां गोघटादीनां स्थूलतेन्द्रियग्राह्यता च समेति न तत्त्वान्तरत्वम्।

अत्रेदमभिप्रेतम्—प्रकृतिशब्दो हि—साम्यावस्थोपलक्षितगुणत्रयात्मकत्वलक्षणो मूलकारणे प्रधाने, तत्त्वान्तरोपादानत्वलक्षणश्चाहङ्कारादिकारणे महदादौ, उपादानत्वमात्रलक्षणश्च घटकटकादिकारणे मृत्कनकादौ, इत्येव तत्तल्लक्षण तत्तदर्थविशेषे तत्र तत्र प्रयुज्यमान उपलभ्यते, तत्र यदि साम्यावस्थोपलक्षितगुणत्रयात्मत्वरूप सूत्राद्यभिहितमेव प्रकृतिलक्षणमत्राश्रीयेत तदा प्रधाने प्रकृतित्वव्यवहारसपत्तावपि महदादौ प्रकृतित्वव्यवहारो न सघटेत, यदि चोपादानत्वमात्रमेव प्रकृतिलक्षणमत्राश्रीयेत तदा महदादौ प्रकृतित्वव्यवहारसपत्तावपि मृत्कनकादेरपि प्रकृतित्वव्यवहारापत्तिस्स्याद्, अत उभयदोषपरिहाराय तत्त्वान्तरोपादानत्वरूपमेव प्रकृतित्वलक्षणमत्रास्थीयते नान्यदिति, तथा च न कुत्रापि दोष इत्याह—"इति न दोष" इति, एतादृशलक्षणकरणे महदादौ प्रकृतित्वव्यवहारानापत्तिरूपो दोष., पृथिव्यादौ च प्रकृतित्वव्यवहारापत्तिरूपो दोषश्च नेत्यर्थ।

सूत्राद्यभिहितलक्षणस्य प्रधानमात्रपरत्वेनानुगतत्वाभावात्सर्वानुगत तत्त्वान्तरोपादानत्वरूपमेव लक्षणमाश्रयणीय, मृत्कनकादौ च[1] प्रकृतित्वव्यवहारो लाक्षणिको गौणो वेति भाव।

किमिद तत्त्वान्तरत्वमिति चेद् 'तत्त्वत्व च द्रव्यत्व तत्त्वान्तरत्व च स्वावृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्व, पञ्चविंशतितत्त्वेषु पञ्चविंशतिजात्यनङ्गीकारे च तत्त्वान्तरत्व स्वावृत्तिद्रव्यविभाजकोपाधिमत्त्वम्' इति योगवार्तिकोक्त गृहाण,

अत्र लक्षणे स्वशब्द उपादानत्वाभिमततत्त्वपर, तथा च यथाऽहङ्कारादे स्वोपादानमहदाद्यवृत्तिद्रव्यत्वसाक्षाद्व्याप्याहङ्कारत्वादिजातिमत्त्वेन महदादिभ्यस्तत्त्वान्तरत्व न तथा गोघटादीना पृथिव्यादिभ्यस्तत्त्वान्तरत्वं तेषा स्वोपादानपृथिव्याद्यवृत्तिद्रव्यत्वसाक्षाद्व्याप्यपृथिवीत्वादिजातिमत्त्वेनोपादानावृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वाभावादित्यत्र फलितम्।

एतदेव हृदि निधाय गोघटादीना तत्त्वान्तरत्वाभावे स्वोपादानपृथिव्याद्यवृत्तिधर्मवत्तारूप हेतुमाह—"सर्वेषाम्" इत्यादिना, 'समेति'—इति शब्दो हेत्वर्थे यतो घटादीना स्थूलतेन्द्रियग्राह्यता च पृथिव्यादिभि समातो न घटादीना पृथिव्यादिभ्यस्तत्त्वान्तरत्वमित्यर्थ।

ननु यथा पृथिवीतद्विकारघटयोरुभयोरपि स्थूलत्वादिरूपसमानधर्मवत्त्वेन न पृथिव्यपेक्षया घटस्य तत्त्वान्तरत्व तथा महत्तद्विकाराहङ्कारयोरुभयोरपि सूक्ष्मत्वातीन्द्रियत्वादिरूपसमानधर्मवत्त्वेन समानतत्त्वात् कथ महदपेक्षयाहङ्कारस्य तत्त्वान्तरत्वम्, इति चेद्—

१ ननु तत्त्वान्तरोपादानत्वस्यैव प्रकृतित्वे मृत्प्रकृतिको घट कनकप्रकृतिक कटकमित्यादौ मृदादौ प्रकृतित्वव्यवहारस्य को निर्वाह इत्यत्राह—"मृत्कनकादौ च" इति,—लाक्षणिक =तत्त्वान्तरोपादानत्वरूपेऽर्थे शक्तमपि प्रकृतिपद भागत्यागलक्षणयोपादानत्वमात्रमर्थमादाय मृदादौ लाक्षणिक प्रकृतित्वव्यवहार, एकदेशभूतोपादानत्वरूपसाधर्म्यमादाय गौणो वा व्यवहार इत्यर्थ। २ घटादेरपि पृथिव्यवृत्तिघटत्वादिजातिमत्त्वेन तत्त्वान्तरत्व मा भूदित्याशयेन जातौ द्रव्यत्वसाक्षाद्व्याप्येति विशेषणमिति ध्येय, द्रव्यत्वसाक्षाद्व्याप्यजातयश्च महत्त्वाहङ्कारत्वपृथिवीत्वादयो ज्ञेया, जात्यनङ्गीकारे च महत्त्वादीना पदार्थविभाजकोपाधित्वमास्थेयमिति भाव।

अनुभयरूपमाह—"न प्रकृतिर्न विकृतिः पुरुष" इति, एतत्सर्वमुपरिष्टादुपपादयिष्यत इति ॥ ३ ॥

दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात्,
त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि ॥ ४ ॥

तमिममर्थं प्रामाणिकं कर्तुमभिमताः प्रमाणभेदा लक्षणीयाः,

---

अत्राभिधीयते—स्थूलत्वेन्द्रियग्राह्यत्वसहकृतपदार्थविभाजकपृथिवीत्वरूपोपाधे पृथिवीघटयोरुभयोरपि वृत्तित्वेन तयो समानधर्मवत्त्वान्न घटादे पृथिव्यास्तत्त्वान्तरत्वमित्यर्थे तात्पर्येणोक्तदोषाभावाद् ।

तथा च पृथिव्यादेस्तत्त्वान्तरपरिणामवत्त्वाभावान्न प्रकृतित्वमपि तु विकृतित्वमेवेति निष्पन्न,

तथाचाहु योगभाष्ये व्यासदेवा "न विशेषेभ्य पर तत्त्वान्तरमस्तीति विशेषाणा नास्ति तत्त्वान्तरपरिणाम, तेषा तु धर्मलक्षणावस्था परिणामा व्याख्यायिष्यन्ते" इति ।

प्रकारत्रैयमभिधाय तुरीय प्रकारमभिधातुमाह—"अनुभयरूपम्" इति, कश्चिदनुभयरूप इत्यनेनाभिहितो य तत्त्वान्तराउपादानत्वे सति तत्त्वान्तराऽनुपादेयरूप पुरुषस्तमाहेत्यर्थं ।

ननु प्रकृत्यादीना सामान्यतोऽभिधानेपि किन्तत्त्व कस्य प्रकृति कस्य वा विकृतिरिति विशेषानभिधानान्न तत्त्वविवेकदार्ढ्यमित्यत आह—"एतत्सर्वम्" इति, उपरिष्टाद्='प्रकृतेर्महान्' ( २२ ) इत्यादावित्यर्थ ॥ ३ ॥

तदेव विवेकाद्वयोगिप्रतियोगितत्त्वजातमभिधाय तदिद तत्त्वजात न प्रमाणापेतमपि तु प्रमाणोपेतमित्याशयेन प्रवृत्ता तुरीयकारिकामवतारयति—"तमिममर्थम्" इति ।

ननु कणादाक्षपादादिभि प्रमाणविशेषाणा निरूपितत्वात् तैरेवं प्रकृते निर्वाहसम्भवात् तन्निरूपण नातीवोपयुक्तमित्यपेक्षायामाह—"अभिमता" इति, महर्षिमनुप्रमुखसम्मता इत्यर्थ ।

'प्रत्यक्षमनुमान च शास्त्र च विविधागमम्, त्रय सुविदित कार्यं धर्मशुद्धिमभीप्सता ।

इति मनुना प्रमाणत्रयस्यैवाभ्युपेतत्वेन तद्विपरीतेयत्तावन्त कणादादिनिरूपिता प्रमाणभेदा न सता सम्मता इति भाव ।

---

१ पा २ सू १९ अत्र विशेषपदेन भूतेन्द्रियाणि ग्राह्याणि, तत्किमिदानीमपरिणामिन एव विशेषास्तथा च नित्या प्रसज्येरन्नित्यत आह 'तेषान्तु धर्मलक्षणावस्था' इति, तत्र भूताना पृथिव्यादीना धर्मिणा गवादिर्घटादिर्वा धर्मपरिणाम, धर्माणा चातीतानागतवर्तमानता लक्षणपरिणाम, वर्तमानलक्षणापन्नस्य गवादेर्बाल्यकौमारयौवनवार्धकमवस्थापरिणाम, घटादीनामपि नूतन पुरातनताऽवस्थापरिणाम, एवमिन्द्रियाणामपि तत्तन्नीलाद्यालोचन धर्मपरिणाम, धर्मस्य वर्तमानतादिर्लक्षणपरिणाम, रूपाद्यालोचनस्य स्फुटत्वादिरवस्थापरिणाम इत्येव ध्येयमित्यर्थ । व्याख्यायिष्यन्ते=तृतीये पादे त्रयोदशसूत्र इत्यर्थ । २ प्रकारत्रयम्—प्रकृति—प्रकृतिविकृति—विकृतिरूप प्रकारत्रयमित्यर्थ । ३ 'अनुभयरूपमुक्त तदाह' इति पाठे तु तत्त्वमित्यध्याहार्यम् । ४ 'न वय षट्पदार्थवादिनो वैशेषिकादिवद्' अ १ सू २५ इति साङ्ख्यसूत्रात्कणादादिदर्शनाना पूर्वभावित्वादित्यर्थ, एतेन कणादादिदर्शनानामर्वाचीनत्वान्न तन्निरूपितप्रमाणभेदैरत्र निर्वाह इति शङ्कापोदिता । ५ अ १२ श्लो १०५ ।

न च सामान्यलक्षणमन्तरेण शक्यं विशेषलक्षणं कर्तुम् इति प्रमाणसामान्यं तावल्लक्षयति–"प्रमाणमिष्टम्" इति ।

अत्र च प्रमाणमिति समाख्या लक्ष्यपदं, तन्निर्वचन च लक्षण, प्रमीयतेऽनेनेतिनिर्वचनात् प्रमा प्रतिकरणत्वमवगम्यते,

असन्दिग्धाविपरीतानधिगतविषया चित्तवृत्तिः,

---

'सामान्यलक्षण त्यक्त्वा विशेषस्यैव लक्षणं, न शक्य केवल वक्तुमितोऽप्यस्य न वाच्यता' इति कुमारिलोक्तिमाश्रित्याह–"नच सामान्यलक्षणम्" इति ।

ननु कारिकाया प्रमाणानामियत्तावधारण विभज्यवचन चेत्येतद् द्वयमेव निरूपित प्रतीयते न प्रमाणसामान्यलक्षण तत्कथ न तदकथनप्रयुक्ता न्यूनता कथ वाभिहित भवता प्रमाण सामान्य तावत् लक्षयतीति चेत्यत आह–"अत्र च प्रमाणमिति समाख्या लक्ष्यपदम्" इति, अत्र=कारिकायामित्यर्थ ।

समाख्या=यौगिक शब्द इति मीमासकसङ्केत, लक्ष्यबोधक पद–लक्ष्यपद, प्रमाणमिति यौगिक पद लक्ष्यबोधकमित्यर्थ ।

ननु लक्ष्यपदस्य लक्षणपदप्रयोगसापेक्षत्वाद् लक्षणपदमन्तरेण कथ लक्ष्यपदप्रयोग इत्याशङ्क्य प्रमाणपदस्य यौगिकत्वेन तदवयवार्थमादाय लक्षणपदमपि तदेवेत्याह—"तन्निर्वचन च" इति, प्रमाणपदावयवभूतप्रकृतिप्रत्ययार्थश्च लक्षणमित्यर्थ, निर्वचनप्रकारमेवाह–"प्रमीयतेऽनेनेति" इति, तथा च लक्षणपदमपि प्रमाणमित्येवेति बोध्यम्

सकृदुच्चरितमपि प्रमाणपद तन्त्रेणोच्चरितत्वात् प्रमाण प्रमाणमिति द्विरावर्त्य प्रमाण=प्रमाकरण यत् तत् प्रमाण=प्रमाणपदप्रतिपाद्यमित्यर्थमादायैकमेव प्रमाणपद लक्ष्यलक्षणपरमिति भाव ।

'प्रमाणमिति समाख्यया लक्ष्यपरम्' इति पाठे तु 'समा=तुल्या समानानुपूर्वीवती आख्या=उच्चारण, तया समाख्यया=तुल्योच्चारणेनेति यावत्, तथा च सकृदुच्चरितमपि प्रमाणपद तुल्योच्चारणेन तन्त्रयुक्त्या लक्ष्यपर लक्षणपर चेत्यर्थो बोध्यः।

प्रमाणघटकप्रमा लक्षयति–"असन्दिग्ध" इत्यादिना ।

असन्दिग्ध =किंस्विदितिवितर्कात्मकानवधारणज्ञानविषय सन्दिग्ध सन भवतीत्यसन्दिग्ध,

अविपरीत =स्वरूपाप्रतिष्ठितो मिथ्याज्ञानात्मकविपर्ययज्ञानविषयो, विकल्पात्मकज्ञानविषयश्च विपरीत. स न भवतीत्यविपरीत ।

अनधिगत =निश्चयात्मकज्ञानविषयोऽधिगत स न भवतीत्यनधिगत, एवविध पदार्थो विषयो यस्याश्चित्तवृत्ते साऽसन्दिग्धाऽविपरीताऽनधिगतविषया चित्तवृत्ति प्रमेत्यग्रिमेणान्वय ।

---

१ जै सू ५ श्लोकवार्तिके शब्दपरिच्छेदे श्लो २ । २ इयत्तावधारण–त्रिविध प्रमाणमिति, विभज्यवचन च दृष्टमनुमानमित्यादीति बोध्यम् । ३ स=समीचीना–अवयवार्थवती–आख्या समाख्या, तदेवाह–"यौगिक" इति । ४ अनेकार्थबुबोधयिषया सकृदुच्चारण तन्त्रोच्चारणम्, ईदृक्स्थल उच्चारयितुस्तन्त्रेणोच्चारण बोद्धुश्चावृत्त्या बोध इति व्यवस्थामनुरुध्याह "द्विरावर्त्य" इति । ५ "शब्दज्ञानानुपाती वस्तुशून्यो विकल्प" यो पा १ सू ९ इति लक्षितविकल्प[illegible]स्य विपर्ययविशेषत्वेन तद्विषयोऽपि विपरीत इत्यनेन सङ्गृहीत इति ध्येयम् ।

बोधश्च पौरुषेयः फलं प्रमा ।

सशय विपर्यय विकल्प स्मृतिरूपचित्तवृत्तिभिन्ना या चित्तवृत्तिः सा प्रमेत्यर्थ ।

एवमिन्द्रियसन्निकर्षजन्यामसुख्या बौद्धप्रमामाख्याय चित्तवृत्तिफलभूता सुख्यां पौरुषेय-प्रमामाख्याति–"बोधश्च पौरुषेय फलं प्रमा" इति ।

चित्तवृत्ते फल य पुरुषवर्ती बोध सा सुख्या प्रमेत्यर्थ ,

"द्वयोरेकतरस्य वाऽप्यसन्निकृष्टार्थपरिच्छित्ति प्रमा" इति साङ्ख्यसूत्रे प्रमाद्वैविध्यस्याभिहितत्वेन बुद्धिवृत्ति पौरुषेयबोधश्चेत्युभयमपि प्रमेति भाव ।

ननु पुरुषवर्ती बोध कथ चित्तगतायाा वृत्तेः फल, न हि खदिरगोचरव्यापारेण परशुना पलाशे छिदा क्रियते समानाधिकरणभावाभावादिति चेद्, अत्राहु —नहि चित्तवृत्त्या पुरुषगतो बोधो जन्यतेऽपि तु चैतन्यमेव तत्तदर्थोपरक्तबुद्धिदर्पणप्रतिबिम्बित सद् बुद्धिवृत्त्याऽर्थाकारया तदाकारतामापद्यमान फलमित्यभिधीयते, तच्च चित्तप्रतिबिम्बितं फलभूत चैतन्य चितिचित्तयोरभेदग्रहाच्चित्तात्मक प्रमाणभूता चित्तवृत्तिरपि चित्तात्मिकेति सामानाधिकरण्य सद्भावाद् युक्त पौरुषेयबोधस्य चित्तवृत्ते फलभाव इति ।

अत्रेद बोध्य—पौरुषेयो बोध इत्यनेन न बोधस्य पुरुषनिष्ठत्वमाख्यायते येन प्रमातृत्वादिधर्मेण पुरुषस्य परिणामित्व स्याद् अपि तु बुद्धौ प्रतिबिम्बितत्वेन तत्तादात्म्यापत्त्या पुरुषस्य ज्ञानादिमत्त्वोपचारात्पौरुषेय इत्यभिधीयते एव च चितिचित्तयोरभेदग्रहात्पुरुष उपचर्यमाणोपि वस्तुतो बुद्धिवृत्त्यात्मक एव बोधो न पुरुषधर्म इति ।

तथा चाहु कृष्णद्वैपायना. "फलमविशिष्ट पौरुषेयश्चित्तवृत्तिबोधः, बुद्धे प्रतिसवेदी पुरुष" इति, बोधस्य बुद्धिवृत्त्यात्मकत्वेपि यथा पौरुषेयत्व तथा "द्रष्टा दृशिमात्र शुद्धोपि

१ अ १ सू ८९ । 'तत्साधकतम यत् तत् त्रिविध प्रमाणम्' इति सूत्रशेष , (असन्निकृष्ट =प्रमातर्यनारूढ –अनधिगत इति यावद् एवभूतस्य अर्थस्य=वस्तुन परिच्छित्ति =अवधारण प्रमा, सा च द्वयो =बुद्धिपुरुषयोरुभयोरेव धर्मो भवतु किं वैकतरमात्रस्य, उभयथैव तस्या प्रमाया यत्साधकतम=फलायोगव्यवच्छिन्न कारण तच्च त्रिविध वक्ष्यमाणरूपेणेत्यर्थ ) इति साङ्ख्यप्रवचनभाष्यकार । २ साङ्ख्यनये महत्तत्त्वपदाभिधेयबुद्धितत्त्वस्य चित्ततत्त्वस्य चैकत्वेन पर्यायत्वात् क्वचिद् बुद्धिवृत्ति क्वचिच्च चित्तवृत्तिरित्येव पर्यायेण लेखेपि न क्षतिरिति बोध्यम् । ३ अत्रेदमवधेय–साङ्ख्यनये कश्चिदर्थ प्रमाण यथा चक्षुरादि, कश्चित् प्रमाप्रमाणोभयरूपो यथा चित्तवृत्ति, (एषा हि चक्षुरादिजन्यत्वेन प्रमेति पौरुषेयबोध प्रति करणत्वेन च प्रमाणमिति व्यवह्रियते ) कश्चित्प्रमैव यथा पौरुषेयो बोध, कश्चित्प्रमातैव यथा बुद्धिप्रतिबिम्बित चैतन्यम्, कश्चित्साक्षी यथा बुद्धिवृत्त्युपहिता चितिरिति । ४ पा १ सू ७ योगभाष्यकारा इत्यर्थ । ५ चित्तवृत्तिबोध =इन्द्रियप्रणालिकयाऽर्थसन्निकर्षानन्तर जायमाना याऽयघट इत्याकारा चित्तवृत्तिस्तद्विषयको योऽह घटं जानामीत्याकारोऽनुभव स प्रमाणभूतायाश्चित्तवृत्ते फल, स चायमनुभव पौरुषेय =चितिचित्तयोरभेदग्रहात्पुरुष उपचर्यमाणत्वेन पुरुषवर्ती, तदेवाह–अविशिष्ट =चित्तवृत्त्या सहाविशिष्ट –बुद्धिवृत्त्यात्मक इत्यर्थ , तत्र हेतुमाह–"बुद्धे प्रतिसवेदी पुरुष" इति, सवेदिन्या बुद्धे प्रतिरूप , तत्तादात्म्यापन्नत्वेन तत्समानाकार इत्यर्थ ।

तत्साधनं प्रमाणमिति,

---

प्रत्ययानुपश्यः" "चितेरप्रतिसङ्क्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम्" इत्यादियोगसूत्रतद्भाष्ययो "अपरिणामिनी हि भोक्तृशक्तिरप्रतिसङ्क्रमा च परिणामिन्यर्थे प्रतिसङ्क्रान्तेव तद्वृत्तिमनुपतति तस्याश्च प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्तेरनुकारमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिरित्याख्यायते" इति पञ्चशिखाचार्यवाक्ये च स्पष्टमिति तत्रैव कणेहत्यालोचनीयम्।

तथा च यथा ह्यन्तरेणापि चन्द्रमस क्रियामुपसङ्क्रान्तचन्द्रप्रतिबिम्बममल जल स्वय चलत्सदचलमपि चन्द्रप्रतिबिम्ब चलमिवावभासयत्येव विनापि चितिव्यापारमुपसङ्क्रान्तचितिप्रतिबिम्बा बुद्धिरसङ्गतामपि चितिशक्तिं स्वगतया ज्ञानादिक्रिययाऽवभासयन्ती सती प्रमातृभावमापादयति परमार्थतस्तु न पुरुषस्य प्रमातृत्व न वा तन्निष्ठो बोध फलमिति।

एतेन यदत्रयोगवार्तिके च विज्ञानभिक्षुणा—"पुरुषनिष्ठो बोध फलम्" इति, "प्रमाता चेतन शुद्ध" इति च जल्पित तन्निराकृत वेदितव्य, पूर्वोक्तयुक्त्युपेतवाक्यजातेभ्यो बुद्धितत्त्वप्रतिबिम्बितस्य पुस कथञ्चित्प्रमातृत्वेपि शुद्धस्य प्रमातृत्वायोगाद् "ध्यायतीव लेलायतीव" इत्यादिश्रुतिष्वौपाधिकप्रमातृत्वादिश्रवणाच्च, "असङ्गोह्यय पुरुष" इत्यत्रासङ्गत्वाम्नानाच्च, "पुरुषस्तु प्रमासाक्ष्येव न प्रमाता" इति साङ्ख्यप्रवचनभाष्यस्थस्वोक्तिविरोधाच्च।

यच्चोक्त—"बुद्धेरेव प्रमातृत्वे पुरुषो न सिद्ध्येद्" इति, तदति फल्गु, न वय केवलं बुद्धितत्त्व प्रमात्रित्याचक्ष्महे येनैवमुपालभ्येमहि किन्तु "उपरागात्कर्तृत्व चित्सान्निध्याद्" इति साङ्ख्यसूत्राद् उपसङ्क्रान्तचितिप्रतिबिम्बमेव तत्प्रमातृ इति ब्रूमहे तथा च प्रतिबिम्बत्वान्यथानुपपत्त्या साक्षितया च पुरुषसिद्धे कथकारमुपालभ्येमहीत्यलं बहुना।

एव प्रमा लक्षयित्वा प्रमाण लक्षयति—"तत्साधनं प्रमाणम्"इति,तस्याश्चित्तवृत्तेर्यत् साधन=सन्निकर्षरूपव्यापारवच्चक्षुरादि,यच्च पौरुषेयबोधकरण चित्तवृत्तिरूपं तदुभयमपि प्रमाणमित्यर्थं,

विज्ञानभिक्षुस्तु—न व्यापारवत्कारणं करणमपि तु फलायोगव्यवच्छिन्नमेव कारण करणम् इत्याशयेन ( यदि प्रमारूपं फल पुरुषनिष्ठमात्रमुच्यते तदा बुद्धिवृत्तिरेव प्रमाण यदि च बुद्धिनिष्ठमात्रमुच्यैते तदातूक्तेन्द्रियसन्निकर्षादिरेव प्रमाण, यदि च पौरुषेयो बोधो बुद्धिवृत्तिश्चोभयमपि प्रमोच्यते तदातूक्तमुभयमेव प्रमाभेदेन प्रमाणं भवति, चक्षुरादिषु तु प्रमाणव्यवहार परम्परयव सर्वथा) इत्याह।

---

१ पा २ सू २० प्रत्ययानुपश्य =बुद्धिवृत्तितादात्म्यापत्त्या बुद्धिवृत्त्यनुकारीत्यर्थं। २ पा ४ सू २२ अप्रतिसञ्चाराया अपरिणामिन्या अपि चिते स्वीयबुद्धिवृत्तिविषयक ज्ञान बुद्धिवृत्त्याकारतापत्त्यैव भवति न स्वत इति भाव। ३ 'भोक्तृशक्ति =पुरुषाख्या चिति हि=यत स्वभावत परिणामरहिताऽत अप्रतिसङ्क्रमा=सचाररहिता विषयदेशे गमनाभाववती, तथापि परिणामिनि बुद्धिरूपेर्थे प्रतिसङ्क्रान्ता=प्रतिबिम्बिता सती विषयाकारा बुद्धिवृत्तिमनुपतति=अनुगच्छति, प्राप्तश्चैतन्योपग्रह =चैतन्यप्रतिबिम्बाख्योपरागो येन रूपेण तत् तथा, प्राप्तचैतन्योपग्रह रूपं यस्या सा तथोक्ता, एवभूतायास्तस्या बुद्धिवृत्तेरनुकारमात्रतया बुद्धिवृत्त्यविशिष्टा=बुद्धितादात्म्यमापन्ना सती ज्ञानवृत्ति =ज्ञानरूपवृत्तिमती प्रमात्रीत्याख्यायते" इत्यर्थ। ४ अत्र=अ १ सू ८७ साङ्ख्यप्रवचनभाष्ये, पा १ सू ७ योगवार्तिके चेत्यर्थं। ५ अ १ सू ८७। ६ पा १ सू ७ योगवार्तिके विज्ञानभिक्षूक्तिरियम्। ७ अ १ सू १६४।

एतेन सशयविपर्ययस्मृतिसाधनेष्वप्रसङ्गः ।

सङ्ख्याविप्रतिपत्ति निराकरोति—"त्रिविधम्" इति,

तिस्रो विधा यस्य प्रमाणसामान्यस्य तत् त्रिविध, न न्यूनं नाप्यधिकमित्यर्थः,

विशेषलक्षणानन्तरं चैतदुपपादयिष्यामः,

कतमाः पुनस्तिस्रो विधा इत्यत आह—"दृष्टमनुमानमाप्तवचनं च" इति,

एतच्च लौकिकप्रमाणाभिप्राय, लोकव्युत्पादनार्थत्वाच्छास्त्रस्य तस्यैवात्राधिकाराद्, आर्ष तु,

---

चित्तवृत्तिरूपप्रमालक्षणघटकासन्दिग्धेत्यादिविशेषणाना कृत्यमाह—"एतेन" इति, एतेन=असन्दिग्धेत्यादिविशेषणदानेन सशयविपर्ययस्मृतिरूपवृत्तिभिन्नचित्तवृत्तेरेव प्रमात्वाभिधानेन तत्करणस्यैव च प्रमाणत्वप्रतिपादनेन, सशयविपर्ययस्मृतिरूपवृत्तीना साधनेषु=साधारण ज्ञानादिरूपकरणेषुं, अप्रसङ्ग=न प्रमाणलक्षणसगमनरूपो दोष इत्यर्थ, सशयादिवृत्तीना प्रमात्वाभावात् तत्साधनाना न प्रमाणत्वमिति भाव ।

प्रमाणेयत्तावधारणपर कारिकाशमवतारयति—"सङ्ख्याविप्रतिपत्तिम्" इति, कियत्सङ्ख्याक प्रमाणमिति वितर्कं शमयतीत्यर्थं ।

ननु "आम्नायविधातॄणामृषीणामतीतानागतवर्तमानेष्वतीन्द्रियेष्वर्थेषु धर्मादिषु ग्रन्थोपनिबद्धेष्वनुपनिबद्धेषु चात्ममनसो सयोगाद् धर्मविशेषाच्च यत् प्रातिभ यथार्थनिवेदन ज्ञानमुत्पद्यते तद् आर्षम् इत्याचक्षते" इति गुणग्रन्थे बुद्ध्यधिकारे कणाददर्शने प्रशस्तपादाचार्यैरार्षविज्ञानस्याप्यभ्युपेतत्वेन कथ त्रिविधमित्यवधारणमित्यत्राह—"एतच्च" इति । एतच्च=प्रमाणत्रैविध्याभिधान च, लौकिकप्रमाणाभिप्रायम्=योगिजनभिन्नसाधारणजनानां यानि प्रमाकरणानि तदभिप्राय, साधारणजनज्ञानजननोपयोगीनि प्रमाणानि त्रीण्येवेति तात्पर्यकमित्यर्थ । तत्र हेतुमाह—"लोकव्युत्पादनार्थत्वाद्" इत्यादिना, शास्त्रस्य साधारण जनबोधनप्रयोजनत्वात् तस्यैव=लौकिकप्रमाणत्रयस्यैव, अत्र=प्रकृतशास्त्रे अधिकाराद्=निरूपणयोग्यत्वादित्यर्थ ।

के पुनरार्षविज्ञानाधिकारिण इत्याकाङ्क्षायामाह—"आर्षन्तु" इति । तु—शब्द पुनरर्थे—

---

१ सशयसाधने—उच्चैस्त्वादिसाधारणधर्मज्ञाने, विपर्ययसाधने दुष्टेन्द्रियसन्निकर्षादौ च, स्मृतिसाधने सस्कारे तद्द्वाराऽनुभवे वा न प्रमाणत्वव्यवहारप्रसङ्ग इत्यर्थ । २ आम्नायो=वेद तस्य विधातार=कर्तारो ये ऋषयस्तेषामतीतेष्वनागतेषु वर्तमानेष्वतीन्द्रियेषु=धर्माधर्मदिक्कालप्रभृतिषु ग्रन्थोपनिबद्धेषु=आगमप्रतिपादितेषु अनुपनिबद्धेषु=आगमाप्रतिपादितेषु चात्ममनसो सयोगाद् यत् प्रातिभ ज्ञान यथार्थनिवेदन=यथास्वरूपसवेदन सशयविपर्ययरहित ज्ञानमुत्पद्यते तदार्षमित्याचक्षते विद्वास । इन्द्रियलिङ्गाद्यभावे यदर्थप्रतिभान सा प्रतिभा प्रतिभैव प्रातिभमित्युच्यते तत्रभवद्भि, तस्योत्पत्तिरनुपपन्ना कारणाभावादित्यनुयोगे सतीदमुक्त "धर्मविशेषाद्" इति, विशिष्यत इति विशेषो धर्म एव विशेषो धर्मविशेष विद्यातपसमाधिज प्रकृष्टो धर्मस्तस्मात्प्रतिभोदय इत्यर्थ इत्येतद्भाष्यव्याख्याने कन्दलीकार श्रीधराचार्य ।

**विज्ञानं योगिनामूर्द्ध्वस्रोतसां न लोकव्युत्पादनायालमिति सदपि नाभिहितमनधिकाराद्,**

---

यत्पुन ऊर्ध्वस्रोतसा=ऊर्ध्वं=विषयेभ्यो बहि परे तत्त्वे स्रोत =वृत्तिप्रवाहो येषा तेषा योगिना संबन्ध्यार्षं विज्ञानं तत्तु सामान्यजनबोधनाय नालं=न समर्थम् इति हेतो सदपि=विद्यमानमपि तदार्षं विज्ञानमत्र नोक्तम् अनधिकाराद्=उपयोगाभावाद् इत्यर्थ ।

तथा चाहु. प्रशस्तपादाचार्या —“तत्तु ( आर्षविज्ञान तु ) प्रस्तारेण देवर्षीणा कदाचिदेव लौकिकाना यथा कन्यका ब्रवीति श्वो मे भ्राताऽऽगन्तेति हृदय मे कथयतीति” इति ।

अत्रेद बोध्यम्–बुद्धितत्त्व हि प्रकाशस्वभावत्वेन सर्वार्थदर्शनसमर्थमपि तमसाऽऽवृत सत्सर्वदा सर्वं न गृह्णाति, यत्र तु रजसोद्घाट्यते सत्त्वेन चोद्रिच्यते तत्रैव गृह्णाति, यदा त्वभ्यासवैराग्याभ्यामपास्तसमस्तरजस्तमोमलस्य योगजधर्मानुगृहीतस्यास्यानवद्यवैशारद्यमुद्योतते तदाऽस्यातीतानागतविप्रकृष्टव्यवहितसूक्ष्मपदार्थग्रहणसमर्थस्य प्रकाशानन्त्ये सति किन्नाम तद् यत्र गोचरोऽपि तु सर्व एवास्य गोचर ईदृग्विधमेव ज्ञानम् ( आर्षम् ) ( ऋतम्भरा प्रज्ञा ) इति चाख्यायते, इद च योगजप्रत्यक्षत्वात्प्रत्यक्षान्तर्गतमेव, अत एव तन्मात्रलक्षणविषयगोचरस्य योगिज्ञानस्याग्रे प्रत्यक्षत्वमभिधास्यते, तथा च प्रत्यक्षान्तर्भावान्न तत् पार्थक्येनाभिहितं, प्रत्यक्षादतिरिक्तत्वे तु लोकोपयोगाभावान्नात्राभिहितमिति ।

एव सिद्धज्ञानमपि प्रत्यक्षाद्यन्तर्भूतत्वान्न ज्ञानान्तर, तथा चाहु प्रशस्तपादाचार्या –“सिद्धदर्शन न ज्ञानान्तर, कस्मात् प्रयत्नपूर्वकमञ्जनपादलेपखड्गगुलिकादिसिद्धाना दृश्यद्रष्टॄणा सूक्ष्मव्यवहितविप्रकृष्टेष्वर्थेषु यद् दर्शन तत्प्रत्यक्षमेव, अथ दिव्यान्तरिक्षभौमाना प्राणिना ग्रहनक्षत्रसचारादिनिमित्त धर्माधर्मविपाकदर्शनमिष्ट तदप्यनुमानमेव, अथ लिङ्गानपेक्ष धर्मादिषु दर्शनमिष्ट तदपि प्रत्यक्षार्षयोरन्यतरस्मिन्नन्तर्भूतम्” इति, ।

---

१ यद्वा “अहरहर्नयमानो गामश्व पुरुष पशुम्” इत्यादौ विनापि चकार समुच्चयस्य दृष्टत्वाद् ‘ऊर्ध्वस्रोतसाम्’ इति पृथक्कोटि , ऊर्ध्वं=स्थूलेभ्यो विषयेभ्यो बहिरतीन्द्रियेर्थे स्रोतो=ज्ञान येषा तेषा देवर्षीणा योगिना चेत्यर्थो बोध्य । २ प्रस्तारेण=बाहुल्येन। ३ इद च कन्यकाज्ञान न सशय उभयकोटिसस्पर्शाभावाद्, न च विपर्यय , सवादाद्, अत प्रमाणमेवेति बोध्यम् । ४ अग्रे=पञ्चमकारिकाव्याख्याया–‘विषया पृथिव्यादय सुखादयश्च, अस्मदादीनामविषयास्तन्मात्रलक्षणा योगिनामूर्द्ध्वस्रोतसा च विषया , विषय विषय प्रति वर्तते यदिन्द्रिय तदाश्रित ज्ञान प्रत्यक्षम्’ इत्यर्थस्य स्पष्टत्वादिति भाव । ५ आर्षज्ञानस्य प्रत्यक्षान्तर्भावे कथ प्रशस्तपादै ‘विद्यापि चतुर्विधा प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणा’ इति प्रत्यक्षादतिरेकेणाभिधानमित्याशङ्कायामाह–“प्रत्यक्षादतिरिक्तत्वे तु” इति । गोबलीवर्दन्यायेन पृथगभिधानमित्यपि केचिद् । ६ दृश्याना=दर्शनयोग्याना स्वरूपवता पदार्थाना द्रष्टारो य अञ्जनादिसिद्धास्तेषा यत्सूक्ष्मादिष्वर्थेषु दर्शनम्=इन्द्रियाधीनानुभवस्तत्प्रत्यक्षमेवेत्यर्थ । ७ एतादृश दैवज्ञान यदि सिद्धज्ञानमभिमत तर्हि तदनुमानमेव, ग्रहसचारादीना लिङ्गत्वाद् । ८ यदि धर्मादिदर्शनमिन्द्रियज तदा प्रत्यक्षान्तर्भूतम्, अथेन्द्रियानपेक्ष तदाऽऽर्षम् इत्यर्थ ।

स्यादेतद्—माभून् न्यूनम्, अधिकं तु कस्मान्न भवति, सङ्गिरन्ते हि प्रतिवादिन उपमानादीन्यपि प्रमाणानि, इत्यत आह—"सर्वप्रमाणसिद्धत्वाद्" इति। एष्वेव दृष्टानुमानाप्तवचनेषु सर्वेषां प्रमाणानां सिद्धत्वाद्=अन्तर्भावादित्यर्थः।

एतच्चोपपादयिष्यत इत्युक्तम्,

अथ प्रमेयव्युत्पादनाय प्रवृत्तं शास्त्रं कस्मात्प्रमाणं सामान्यतो विशेषतश्च लक्षयति इत्यत आह—"प्रमेयसिद्धिः प्रमाणाद्धि"—सिद्धिः=प्रतीतिः,

---

नन्वार्षविज्ञानस्यालौकिकत्वेन लोकोपयोगाभावादत्रानिरूपणेऽप्युपमानादीनां लोकोपयुक्तत्वेनावश्य निरूपणीयत्वेन तदनिरूपणप्रयुक्ता कथं न न्यूनतेत्याशयेन शङ्कते "स्यादेतद्" इत्यादिना, प्रतिवादिनः=गौतमादयः, सङ्गिरन्ते=प्रतिजानते, "समः प्रतिज्ञाने"। १। ३। ५२। इति सूत्रेण प्रतिज्ञानार्थे गिरतेस्तङ् इति बोध्यम्।

'अन्तर्भावाद्' इति, एतेन "तत्सिद्धौ सर्वसिद्धेर्नाधिक्यसिद्धिः"इति साङ्ख्यसूत्रार्थः सङ्गृहीतः। साङ्ख्यचन्द्रिकाकारो नारायणतीर्थस्तु ( सर्वप्रमाणसिद्धत्वाद्—सर्वैः प्रमाणैः=प्रमातृभिः पतञ्जलिप्रभृतिभिः सिद्धत्वात्—प्रत्यक्षानुमानागमाः प्रमाणानीति स्वीकृतत्वाद्, उपमानादिकं तु न सर्वप्रमाणसिद्धम् ) इत्येवमिदं व्याचख्यौ,

"मनुर्वै यत् किञ्चावदत् तद् भेषजम्" इति श्रुत्यभिहितमहत्त्वेन सर्वेषां प्रमाणभूतेन मनुवचनेन सिद्धत्वाद्=त्रीण्येव प्रमाणानीति निश्चितत्वात् प्रमाणत्रयमेवेष्टमित्यर्थोऽपि यदि मतिमतां मतिमारोहेत् तर्ह्ययमप्यादेयः,

यद्वा सर्व-शब्दोऽत्र बहुपर्यायः, तथा च मनुकपिलपतञ्जलिमुनिवचनरूपैर्बहुभिः प्रमाणैः सिद्धत्वात्प्रमाणत्रयमेवेष्टं नतु एकैकमुनिवचनरूपैकैकप्रमाणसिद्धं प्रमाणचतुष्टयादिकमित्यर्थो बोध्यः,

कथमन्तर्भाव इत्यत्राह—"एतच्च" इति,

ननु पदवाक्यप्रमाणप्रमेयभेदभिन्नेषु विद्याप्रस्थानेषु साङ्ख्ययोगवेदान्तरूपप्रस्थानत्रयस्य प्रमेयप्रतिपादनपरत्वादत्र प्रमाणप्रतिपादनं विपश्चित्सङ्केतपराहतम्,इत्याशयेन शङ्कते-"अथप्रमेय"इति,

'प्रमाणाद्धि' इति, हि=यतः प्रमेयावगतिः प्रमाणाधीनाऽतः प्राधान्येन प्रमेयप्रतिपादनपरमप्येतत् तन्त्रं तदुपयोगितयाऽऽपाततः प्रमाणमपि प्रतिपादयतीत्यर्थः।

---

१ अ० १ सू० ८८ त्रिविधप्रमाणसिद्धौ सर्वप्रमाणानां प्रमेयव्यवस्थासिद्धेर्नाधिक्यसिद्धिः पृथक्प्रमाणत्वेन, त्रिविधप्रमाणेष्वन्येषामन्तर्भावाद् इत्यर्थः इति वृत्तिकारोऽनिरुद्धो महादेवश्च। त्रिविधप्रमाणसिद्धौ च सर्वस्यार्थस्य सिद्धेर्न प्रमाणाधिक्यं सिध्यति गौरवादित्यर्थः इति विज्ञानभिक्षुः। २ ताण्ड्यमहाब्राह्मणे २३ अध्याये १६ खण्डे श्रुतिरियम्। ३ "प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम्, त्रयं सुविदितं कार्यम्' इति पूर्वाभिहितेन मनुवचनेनेत्यर्थः। ४ यदीत्युक्त्याऽयमप्यर्थः सम्भवति परं नासौ मूलकाराभिप्रेत इति सूचयति। ५ पदविद्या—व्याकरणम्, वाक्यविद्या—मीमांसा, प्रमाणविद्या—न्यायकाणाददर्शनं, प्रमेयविद्या—साङ्ख्ययोगवेदान्ताः।

सेयमार्याऽर्थक्रमानुरोधेन पाठक्रममनादृत्यैवं व्याख्याता ॥ ४ ॥

सम्प्रति प्रमाणविशेषलक्षणावसरे प्रत्यक्षस्य प्रमाणेषु ज्येष्ठत्वात् तदधीनत्वाच्चानुमानादीना, सर्ववादिनामविप्रतिपत्तेश्च तदेव तावल्लक्षयति— "प्रतिविषयाध्यवसायो दृष्टम्" इति,

**प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम् ।**
**तल्लिङ्गलिङ्गिपूर्वकमाप्तश्रुतिराप्तवचनं तु ॥ ५ ॥**

अत्र 'दृष्टम्' इति लक्ष्यनिर्देशः। परिशिष्टन्तु लक्षणम्, समानासमानजातीयव्यवच्छेदो लक्षणार्थः,

---

पाठानुपूर्वीमुपेक्ष्य कुतो विपरीतक्रमेणेय कारिका व्याख्यातेति शङ्कायामाह—"सेयमार्या" इति, आर्या='आर्याख्यछन्दोबद्धा कारिका' "अर्थक्रमानुरोधेन" इति। यथा च पाठक्रमादर्थक्रमस्य बलीयस्त्व तथा "अर्थाच्च" इति सूत्रे[1] जैमिनीये व्यक्तमिति ततोऽवसेयम्, आकाङ्क्षायोग्यतादिकमेव परस्परान्वयकारण नानन्तरश्रवणमात्रमिति भाव ॥ ४ ॥

पञ्चमार्यामवतारयति—"सम्प्रति" इत्यादिना, प्रमाणाना ये विशेषा=प्रत्यक्षादयो भेदास्तेषा यानि लक्षणानि तन्निरूपणावसरे सति तदेव=प्रत्यक्षमेव तावत्=प्रथम लक्षयतीत्यन्वय।

प्रत्यक्षस्य प्रथमनिरूपणे हेतुमाह—"प्रत्यक्षस्य प्रमाणेषु ज्येष्ठत्वाद्" इति, ज्येष्ठत्वाद्=पूर्ववर्तित्वाद्, निखिलप्रमाणोपजीव्यत्वादिति यावद्, तदेवाह—"तदधीनत्वाच्च" इति, अनुमानादीना[2] प्रत्यक्षसापेक्षत्वादित्यर्थ। हेत्वन्तरमाह—"सर्ववादिनामविप्रतिपत्तेश्च" इति-प्राकृतचार्वाकादेरपि प्रत्यक्षे विवादाभावेन सर्वसम्मतत्वाच्चेत्यर्थ। परिशिष्ट='प्रतिविषयाध्यवसाय' इत्यवशिष्टो भाग इत्यर्थ।

लक्षणकरणस्य प्रयोजनमाह—"समानासमानजातीय" इति, समानजातीयेभ्योऽसमानजातीयेभ्यश्च पदार्थेभ्यो यो व्यवच्छेद=व्यावर्तनं—विभज्य लक्ष्यस्थापन स लक्षणार्थ.=लक्षण करणप्रयोजनमित्यर्थ।

एतेन 'समानासमानजातीयव्यवच्छेदकत्व लक्षणत्वम्' इति लक्षणशब्दार्थोऽप्यनेन ज्ञापितो वेदितव्य।

लक्षण हि व्यतिरेकिहेतुवचनं सत्[3] सजातीयविजातीयेभ्योऽर्थेभ्यो व्यावर्त्य लक्ष्य व्यवस्थापयतीति भवति लक्षणस्य सजातीयविजातीयव्यवच्छेदकत्वम्।

'नीलमुत्पलम्' इत्यत्र सजातीयमात्रव्यवच्छेदके विशेषणेऽतिप्रसङ्गवारणाय "असमानजातीय" इति, रूप गुण इत्यादौ विजातीयद्रव्यव्यवच्छेदकधर्मेऽतिव्याप्तिवारणाय 'समानजातीय' इति,

---

१ अ० ५ पा० १ सू० २। अग्निहोत्र जुहोति, यवागू पचति, इति होमपाकयो पाठक्रमेण पौर्वापर्यसत्त्वेऽप्यर्थक्रममादाय पक्त्वैव होतव्यमिति हि तत्र व्यक्तम्। २ अनुमानादीनामिति बहुवचनन्तु पराभिमतोपमानाद्यभिप्रायेण नेयम्। ३ अत एव पृथिव्या लक्षण गन्धवत्त्व 'पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वाद्' इत्येव व्यतिरेकिहेतुवचन सत् पृथिवीमितरेभ्यो व्यावर्त्य व्यवस्थापयति।

अवयवार्थस्तु विसिन्वन्ति=विषयिणमनुबध्नन्ति-स्वेन रूपेण निरूपणीयं कुर्वन्तीति यावद्, विषयाः—पृथिव्यादयः, सुखादयश्च,

अस्मदादीनामविषयाश्च तन्मात्रलक्षणा योगिनामूर्द्ध्वस्रोतसां च विषयाः, विषयं विषयं प्रति वर्तत इति प्रतिविषयम्=इन्द्रियम्, वृत्तिश्च सन्निकर्षः, अर्थसन्निकृष्टमिन्द्रियमित्यर्थः ।

---

यथा चास्य प्रत्यक्षलक्षणस्य सजातीयविजातीयव्यवच्छेदकत्व तथा प्रत्यक्षलक्षणावसानेऽत्रैव व्यक्तमिति नात्र मया किञ्चिद् वचनीयम् ।

लक्षणपदघटकशब्दार्थमाह—"अवयवार्थस्तु" इति, 'विसिन्वन्ति' इति 'षिञ् बन्धने' इत्यस्य रूप, तस्य विवरणमाह—"विषयिणमनुबध्नन्ति" इति । विषयिणं=चित्तवृत्तिरूप ज्ञानम् । 'अनुबध्नन्ति' इत्यस्यार्थमाह—"स्वेन रूपेण निरूपणीय कुर्वन्ति" इति ।

स्वेन रूपेण=स्वकीयेनाकारेण, निरूपणीय=निरूपणार्हं स्वाकारोपरक्त कुर्वन्तीति यावद्,

घटादयो विषया हीन्द्रियसन्निकर्षादिना विषयिण चित्त स्वाकारेणोपरञ्जयन्ति, यदिदमुपरञ्जन=विषयिणि चित्ते विषयाणा स्वाकारार्पणमेतदेव स्वेन रूपेण निरूपणीयत्वमिति तत्त्वम्,

विषयशब्देन न केवल स्थूला विषया गृह्यन्तेऽपि तु सूक्ष्मा अपीत्याह—"अस्मदादीनाम्" इति, तन्मात्रलक्षणा=सूक्ष्मभूतात्मका ये पदार्था अस्मदादीनामविषयास्तेपि योगिनामूर्द्ध्वस्रोतसां च विषया इति तेऽपि विषयपदेन गृह्यन्त इत्यर्थ ।

एव विषयपदार्थमाख्याय प्रतिविषयपदार्थमाह—"विषय विषय प्रति" इति,

विषय विषय प्रति वर्तत इत्यनेन यदिन्द्रियाणा विषय प्रति वर्तनमभिहित तन्नेन्द्रियाणा स्वस्थानपरित्यागपूर्वक विषयदेशगमन तथा सत्यन्धत्वादिप्रसङ्गाद् अपि तु सबन्धविशेष[1] इत्याह—"वृत्तिश्च सन्निकर्ष" इति, 'वर्तते' इतिपदघटकवृतुधात्वर्थरूपा वृत्तिश्चात्र सन्निकर्ष एव न त्विन्द्रियाणां विषयदेशगमनमित्यर्थ ।

अयमेव सन्निकर्षो व्यापार इत्यभिधीयते ।

तथा चाहु—'वृत्तिस्तु सन्निकर्ष' इति न्यायभाष्यमुपादाय तात्पर्यटीकाकारा "वृत्तिरिति हि व्यापार, स तु व्यापार उच्यते य कारकै फले जनयितव्ये चरमभावी धर्मभेद फलोत्पादानुकूलोऽपेक्ष्यते, यथा पटे जनयितव्ये तन्तुभिश्चरमभाविन सयोगविशेषा, स्वर्गे जनयितव्ये यागेनापूर्वमात्मधर्म, तथेहापीन्द्रियादिना प्रमाणेन प्रमाया फले प्रवृत्तेन तदुत्पादनानुकूल सन्निकर्षो ज्ञान वा चरमभावी धर्मोऽपेक्ष्यत इति भवति व्यापार स एव वृत्तिरित्याख्यायते" इति ।

एवमवयवार्थमाख्याय प्रतिविषयमिति समुदायस्य निर्गलितमर्थमाह—"अर्थसन्निकृष्टमिन्द्रियम्" इति ।

---

१ स च सबन्धविशेषो नोच्छिन्नमूलोऽपि त्वच्छिन्नमूल, तथाचाहुर्वाचस्पतिमिश्रा "निर्गताप्यच्छिन्नमूला चक्षु सन्तति कार्याय समर्था न च्छिन्नमूला" इति, एतेन यदि च चक्षु प्राप्यार्थं गृह्णीयात् तदोन्मील्य निमीलितनयनोपि रूप पश्येद् इत्याशयेन "यदि च स्यात् तदा पश्येदप्युन्मील्य निमीलनाद्" इत्यभिहित तन्निराकृत वेदितव्यम्, अच्छिन्नमूलसन्तत्यङ्गीकारे चान्धत्वादिप्रसङ्गोपि नेत्यपि ज्ञेयम् ।

**तस्मिन्नध्यवसायः–तदाश्रित इत्यर्थः, अध्यवसायश्च बुद्धिव्यापारो ज्ञानम्, उपात्तविषयाणामिन्द्रियाणां वृत्तौ सत्या बुद्धेस्तमोऽभिभवे सति यः सत्त्व-समुद्रेकः सोऽध्यवसाय इति वृत्तिरिति ज्ञानमिति चाख्यायते ।**

अर्थः=घटादिविषय तत्सबद्धमिन्द्रियमित्यर्थ, प्रतिविषयेऽध्यवसाय इति सप्तमीतत्पुरुष-माश्रित्याह—"तस्मिन्नध्यवसाय" इति, तस्मिन्=प्रतिविषय इत्यर्थ । समासान्तर्गतलुप्त-सप्तम्यर्थमाह—"तदाश्रित" इति, विषयव्यापृतेन्द्रियाधीन इत्यर्थ ।

तदाश्रित इत्यनेनाध्यवसायस्येन्द्रियनिष्ठत्वाभिधानेनाध्यवसाय इन्द्रियधर्म इति नास्थेयमपि त्विन्द्रियमाश्रित्य बुद्धौ वर्तमानत्वेन बुद्धेरेव स धर्मोऽभ्युपेय इत्याह—"अध्यवसायश्च" इति, अध्यवसायपदाभिधेय ज्ञान च बुद्धेरेव व्यापारो नेन्द्रियधर्म इत्यर्थ ।

यथा—बीजकालसलिलधरणीसयोगादिसन्निधाने जायमानोऽप्यङ्कुरो न कालाङ्कुर, सलिला-ङ्कुर, धरण्यङ्कुर इति वा व्यपदिश्यते तस्य कालादिधर्मत्वाभावाद् अपि तु बीजेनैव व्यपदिश्यते यवाङ्कुर शाल्यङ्कुर इति तस्य तद्धर्मत्वात्, तथा बुद्धिविषयेन्द्रियालोकसयोगादिसन्निधानेन जायमानमपि ज्ञानं नेन्द्रियधर्मो विषयधर्म आलोकधर्म इति वा व्यपदिश्यते, तस्य तद्धर्मत्वा भावादपि तु बुद्धिधर्मत्वेनैव व्यपदिश्यते बुद्धिवृत्तिरिति बुद्धिव्यापार इति भावः ।

अध्यवसायपदाभिधेयबुद्धिव्यापारस्य ज्ञानस्य लक्षणमाह—"उपात्तविषयाणाम्" इति,

उपात्त=गृहीत—प्रतिबिम्बरूपेण लब्धो विषयो यैस्तेषामिन्द्रियाणा वृत्तौ सत्यां=विषया-काराकारितत्वे सति यो बुद्धेस्तमोरूपावरणानादरपुरस्सरसत्त्वात्मकप्रकाशबाहुल्यरूपो धर्म-विशेषः सोऽध्यवसाय इति वृत्तिरिति ज्ञानमिति चाभिधीयत इत्यर्थ ।

तमोऽभिभवसमसमयभवो यो बुद्धे सत्त्वसमुद्रेकः स एव वृत्तिपदार्थत्वेनात्राभिप्रेतो नत्वि-तरत् तस्य तमोनिरसनमुखेन वृत्त्युत्पत्तिहेतुत्वेपि वृत्तिलक्षणघटकत्वाभावात्, तेन नानुमाना गमवृत्तिषु वृत्तिलक्षणाव्याप्तिरिति ।

अत्रेद बोध्य—यथा स्वभावतश्चलनशीलमपि जलाशयस्थ सलिल निर्गममार्गासत्त्वरूप-प्रतिबन्धकबलात्स्वय क्षेत्रमनुपसर्पदपि छिद्रे सति तद्द्वारा निर्गत्य कुल्यात्मना क्षेत्रमुपसृप्य

१ आस्ये प्रयत्न आस्यप्रयत्न, शब्दे सज्ञा शब्दसज्ञा, इत्यादिप्रयोगेषु महाभाष्यकारादिभि सप्तमीतत्पुरुषस्याश्रितत्वादनुक्तोपि "सप्तमीशौण्डै" इत्यत्र योगविभाग ऊहनीय, 'सुप् सुपा' इति वा समास । २ तस्य=अङ्कुरस्य, तद्धर्मत्वाद्—बीजधर्मत्वाद् । ३ यद्वा उपात्तशब्द सन्निहितवाची सन्निहितविषयाणामिन्द्रियाणा वृत्तौ=सन्निकर्षे सतीत्यर्थ, सन्निहित एव विषये सन्निकर्षो जायते न व्यवहित इत्याशयेन चैतदभिधानमिति ज्ञेयम् । ४ ननूपात्तविषयाणामि-त्यादिना विषयेन्द्रियसन्निकर्षजन्यस्यैव बुद्धे सत्त्वोद्रेकस्य वृत्तिलक्षणत्वे लिङ्गादिजन्यानुमाना-दिवृत्तेरिन्द्रियजन्यत्वाभावेन तत्र वृत्तिलक्षणाव्याप्तिरित्याशङ्कायामाह–"तमोऽभिभव"इत्यादि ।

५ इतरद्–उपात्तविषयाणामिन्द्रियाणामित्यादिनेन्द्रियसन्निकर्षाद्यभिधानम् । तस्य=इन्द्रियस-न्निकर्षादे, 'तमोनिरसनमुखेन' तथा च सत्त्वोद्रेक एव वृत्तिपदार्थ, तत्र च तमोऽभिभवन कारण तमोऽभिभवे चेन्द्रियसन्निकर्षव्याप्तिज्ञानादिक निमित्तमित्यत्र फलितम् ।

इदन्तावत् प्रमाणम्,
अनेन यश्चेतनाशक्तेरनुग्रहस्तत्फलं प्रमा बोध इति।

केदाराकारेण परिणमते तथा स्वभावत सर्वार्थग्रहणसमर्थमपि बुद्धितत्त्व तमसा प्रतिबद्ध सत् स्वय विषयमनुपसर्पदपीन्द्रियार्थसन्निकर्षादिना तमोनिरासे इन्द्रियप्रणालिकया विषयमुपसृप्य तदाकारेण परिणमते, योय बुद्धितत्त्वस्य विषयाकारपरिणाम स एवाऽध्यवसाय इति वृत्तिरिति ज्ञानमिति प्रमाणमिति चाभिधीयते।

तत्रैतावान् विशेष —इन्द्रियसन्निकर्षद्वारा यस्तमोभिभवसमसमयसत्त्वसमुद्रेकप्रयुक्तो बुद्धेर्विषयाकारपरिणाम स प्रत्यक्षप्रमाणमिति व्यवह्रियते, व्याप्तिज्ञानजन्यश्च यस्तथाविध परिणाम सोऽनुमानप्रमाणमिति व्यपदिश्यते, वाक्यजन्यश्च यस्तादृश परिणामविशेष स आगमप्रमाणमित्यभिधीयते।

तदेवाह--" इदं तावत् प्रमाणम् " इति।

तावद्—इति वाक्यालङ्कारे, इदम्=इन्द्रियसन्निकर्षादिना जायमान यद् बुद्धितत्त्वगतसत्त्वाधिक्यप्रयुक्त बुद्धेर्विषयाकारपरिणामशीलत्व तदिदं प्रमाणमित्युच्यत इत्यर्थ।

नन्वन्त करणस्य चित्तस्य निरवयवत्वेन पुरुषवदपरिणामित्वात्कथ विषयाकारपरिणामशीलत्व तस्येति चेत्, प्रधानवन्निरवयवत्वेपि परिणामित्वोपपत्तेरिति गृहाण। अपरिणामित्वे चेतनत्व तन्त्रं न निरवयवत्वमिति तत्त्वम्।

वस्तुतस्तु—"हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रित लिङ्ग, सावयव परतन्त्रं व्यक्त विपरीतमव्यक्तम्" इति साङ्ख्यस्मरणात्प्रकृत्यतिरिक्तस्य सर्वस्यैव बुद्ध्यादे सावयवत्वेन मध्यमपरिमाणत्वान्न विषयाकारपरिणामानुपपत्ति, मध्यमपरिमाणत्वेप्यतिनिर्मलविरलतैजसद्रव्यत्वेन तरणिकिरणवत् सत्वरप्रसरोपपत्तेर्न विलम्बेन विप्रकृष्टध्रुवादिविषयप्रतिभासानुपपत्तिश्च,—

ध्रुवादिविषयपर्यन्तगमनेप्यच्छिन्नमूलसन्तत्यङ्गीकारेणान्त करणस्य देहसबन्धसद्भावान्न देहस्य निर्जीवत्वापत्तिरित्यपि ध्येयम्।

एतेन (अन्त करणस्याणुपरिमाणत्वे प्राणनक्रियाधारस्य तस्य दूरवर्त्तिविषयप्रदेशगमने प्राणस्यापि निर्गतत्वेन देहपातापत्ति, तस्य विभुत्वे च निष्क्रियत्वेन बहिर्निर्गमनासभवेन विषयाकारपरिणामानापत्ति ) तस्य मध्यमपरिमाणत्वे च देहवन्मन्दगामित्वेन झटिति विषयप्रतिभासानुपपत्ति, इति शङ्काप्यपोदिता वेदितव्या।

यथा चान्त करणस्य नाणुत्व विभुत्व वा तथा 'न व्यापकत्व मनस. करणत्वादिन्द्रियत्वाद् वा' 'सक्रियत्वाद् गतिश्रुते' 'न निर्भागत्व तद्योगाद्' इत्यादि साङ्ख्यसूत्रेषु स्पष्टम्।

एव प्रमाणसामान्य लक्षयित्वा तत्फलभूता प्रमामाह— "अनेन" इति, अनेन=विष

१ तथाविध =विषयप्रकाशक सत्त्वोद्रेकरूप। २ 'चित्तमपरिणामि निरवयवत्वादात्मवद्' इति प्रयोगश्चेतनत्वोपाधिसवलितत्वेन दुष्ट इति भाव। ३ अ० १ सू० २४। स्पष्ट चैतद् १० इति कारिकायामग्रे। ४ सामान्यकरणवृत्ति प्राणाद्या वायव पञ्च (अ० २ सू० ३१) इति साङ्ख्यसूत्रादन्त करणत्रयव्यापारस्यैव प्राणत्वादन्त करणनिर्गमे प्राणनिर्गमावश्यभावादित्यर्थ। ५ अ० ५ सू० ६९। ६ सू० ७०। ७ सू० ७१ निर्भागत्व=निरवयवत्व मनसो नेत्यर्थ।

बुद्धितत्त्वं हि प्राकृतत्वादचेतनमिति तदध्यवसायोप्यचेतनो घटादिवत्, एवं बुद्धितत्त्वस्य सुखादयोपि परिणामभेदा अचेतनाः, पुरुषस्तु सुखाद्यननुषङ्गी चेतनः, सोयं बुद्धितत्त्ववर्तिना ज्ञानसुखादिना तत्प्रतिबिम्बितस्तच्छायापत्त्या ज्ञानसुखादिमानिव भवतीति चेतनोऽनुगृह्यते,

---

याकारपरिणामधारिणा बुद्धितत्त्वेन चेतनाशक्ते=चेतनस्य पुरुषस्य योऽनुग्रह =स्वोपगृहीताना विषयाणा स्वप्रतिबिम्बिते चेतने समर्पण तत् फलमिति बोध इति प्रमेति चाभिधीयत इत्यर्थ ।

अन्त करणस्याय स्वभावो यदिन्द्रियैरुपनीतान् विषयान् स्वस्वामिन आत्मने समर्पयति, यथाहु —"गृहीतानिन्द्रियैरर्थानात्मने य प्रयच्छति, अन्त करणरूपाय तस्मै विश्वात्मने नम"इति,

इन्द्रियसन्निकर्षादिना जायमानोय घट इत्यादि बौद्धो बोध प्रमाण, तदनूपजायमानो घटमह जानामीत्यादिपौरुषेयो बोधश्च प्रमेति भाव ।

अनुग्रहपदार्थं स्पष्टयति, "बुद्धितत्त्व" इति, हि=यत बुद्धितत्त्व प्राकृतत्वाद्=जडप्रकृतिकार्यत्वाद्चेतनम् इति=अतस्तद्धर्मोऽध्यवसायोप्यचेतन इत्यर्थ. ।

कस्तर्हि चेतन इत्यत्राह—"पुरुषस्तु" इति, बुद्धितत्त्वाद्विलक्षण पुरुष इति द्योतनार्थस्तुशब्द, तदेवाह "चेतन" इति,

'चेतनोह जानामि सुखी' इति चैतन्यसामानाधिकरण्येन ज्ञानसुखादेरनुभूयमानत्वेन पुरुषस्यैव ज्ञानसुखादिमत्त्वोपपत्ते कथमभिहित बुद्धे परिणामविशेषा ज्ञानसुखादय इति, इत्याशङ्क्याह—"सुखाद्यननुषङ्गी" इति, "असङ्गोह्यय पुरुष" इति श्रुतेर्ज्ञानसुखाद्यनाधार इत्यर्थ, कथतर्हि चेतनोह जानामीति प्रतीतिरित्यत्राह—"सोयम्" इति, चित्तगतेन ज्ञानादिना पुरुषस्य ज्ञानादिमत्त्वप्रतीतिरित्यर्थ. ।

अन्यगतस्याऽन्यत्र भाने निमित्तमाह—"तच्छायापत्त्या" इति, बुद्धितत्त्वतादात्म्यापत्त्येत्यर्थ, चितिचित्तयोरभेदग्रहादितियावद्, अयमेवास्मिताख्योऽविवेक इत्यभिधीयते, यथाहु — 'दृक्दर्शनशक्त्योरेकात्मतेवास्मिता' इति, 'बुद्धित पर पुरुषमाकारशीलविद्यादिभिर्विभक्तमपश्यन् कुर्यात् तत्रात्मबुद्धि मोहेन' इति च।

बुद्धितादात्म्यापत्तौ प्रयोजकमाह—"तत्प्रतिबिम्बित" इति, बुद्धितत्त्वे प्रतिबिम्बित इत्यर्थ ।

एव च बुद्धावेव प्रमाख्य फल जायते न पुरुषे तस्याऽसङ्गत्वेन प्रमाधारत्वाभावात्, चितिचित्तयोरभेदग्रहाच्च पौरुषेयो बोध इत्युपचर्यत इत्यत्र फलितम् ।

विज्ञानभिक्षुस्तु—'न बुद्धौ प्रमाख्य फल जायते तथा सति पौरुषेयशब्दस्य यथाश्रुतार्थत्यागापत्ते', प्रतिबिम्बस्य तुच्छतयाऽर्थभानानुपपत्तेश्च, प्रतिबिम्बस्य प्रकाशाद्यर्थक्रियाया क्वाप्य-

---

१ विष्णुपुराणे प्रथमेंशे चतुर्दशेऽध्याये–३५ श्लो०। २ यो० सू० ६ पा० २। दृक्शक्ति = पुरुष, दर्शनशक्ति =बुद्धि, इत्येतयोरेकस्वरूपापत्तिरिवास्मितेत्यर्थ । ३ पुरुषस्य आकार = स्वरूप–सदा विशुद्धि, शीलम्–औदासीन्य, विद्या=चैतन्यम्, बुद्धि अविशुद्धा अनुदासीना जडा च, इति सत्यपि बुद्धिपुरुषयोर्विभागे तथापि मोहेन=अस्मिताख्याऽविवेकेन विभक्तमपश्यन् तत्रात्मबुद्धि करोतीति, पञ्चशिखोक्तेरर्थ ।

चितिच्छायापत्त्या चाचेतनापि बुद्धिस्तदध्यवसायोऽप्यचेतनश्चेतनवद् भवतीति,

तथा च वक्ष्यति—

"तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम्।
गुणकर्तृत्वेपि तथा कर्तेव भवत्युदासीनः" 'का २०' इति।

---

दर्शनाद्, अपितिवन्द्रियसन्निकर्षादिना पूर्वं बुद्धेरर्थाकारा वृत्तिर्जायते तदनु चार्थोपरक्ता बुद्धिवृत्ति प्रतिबिम्बरूपेण पुरुषारूढा सती भासते, "तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टय। इमास्ता प्रतिबिम्बन्ति सरसीव तटद्रुमा" इत्यादिस्मृतिषु परस्पर प्रतिबिम्बस्य सिद्धत्वाद्, इत्येव वाचस्पत्य निराचष्ट, एतच्च पूर्वोपन्यस्त 'चितेरप्रतिसङ्क्रमाया' इति योगसूत्रतद्भाष्य पञ्चशिखाचार्यवचनेभ्यो बुद्धौ चैतन्यप्रतिबिम्बस्य प्रामाणिकत्वेपि पुरुषे बुद्धिप्रतिबिम्बस्या प्रामाणिकत्वादयुक्तम्।

यास्तु 'तस्मिंश्चिद्दर्पणे' इत्यादिस्मृतयस्ता अपि सूत्राद्यानुगुण्येन 'बुद्धिदर्पणप्रतिबिम्बितत्वेन तत्तादात्म्यापन्ने दर्पणवत् स्वच्छे चेतन इमा वस्तुदृष्टय =बुद्धेर्धर्मभूतानि ज्ञानान्यविवेकात्प्रतिभासन्ते' इत्येवमर्थपरतया नेया।

किंच नहि पारमार्थिकत्वघटितमेव पुरुषनिष्ठत्व यथाश्रुत पौरुषेयशब्दार्थ किंतर्हि पुरुषस्वत्व पुरुषनिष्ठत्व वा, तच्च पारमार्थिक वौपचारिक वेति नाग्रह, प्रकृते च मुख्यस्यासम्भवादौपचारिक तन्निष्ठत्वमाश्रीयतेऽतो न यथाश्रुतार्थत्यागापत्ति।

अपिच 'आरोपितया क्रियया कल्पित दर्शनकर्तृत्वं वस्तुतस्तु बुद्धे साक्ष्येव पुरुष' इति स्वोक्त्या सह विरोधादश्रद्धेय पुरुषस्य मुख्यप्रमाश्रयत्वेन प्रमातृत्वाभिधानम्।

यच्चोक्तम् 'प्रतिबिम्बस्यार्थक्रियाकारित्व नास्ति' इति तदपि न, जडप्रतिबिम्बस्यार्थक्रियाकारित्वाभावेपि चेतनप्रतिबिम्बस्यार्थक्रियाकारित्वसम्भवादित्यलमधिकेन।

यद्यपि पूर्वत्र चित्तवृत्ति पौरुषेयबोधश्चेति प्रमाद्वयमभिहितं तथापि योगभाष्ये पौरुषयबोधस्यैव फलत्वाभिधानेन प्रमाद्वयस्वीकारो नावश्यक इत्याशयेनात्र चित्तवृत्ते प्रमाणत्व पौरुषेयबोधस्य च प्रमात्वमिति प्रमैक्यमभिहितमिति बोध्यम्, अत एव 'द्वयोरेकतरस्य वा' इत्यनियमोऽभिहितो वाकारेण सूत्रकारेण।

नन्वस्तु बुद्धितादात्म्यापत्त्या पुरुषस्य ज्ञानादिमत्त्व तथापि कथमचेतनस्य बुद्धितत्त्वस्य तद्धर्मस्य चाध्यवसायस्य चेतनत्वेन भानमित्यत्राह—"चितिच्छायापत्त्या च" इति।

---

१ पा० १ सू० ४। ७। योगवार्तिके, अ० १ सू० ८७ साङ्ख्यप्रवचनभाष्ये चस्पष्टोयमर्थ। २ यथा बुद्धौ चित्प्रतिबिम्बमेव चितावपि बुद्धिप्रतिबिम्ब स्वीकार्यमिति भाव। ३ यच्चोक्त पुरुषस्य प्रमाश्रयत्वाभावे पौरुषेयशब्दस्य यथाश्रुतार्थत्यागापत्तेरिति, तद् दूषयति—"नहि" इति। ४ पुरुषस्यायमित्यर्थे 'तस्येदम्' इत्यणि पुरुषस्वत्व पौरुषेयशब्दार्थ, पुरुषे भव इत्यर्थे 'तत्रभव' इत्यणि पुरुषनिष्ठत्व पौरुषेयशब्दार्थ इति विवेक।

अत्राऽध्यवसायग्रहणेन सशयं व्यवच्छिनत्ति, संशयस्यानवस्थितग्रहणेनाऽनिश्चितरूपत्वाद्, निश्चयोऽध्यवसाय इति चाऽनर्थान्तरम्,

विषयग्रहणेन चासद्विषयं विपर्ययमपाकरोति,

प्रतिग्रहणेन चेन्द्रियार्थसन्निकर्षसूचनादनुमानस्मृत्यादयश्च पराकृता भवन्ति,

तदेवं समानासमानजातीयव्यवच्छेदकत्वात् 'प्रतिविषयाध्यवसाय' इति दृष्टस्य सपूर्णं लक्षणम्,

---

एवं प्रत्यक्षलक्षणमभिधाय लक्षणं समन्वयितुं लक्षणघटकपदानां कृत्यमाह—"अत्र" इति, प्रतिविषयाध्यवसाय इति दृष्टलक्षणे, सशयम्=एकधर्मिकविरुद्धभावाभावप्रकारकमनवधारणात्मकं ज्ञानं, व्यवच्छिनत्ति=व्यावर्तयतीत्यर्थः, कथं व्यावृत्तिरित्यत्राह—"संशयस्य" इति, अनवस्थितग्रहणेन=एकधर्मिकनानाधर्मरूपनानाकोटिप्रकाशनेन, अनिश्चितरूपत्वाद्=एककोटिकत्वासत्त्वरूपानवधारणात्मकत्वादित्यर्थः। निश्चयपदाभावे कथमनिश्चयज्ञानवारणमित्यत्राह—"निश्चयोऽध्यवसाय इति चाऽनर्थान्तरम्" इति, अन्योऽर्थोऽर्थान्तरं नार्थान्तरमनर्थान्तरम्=न भिन्नार्थकम्—एकार्थकमिति यावद्।

अध्यवसायपदव्यावर्त्यं प्रदर्श्य विषयपदव्यावर्त्यमाह—"विषयग्रहणेन च" इति, असद् विषयं=न विद्यते सन् विषयो यस्य तादृशं मिथ्याज्ञानात्मकं विपर्ययमपाकरोतीत्यर्थः।

विषयं विषयं प्रति वर्तत इति प्रतिपदादानकृत्यमाह—"प्रतिग्रहणेन च" इति।

प्रत्यक्षलक्षणे लक्षणलक्षणं समन्वयन् प्रकृतमुपसहरति—"तदेव" इति, यस्माद् लक्षणान्तर्गतविशेषणपदैरलक्ष्यनिरासस्तस्मादित्यर्थः।

प्रत्यक्षत्वेन समानजातीयाः सशयादयः विजातीयत्वेनासमानजातीया अनुमानस्मृत्यादयः तेषां व्यवच्छेदकत्वाद्=व्यावर्तकत्वात् प्रतिविषयाध्यवसाय इति दृष्टस्यादुष्टलक्षणमित्यर्थः।

ननु शास्त्रान्तरे 'प्रत्यक्षं कल्पनापोढमभ्रान्तम्' 'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षम्' 'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्' इत्येवं-

---

१ पर्वतजलाशयौ वह्नितदभाववन्ताविति ज्ञानमपि विरुद्धभावाभावप्रकारकमिति तदपि सशयः स्यादत उक्तम् 'एकधर्मिक' इति, वृक्षः सयोगवान् तदभाववाँश्चेत्यत्र व्यभिचारवारणाय 'विरुद्ध' इति, घटो द्रव्यं पृथिवी चेति ज्ञानस्य सशयत्वनिरासाय "भावाभावप्रकारकम्" इति, इच्छानिरासाय ज्ञानमिति। २ सौगतदिङ्नागाभिहितमिदं लक्षणं, न्यायबिन्दावप्येतदेवोपलभ्यते, कल्पनाया अपोढम्=अपेतं कल्पनास्वभावरहितं, यत् किल न नाम्नाऽभिधीयते नच जात्यादिभिर्व्यपदिश्यते तत् प्रत्यक्षमित्यर्थः। ३ जै० सू० ४ 'अनिमित्तं विद्यमानोपलम्भनत्वाद्' इति सूत्रशेषः, पुरुषस्येन्द्रियाणां सति=विद्यमाने विषये सम्प्रयोगे सति यद् बुद्धेः=ज्ञानस्य जन्म तत्प्रत्यक्षम्, एतत्प्रत्यक्षं धर्मज्ञाने न निमित्तं, प्रत्यक्षप्रमासाधनानीन्द्रियाणि धर्मप्रमां न साधयन्ति, तत्र हेतुमाह—"विद्यमान" इति, वर्तमानस्यैव वस्तुन इन्द्रियैरुपलम्भाद् धर्मस्य च ज्ञानकालेऽसत्त्वेनेन्द्रियायोग्यत्वादित्यर्थः। ४ न्या० सू० ४ अव्यपदेश्यं=निर्विकल्पकं, व्यवसायात्मकं सविकल्पकमिति विभागः। इतरच्च प्रत्यक्षलक्षणम्।

तन्त्रान्तरे लक्षणान्तराणि तैर्थिकाना न दूषितानि, विस्तरभयाद् इति ।

नाऽनुमानं प्रमाणमिति वदता लौकायतिकेनाऽप्रतिपन्नः सन्दिग्धो विपर्यस्तो वा पुरुषः कथं प्रतिपद्येत, नच पुरुषान्तरगता अज्ञानसन्देहविपर्ययाः शक्या अर्वाग्दृशा प्रत्यक्षेण प्रतिपत्तुं, नापि प्रमाणान्तरेण, अनभ्युपगमाद्, अनवधृताऽज्ञानसंशयविपर्यासस्तु यं कञ्चन पुरुषं प्रति वर्तमानोऽनवधेयवचनतया प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येत,

विधानि यानि प्रत्यक्षलक्षणानि तानि किं दुष्टान्यदुष्टानि वा, दुष्टानि चेत् कथ न दूषितानि नानि भवताऽदुष्टानि चेद् कथं लक्षणान्तराश्रयणमित्याशङ्क्य यद्यपि दुष्टानि तानि तथापि विस्तरभयान्न दूषितानीत्याह—"तन्त्रान्तरे" इति, 'तन्त्रान्तरेषु' इत्यपि पाठ । तन्त्रान्तरे= साङ्ख्यातिरिक्तन्यायप्रभृतिशास्त्रे, तैर्थिकाना=दार्शनिकाना—शास्त्रप्रणेतॄणां गौतमप्रमुखमुनीना यान्यन्यानि प्रत्यक्षलक्षणानि तानि विस्तरभयान्न दूषितानीत्यर्थ ।

प्रत्यक्षलक्षणोपसंहारावसरे न्यायवार्तिके तात्पर्यटीकाया, तत्त्वप्रदीपिकायां च लक्षणान्तराणा दुष्टत्वस्य स्पष्टं व्यवस्थापनादिति तत्रैव कणेहत्यालोचनीयमिति तु वयम् ।

अनुमाननिर्वचनपर कारिकाश व्याख्यातुकामस्तावदनुमानाप्रामाण्यवादिन चार्वाक शिक्षयति— "नानुमान प्रमाणम्" इति,

लोक आयत=विस्तीर्णमिव यत् प्रसिद्ध प्रत्यक्षप्रमाण तल्लोकायत, तत्प्रतिपादक चार्वाकशास्त्रमपि लोकायत, तदधीते तद् वेद य स लौकायतिक, तेन=प्रत्यक्षातिरिक्त न प्रमाणमिति वादिना चार्वाकेण,अप्रतिपन्न=अज्ञानयुक्त, सन्दिग्ध=संशययुक्त, विपर्यस्त=भ्रान्ति युक्त पुरुष कथ प्रतिपद्येत=ज्ञायेत, प्रत्यक्षेण ज्ञायेतेत्याशङ्क्याह—"नच" इति, पुरुषान्तरगता=परपुरुषवर्तिनोऽज्ञानादयो गौरत्वादिवद् देहधर्मा अपि न प्रत्यक्षेण प्रतिपत्तु=ज्ञातु शक्या रूपादिमत्त्वाभावाद्, योगिना ज्ञायेतापि प्रत्यक्षेण परकीयाज्ञानादिक नतु चार्वाकेण तच्छक्य मित्याह—'अर्वाग्दृशा' इति, बाह्यस्थूलवस्तुविषयकज्ञानवताऽयोगिना चार्वाकेणेत्यर्थ ।

माभूदध्यक्षेण ज्ञान तद्वचनात्तु तज्ज्ञान कुतो न जायेतेत्याशङ्क्य वचनस्यापि प्रत्यक्षातिरिक्तत्वेन तेनानभ्युपगमादित्याह—"नापि मानान्तरेण" इति ।

परपुरुषवर्तिनोऽज्ञानादीनपरिज्ञायैव परपुरुषबोधनाय वचन प्रयुञ्जानस्तून्मत्तवदुपहसनीय. स्यादित्याह—"अनवधृताज्ञान" इत्यादिना, अनवधृता=अपरिज्ञाता परपुरुषवर्तिनोऽज्ञान संशयविपर्यासा येन सोऽनवधृताज्ञानसंशयविपर्यास इत्यर्थ ।

---

१ 'तीर्थं स्याद् दर्शनेष्वपि' इत्युक्तेस्तीर्थपद दर्शनपर, दर्शन च गौतमादिप्रणीत शास्त्र, तद ध्येतारो वेत्तारश्च दार्शनिकास्तैर्थिका वेत्यभिधीयन्ते, तदेवाह—'दार्शनिकानाम्' इति । २ गौत मीयलक्षणस्य तत्र दुष्टत्वानुक्तेराह "तत्त्वप्रदीपिकायाम्" इति, द्वितीयपरिच्छेदे चित्सुखाचार्यैं 'मानाधीना मेयसिद्धि 'इति कारिकाव्याख्यायामित्यर्थ । ३चारु=शास्त्रीयसंस्कारविधुरनरमनोह रम् अङ्गनालिङ्गनजन्य सुखं पुरुषार्थ इत्येवविध वाक्य यस्य स चार्वाक ,देहाद्यात्मवादी प्रत्यक्षैकप्रमाणमानी प्राकृत पुरुष , पृषोदरादित्वात्साधु , राजपुत्रव्यामोहनाय बृहस्पतिना लोकायतं शास्त्र प्रणीतमिति महाभारतीयखिले हरिवंशे स्पष्टम् 'दुर्योधनसखश्चार्वाको राक्षसस्त्वन्य एव । ४ लोकायतशब्दस्योक्थादिगणे पाठात् (क्रतूक्थादिसूत्रान्ताट्ठक्) इत्यनेन ठकि लौकायतिक इति साधु ।

**तदनेनाज्ञानादयः परपुरुषवर्तिनोऽभिप्रायभेदाद् वचनभेदाद् लिङ्गादनुमातव्या इत्यकामेनाप्यनुमानं प्रमाणमभ्युपेयम्।**

---

नन्वेतावता कथमनुमानाभ्युपगमस्यावश्यकत्वमित्यत्राह—"तदनेन" इति, यतो न प्रत्यक्षेण परपुरुषगताज्ञानादिप्रतिपत्तिः संभवति ततोऽनेन चार्वाकेण परपुरुषवर्तिनोऽज्ञानादयोऽनुमातव्याः=अनुमानेनैव ज्ञातव्या इति=यत एवमतोऽकामेनापि तेनानुमानं प्रमाणमङ्गीकरणीयमित्यर्थः।

केन लिङ्गेन परकीयाज्ञानाद्यनुमितिरित्यत्राह—"अभिप्रायभेदाद्" इति, वक्तृतात्पर्यविशेषाद्, लिङ्गाद् इत्यर्थः, तात्पर्यज्ञानं कुतस्त्यमत आह—"वचनभेदाद्" इति—

अयमीदृशाभिप्रायवानेतादृशवचनप्रयोक्तृत्वात् संप्रतिपन्नवदित्येवं तात्पर्यविशेषमनुमायायमेतद्विषयाज्ञानादिमानीदृशाभिप्रायवत्त्वादित्येवमज्ञानाद्यनुमानमित्यर्थः।

यद्वा—अभिप्रायभेदः=अज्ञानादिविशेषः, तस्माज् जातो यो वचनभेदः तस्माद् लिङ्गादित्यर्थः, तथा च 'एतद्वचनमेतदन्तःकरणस्थाज्ञाननिमित्तमसंबद्धवचनत्वान्मदीयासंबद्धवचोवद्,एतद्वच एतदन्तःकरणस्थसंशयनिमित्तमनिश्चितवचनत्वान्मदीयानिश्चितवचोवद्, एतद्वाक्यमेतदन्तःकरणस्थविपर्ययनिमित्तं मदीयभ्रान्तिवचोवद्' इत्येवमज्ञानादिप्रतिपत्तिरनुमेयेति फलितम्।

विशदीकृतश्चायं[1]त्योऽयमर्थो ग्रन्थान्तरे विस्तरेण शब्दान्तरैर्मिश्रैरिति तदेवात्रोद्धृत्य प्रदर्श्यते—

**([3]प्रतिपन्नं पुमांसमपहायाप्रतिपन्नसन्दिग्धाः प्रेक्षावद्भिः प्रतिपाद्यन्ते, न चैषामित्थंभावो[4] भवत्प्रत्यक्षगोचरः, न खल्वेते गौरत्वादिवत्प्रत्यक्षगोचराः, किन्तु वचनचेष्टादिलिङ्गानुमेयाः, नच लिङ्गं प्रमाणं यत एते सिध्यन्ति, न पुंसामित्थंभावमविज्ञाय यं कंचन पुरुषं प्रतिपिपादयिषतोऽनवधेयवचनस्य प्रेक्षावत्ता नाम, अपि[5] च पशवोपि हिताहितप्राप्तिपरिहारार्थिनः कोमलशष्पश्यामलायां भुवि प्रवर्तन्ते परिहरन्ति चाश्यानतृणकण्टकाकीर्णां, नास्तिकस्तु पशोरपि पशुरिष्टानिष्टसाधनमविद्वान्, न खल्वस्मिन्ननुमानगोचरप्रवृत्तिनिवृत्तिगोचरे प्रत्यक्षं प्रभवति, न च परप्रत्यायनाय शब्दं प्रयुञ्जीत, शाब्दस्यार्थस्याप्रत्यक्षत्वात्, तदेवं माभून्नास्तिकस्य जन्मान्तरमस्मिन्नेव जन्मन्युपस्थितो मूकत्वप्रवृत्तिनिवृत्तिविरहरूपो**

---

१ 'अभिप्रायभेदाद् वचनभेदलिङ्गाद्' इति पाठे तु—'वचनभेदो लिङ्गं यस्य तादृशादभिप्रायभेदरूपलिङ्गादज्ञानाद्यनुमानमित्यर्थो बोध्यः। २ शारीरकीयतृतीयाध्यायीयतृतीयपादे—'५४' इति सूत्रे भामत्याम्, न्यायदर्शनीयतुरीयसूत्रे तात्पर्यटीकायां चेत्यर्थः। ३ भामतीग्रन्थमुद्धरति—"प्रतिपन्नम्" इति, प्रतिपन्नः=सम्प्रतिपत्तिमान् पुमान्, तं विहायाप्रतिपत्तिविपरीतप्रतिपत्तिसंशीतिमन्तः पुमांसः प्रेक्षावद्भिर्व्युत्पाद्यन्त इत्यर्थः। ४ इत्थंभावः=अप्रतिपत्तिमत्त्वादिरूपः। ५ न केवलं चार्वाकस्य परप्रबोधाय प्रवृत्त्यभाव एव दोषोऽपि तु लोकयात्राविरोधोपीत्याह—"अपि च" इति, शष्पं=बालतृणम्, आश्यानम्=ईषत् शुष्कम्, इष्टानिष्टसाधनमविद्वान् पशोरपि पशुरित्यर्थः। अनुमानगोचरश्चासौ प्रवृत्तिगोचरश्चेष्टानिष्टसाधनत्वं, तत्र प्रत्यक्षं नहि प्रभवतीति योजना, 'अयमोदनः, क्षुन्निवर्तक, ओदनत्वात्प्राग्भुक्तौदनवद्' इत्याद्यनुमानाद्धीष्टसाधनत्वावगमः, ततः प्रवृत्तिरनिष्टसाधनत्वानुमानाच्च निवृत्तिरिति, शब्दप्रामाण्यानिष्टेर्मूकत्वमापन्नं, प्रवृत्तिनिवृत्तिविरहश्चानुमानप्रामाण्यविरहादापन्न इति विभागः

तत्र प्रत्यक्षकार्यत्वाद् अनुमान प्रत्यक्षानन्तरं निरूपणीयं, तत्रापि सामान्यलक्षणपूर्वकत्वाद्विशेषलक्षणस्यानुमानसामान्यं तावल्लक्षयति—"त-ल्लिङ्गलिङ्गिपूर्वकम्" इति, लिङ्गं=व्याप्यं, लिङ्गि=व्यापकम्,

---

महान्नरक) इति। (अनुमानमप्रमाणमिति वाक्यप्रयोगोऽज्ञ विप्रतिपन्न सन्दिग्ध वा पुरुष प्रत्यर्थवान्, न च परपुरुषवर्तिनो देहधर्मा अपि सन्देहाज्ञानवि-पर्यासा गौरत्वादिवत्प्रत्यक्षा वीक्ष्यन्ते, न च तद्वचनात्प्रतीयन्ते वचनस्यापि प्रत्यक्षादन्यस्याप्रामाण्योपगमात, पुरुषविशेषमनधिकृत्य तु वचनमनथक प्रयु-ञ्जानो नाय लौकिको न परीक्षक इत्युन्मत्तवदनवधेयवचन स्यात्) इति।

किञ्च—अनुमानमप्रमाणमितिवदन् वादी 'कस्य हेतोरप्रमाणम्' इत्येव पर्यनुयोगे यदि प्रमितिकरणत्वाभावाद्' इति हेतुपद प्रयुञ्जीत तदा गले पतितमनुमानमिति चार्वाकत्वमेवात्मन स जह्यात्,

तथा चाहु—(दृष्टप्रामाण्याप्रामाण्यविज्ञानव्यक्तिसाधर्म्येण हि कासां चिद्व्य-क्तीना प्रामाण्यमप्रामाण्य वा विदधीत, दृष्टसाधर्म्य चानुमानमेवेति कथ तेनैव तस्याप्रामाण्यम्) इति,

यदि च हेतुपदप्रयोगमन्तरेवानुमानमप्रमाणमिति ब्रूयात् तर्हि न प्रतिज्ञामात्रेणार्थसिद्धिरिति कथ स्वपक्षसंरक्षणमिति।

किञ्च अनुमाननिष्ठाप्रामाण्यस्य रूपादिमत्त्वाभावेन चक्षुराद्यगोचरत्वात्कथमनुमानाप्रामाण्य मवधारितवान् भवान् इति स प्रष्टव्य,

यथाहुर्मिश्रा—(नाप्रत्यक्ष प्रमाणमिति ब्रुवाण प्रष्टव्यो जायते कुतो भवाननु-मानादीनामप्रामाण्यमवधारितवान् इति, प्रत्यक्ष हि लिङ्गादिरूपमात्रग्राहि नाप्रामाण्यमेषा विनिश्चेतुमर्हति, न हि धूमज्ञानमिवैषामिन्द्रियार्थसन्निकर्षाद प्रामाण्यज्ञानमुदेतुमर्हति, किन्तु देशकालावस्थारूपभेदेन व्यभिचारोत्प्रेक्षया, नचैतावान् प्रत्यक्षस्य व्यापार. सभवति) इति।

एवमनुमानप्रामाण्य प्रसाध्यानुमानलक्षणपरमार्यावयवमवतारयति—"तत्र" इति, तत्र= युक्तियुक्तत्वेनानुमानस्यावश्याभ्युपेयत्वे सतीत्यर्थ।

प्रत्यक्षानन्तरमनुमान निरूपणीयमित्यन्वय, तत्र हेतुमाह—"प्रत्यक्षकार्यत्वाद्" इति। तत्रापि=लक्षणद्वारा निरूपणीये सत्यपीत्यर्थ,

'लिङ्गलिङ्गिपूर्वकम्' इत्यनुमानलक्षण विवृणोति।

'लिङ्ग व्याप्यम्' इति। लिङ्ग्यते=गम्यते—ज्ञायतेऽप्रत्यक्षोऽर्थोऽनेनेति लिङ्गम्,

---

१ टीकाग्रन्थोऽयम्। २ सस्कारवदिति शेष। ३ हेतुपदप्रयोगस्थल एवानुमानत्वव्य वहारस्य सर्वसमतत्वाद्। ४ तात्पर्यटीकाया मिश्रा। ५ भामत्यामिति शेष।

**शङ्कितसमारोपितोपाधिनिराकरणेन वस्तुस्वभावप्रतिबद्धं व्याप्यम्,**

---

'यदनुमेयेन सबद्ध प्रसिद्धं च तदन्विते,
तदभावे च नास्त्येव तल्लिङ्गमनुमापकम्

इति प्रशस्तपादलक्षित पक्षवृत्तित्वसपक्षसत्त्वविपक्षव्यावृत्तत्वादिधर्मोपपन्न धूमादिवस्त्विति यावद्, एतदेव च पक्षवृत्तित्वादिधर्मैर्व्याप्यमानत्वाद् व्याप्यमित्यभिधीयते।

यस्य च वह्न्यादेस्तद् धूमादि लिङ्गमस्ति तद् वह्न्यादि लिङ्गि व्यापकमिति चोच्यत इत्यर्थ।

'स्वभावप्रतिबन्धे सत्यर्थोऽर्थं गमयेत् तदप्रतिबद्धस्य तदव्यभिचारनियमाभावाद्' इति न्यायबिन्दावभिहितत्वेन 'स्वभावप्रतिबन्धो व्याप्ति' इति भादन्ता, 'अनौपाधिक सबन्धो व्याप्ति' इति जरन्तस्तार्किका, तदेतादृग्व्याप्त्याश्रय च व्याप्यमित्यभिप्रेत्य परिष्कृत्य व्याप्य निर्वक्ति—'शङ्कित' इत्यादिना।

शङ्कित =शङ्काविषयत्वेन सन्दिग्ध, समारोपित =सम्यगारोपितत्वेन निश्चित,

**तथाचाहु —तत्त्वचिन्तामणिकारा —(स चाय द्विविध, निश्चित. सन्दिग्धश्च, साध्यव्यापकत्वेन साधनाव्यापकत्वेन च निश्चितो व्यभिचारनिश्चयाधायकत्वेन निश्चितोपाधि; यथा वह्निमत्त्वेन धूमवत्त्वे साध्य आर्द्रेन्धनप्रभववह्निमत्त्व, यत्र साधनाव्यापकत्वसन्देह. साध्यव्यापकत्वसशयो वा, तदुभयसन्देहो वा, तत्र हेतुव्यभिचारसशायकत्वेन सन्दिग्धोपाधि, यथा मित्रातनयत्वेन श्यामत्वे साध्ये शाकाद्याहारपरिणतिजत्वम्) इति।**

एवंविधौ यावुपाधी तयोर्निराकरणेनेत्यर्थ, एतेनानौपाधिक सबन्धो व्याप्तिरित्यश सङ्गृहीत,

स्वभावप्रतिबन्धो व्याप्तिरित्यशं सगृहीतुमाह—'वस्तुस्वभाव' इति वस्तुन =धूमादेर्य स्वभाव = वह्न्यादिना विनाभावाभाव (अविनाभावनियम) तेन प्रतिबद्धम्=आक्रान्तमित्यर्थ, यद् वस्तु यद्वस्त्वन्तराविनाभूत तद् वस्तु तद्व्याप्यमिति यावद्।

'स श्यामो मित्रातनयत्वात् दृष्टश्यामत्वविशिष्टमित्रातनयवद् इत्यत्र' मित्रातनयत्वमपि श्यामत्वप्रतिबद्धत्वेन व्याप्य स्यात् तन्माभूदत उक्त 'शङ्कितोपाधिनिराकरणेन' इति, 'अय धूमवान् वह्नेर्महानसवद्' इत्यत्र वह्नेरपि महानसादौ धूमाविनाभूतत्त्वदर्शनाद् वह्नेरपि धूमव्याप्यत्व स्यादत उक्त (समारोपितोपाधिनिराकरणेन) इति।

स्वाभाविक सबन्धोऽभिप्रेतो नौपाधिक इत्यर्थ,

---

१ अनुमेय =प्रतिपिपादयिषितधर्मविशिष्टोधर्मी पर्वतादि पक्ष, तेन सबद्ध, तस्मिन् वर्तमानम् इति यावत्, पक्षवृत्तीत्यर्थ, तदन्विते=साध्यधर्मान्विते सपक्षे महानसादौ प्रसिद्ध, सपक्षे सत्तावदित्यर्थ, तदभावे=साध्यधर्मस्याभावे विपक्षे जलह्रदादौ नास्ति=विपक्षावृत्तीत्यर्थ। २ लिङ्ग यस्यास्ति तल्लिङ्गि इत्यभिप्रेत्य लिङ्गिपदार्थमाह—'यस्य च' इति। ३ स्वभावेन प्रतिबन्ध स्वभावप्रतिबन्ध, साधन कृतेति समास, स्वभावप्रतिबद्धत्व प्रतिबद्धस्वभावत्वमित्यर्थ, इति न्यायबिन्दुटीकाया धर्मोत्तराचार्य। ४ भादन्ता =बौद्धा। ५ शाकाद्याहारपरिणतिजत्वम्= शाकादिसयोगघटितशाकपाकजश्यामसामग्रीमत्त्वमित्यर्थ इत्युपाधिविभागरहस्ये मथुरानाथ। ६ यद् वस्तु=धूमादि वस्तु, यद्वस्त्वन्तर=वह्न्यादिकम।

येन च प्रतिबद्धं तद् व्यापकम्,

लिङ्गलिङ्गिग्रहणेन च विषयवाचिना विषयिणं प्रत्ययमुपलक्षयति,

धूमादिर्व्याप्यो वह्न्यादिर्व्यापक इति यः प्रत्ययस्तत्पूर्वकम्,

लिङ्गिग्रहण चावर्तनीय, तेन लिङ्गमस्यास्तीति पक्षधर्मताज्ञानमपि दर्शित भवति,

तद् व्याप्यव्यापकभावपक्षधर्मताज्ञानपूर्वकमनुमानमित्यनुमानसामान्य लक्षितम्।

अनुमानविशेषांस्तन्त्रान्तरे लक्षितान् स्मारयति—'त्रिविधमनुमानमाख्यात तद्' इति,

तत्=सामान्यतो लक्षितमनुमान विशेषतस्त्रिविधं,=पूर्ववत्—शेषवत्—सामान्यतो दृष्टं च,

---

तथाचाहुर्मिश्रा—( धूमादीना वह्न्यादिसबन्ध स्वाभाविको नतु वह्न्यादीनां धूमादिभि, ते हि विनापि धूमादिभिरुपलभ्यन्ते, यदा त्वार्द्रेन्धनादिसबन्धमनुभवन्ति तदा धूमादिभि· सह सबध्यन्ते तस्माद् वह्न्यादीनामार्द्रेन्धनाद्युपाधिकृत सबन्धो न स्वाभाविकस्ततो न नियत, स्वाभाविकस्तु धूमादीनां वह्न्यादिसबन्ध उपाधेरनुपलभ्यमानत्वाद् ) इति।

व्याप्य निरूप्य व्यापक निराह[1] 'येन च' इति, येन च वह्न्यादिना प्रतिबद्धम्=अविनाभूत धूमादिक तद् वह्न्यादिक व्यापकमित्यर्थ।

ननु लिङ्गादिज्ञानस्यैवानुमितिहेतुत्वेन कथ लिङ्गादिवस्तुनोऽत्रोल्लेख इत्याशङ्क्य ज्ञानज्ञेययोरविनाभावदर्शनेन ज्ञेयनिर्देशो ज्ञानोपलक्षणार्थ इत्याह 'लिङ्गलिङ्गिग्रहणेन च' इति।

गृह्यते=ज्ञायतेऽनेनेति ग्रहण=शब्द, विषयवाचिना=वस्तुबोधकेन लिङ्गलिङ्गिशब्देन, विषयिण प्रत्यय=लिङ्गलिङ्गिरूपविषयोद्दीपक ज्ञानम् उपलक्षयति=उपलक्षणविधया बोधयति कारिकाकार इति शेष।

एव सति यत्फलित तदाह 'धूमादिर्व्याप्य' इत्यादिना।

ननु हेतो पक्षवृत्तित्वज्ञानमन्तरा कथमनुमित्युदय इत्याशङ्क्य तल्लाभोपायमाह 'लिङ्गिग्रहण च' इति।

निगलितार्थमाह 'तद्' इति यस्मादेव तत्=तस्माद् व्याप्यव्यापकभावज्ञानपुरस्सर यद् व्याप्यस्य पक्षवृत्तित्वज्ञान तत्पूर्वक यद् ज्ञानं तद् अनुमानमित्यनुमानसामान्यं लक्षितमित्यर्थ।

त्रिविधमित्यार्यांशमवतारयति, 'अनुमानविशेषान्' इति।

तन्त्रान्तरे=अक्षपाददर्शने, 'अथ तत्पूर्वक[2] त्रिविधमनुमान पूर्ववत् शेषवत् सामान्यतो दृष्ट च' इति सूत्रे इत्यर्थ।

---

१ निराह=निर्वक्ति—लक्षयतीत्यर्थ। २ तत्पूर्वकम्=प्रत्यक्षादिपूर्वकम।

तत्र प्रथमं तावद् द्विविधं वीतमवीतं च। अन्वयमुखेन प्रवर्तमानं विधायकं वीतम्, व्यतिरेकमुखेन प्रवर्तमानं निषेधकमवीतम्।

तत्रावीतं शेषवत्, शिष्यते=परिशिष्यत इति शेषः, स एव विषयतया,

'तन्त्रान्तरे लक्षितानभिमतान्' इति क्वाचित्क पाठ। अवान्तरविशेषमाह-"तत्र" इति, तत्र=पूर्ववदादिभेदेनाऽनुमानस्य त्रैविध्ये सत्यपि प्रथम=पूर्वम्—आदौ तावदनुमान द्विविध, ततो द्विविधमध्य एक द्विविधम् एक चैकविधमित्येव त्रिविध बोध्यमित्यर्थ, तदेव दर्शयति "वीतमवीत" च इत्यादिना।

वीत=वि–विशेषेण इतं=ज्ञात—प्रसिद्धम्—अन्वयव्याप्तिहेतुकमित्यर्थ।

तदेवाह-'अन्वयमुखेन' इति, तत्सत्त्वे तत्सत्त्वमित्याकारान्वयसहचार एव मुख=मुखमिव प्रधानभूत, तेन—साध्याधिकरणनिरूपितवृत्तित्वरूपान्वयव्याप्तिप्राधान्येन योयो धूमवान् स स वह्निमान् इत्येव प्रवर्तमान सद् यद विधायक=वह्नेः साधकं तद् वीतमित्यर्थ।

अन्वयेन प्रवर्तमान वीतमित्युक्ते केवलान्वयिन एव वीतत्व स्यान्नत्वन्वयव्यतिरेकिणोऽतोभिहित 'मुखेन इति, अन्वयव्याप्तिप्राधान्यमेव केवल वीतत्वे प्रयोजक नतु तत्र व्यतिरेकव्याप्त्यसत्त्वमप्यभिप्रेतमित्यर्थ, निषेधविधायकेऽवीतेऽतिप्रसङ्गभङ्गायाह-'अन्वयमुखेनप्रवर्तमानम्' इति।

न वीतमवीत—व्यतिरेकव्याप्तिहेतुकमित्यर्थ., तदेवाह-'व्यतिरेकमुखेन' इति, तदसत्त्वे तदसत्त्वमित्याकारो व्यतिरेकसहचार एव मुख=प्रारम्भ तेन साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिप्राधान्येन यत्रेतरभेदाभावस्तत्र गन्धाभाव इत्येव प्रवर्तमान गन्धाभावरूपव्यापकस्य पृथिव्या निवृत्त्या तद्व्याप्यक्षितिभेदस्य निषेधक यत् पृथिवीतरभेदवती गन्धवत्त्वादित्याद्यनुमान तदवीतमित्यर्थ।

वर्णा न क्षणिकास्त एवेति प्रत्यभिज्ञायमानत्वादिति क्षणिकत्वनिषेधके वीतेऽतिव्याप्तिव्युदासायाभिहित 'व्यतिरेकमुखेन' इति, निषेधकमपीदमनुमान न व्यतिरेकमुखेन प्रवर्तमानमिति नातिप्रसङ्ग।

वीताऽवीतभेदेनानुमानद्वैविध्यमभिधाय तदवान्तरभेदमादाय तत् त्रैविध्यमभिधातु सूचीकटाहन्यायेनादाववीत निरूपयति "तत्रावीत शेषवद्" इति, तत्र=तयोर्वीतावीतयोर्मध्ये यदवीत तत् शेषवत्सज्ञकमेकमेवेत्यर्थ।

शेषवद् इत्यस्य शेषविषयम् इत्यर्थं दर्शयितु व्युत्पत्तिमाह-"शिष्यत" इति।

कर्मव्युत्पन्नात् शेषशब्दान्मतुपि शेषवदिति साधनीयमित्यर्थ।

सबन्धेऽस्तिविवक्षाया मतुपो विधानाज्ज्ञाने च पदार्थाना विषयतासबन्धेनैव भाननियमाद् 'विषयतया' इत्यर्थादायातमिति बोध्यम्।

१ प्रथमशब्दो न पूर्वाभिहितत्रिविधमध्ये प्रथमीभूतपूर्ववत्परोऽपि तु 'आदौ' इत्यर्थक, तदेवाह—'आदौ' इति। २ एक=वीत पूर्ववत् सामान्यतोदृष्टभेदेन द्विविधमित्यर्थ। ३ वीतमवीत चेति पूर्वाभिहितरीत्या वीतस्य पूर्व निरूपणार्हत्वेपि स्वल्पायासनिर्वर्तनीयसूचीनिर्माणानन्तरमधिकायाससाध्यकटाहनिर्माणवत्पूर्वमवीत निरूपयतीत्यर्थ। ४ "भूमनिन्दाप्रशसासु नित्ययोगेऽतिशायने। सबन्धेऽस्तिविवक्षाया भवन्ति मतुबादय" इतिकात्यायनमुनिवचनादित्यर्थ।

यस्यास्त्यनुमानज्ञानस्य तच्छेषवद्।

यदाहुः—'प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः परिशेष'इति।

'शेषवन्नामपरिशेष' इति वात्स्यायनवचनाच्छेषवत एव नामान्तर परिशेष इति परिशेषलक्षणपर न्यायभाष्यमुपन्यस्यति—

"यदाहु प्रसक्तप्रतिषेधे" इति।

(शब्दः समवायिकारणजन्यो गुणत्वाद् रूपवद् इत्यत्र सामान्येन समवायिकारणेऽवगते शब्दाश्रयत्वेन प्रसक्ताना पृथिव्यादीना दिक्कालमनसा च तदाश्रयत्वप्रतिषेधे अन्यत्र=गुणादावप्रसङ्गाच् छिष्यमाणे नभसि यः प्रत्ययः=शब्दोऽष्टद्रव्यव्यतिरिक्तद्रव्याश्रितोऽष्टद्रव्यागुणत्वे सति गुणत्वाद् रूपवदिति यत्केवलव्यतिरेक्यनुमान स परिशेष इत्यर्थः) इति न्यायमकरन्दव्याख्यायां चित्सुखाचार्याः।

अय भाव —शब्दो गुणो मानुषचाक्षुषप्रत्यक्षाविषयत्वे सति बहिरिन्द्रियग्राह्यजातिमत्त्वात्स्पर्शवद् इत्येव शब्दस्य गुणत्वे स्थिते गुणत्वेन च समवायिकारणजन्यत्वादनिर्धारितयत्किञ्चिद्द्रव्याश्रितत्वे च साधिते तदाश्रयीभूत द्रव्य किमित्यपेक्षाया सम्भावनामात्रेण तदाश्रयत्वेन प्रसक्ताना पृथिव्याद्यष्टद्रव्याणा प्रतिषेधे=(प्रत्यक्षत्वेसत्यकारणगुणपूर्वकत्वाद्, अयावद्द्रव्यभावित्वाद्, आश्रयादन्यत्रोपलब्धेश्च न स्पर्शवद्विशेषगुण। बाह्येन्द्रियप्रत्यक्षत्वाद्, आत्मान्तरग्राह्यत्वाद्, आत्मन्यसमवायाद्, अहङ्कारेण विभक्तग्रहणाच्च नात्मगुण। श्रोत्रग्राह्यत्वाद् वैशेषिकगुणभावाच्च न दिक्कालमनसाम्) इति प्रशस्तपादोक्तरीत्या तदाश्रयत्वनिरासे, अन्यत्र=द्रव्यातिरिक्ते गुणादौ, अप्रसङ्गाद्=(गुणादीना पञ्चानामपि निर्गुणत्वनिष्क्रियत्वे) इत्येव शब्द गुणाश्रयत्वप्राप्त्यभावात्, परिशिष्यमाणे नभोद्रव्ये यः सम्प्रत्यय=शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रितोऽष्टद्रव्यानाश्रितत्वे सति गुणत्वाद् यन्नैव न तदेव यथा गन्धादि इति केवलव्यतिरेकिप्रयोगप्रयोज्य यदनुमान स परिशेष इति।

१ घटादौ व्यभिचारवारणाय "चाक्षुषेत्यादि" शब्दस्य सर्पेण चक्षुषा ग्रहणादाह 'मानुषेति' आत्मनि व्यभिचारापहाराय "बहिरिन्द्रियेति" रसत्वादौ व्यभिचारवारणाय "जातिमत्त्वादिति"। २ स्पर्शवता=पृथिव्यप्तेजोवायूना विशेषगुण शब्दो नेत्यर्थे हेतूनाह—"प्रत्यक्षत्वे" इत्यादिना। पटरूपादयो हि स्वाश्रयस्य यत्समवायिकारण तद्गुणपूर्वका दृष्टा अय तु न तथाऽतो न रूपादिवत्पृथिव्यादिगुण शब्द, पार्थिवपरमाणुरूपादयोपि स्पर्शवद्विशेषगुणा अकारणगुणपूर्वकाश्च परमाणोरकार्यत्वात्, तद्व्यवच्छेदाय "प्रत्यक्षत्वे सति" इति। ३ यथा रूपादयो यावत्स्वाश्रयद्रव्य वर्तन्ते न तथा शब्दो यावद्द्रव्य वर्तते विद्यमानेपि स्वाश्रये शङ्खादौ विनाशदर्शनादतो न स्पर्शवद्विशेषगुण, यथा रूपादय स्वाश्रयादन्यत्र नोपलभ्यन्ते नैव शब्द, तस्य स्वाश्रयाच्छङ्खादेरन्यत्र कर्णशष्कुलीदेशे समुपलभ्यमानत्वादतोपि न स्पर्शवद्विशेषगुण इत्यर्थ। ४ अनेकप्रतिपत्तृसाधारणत्वादित्यर्थ, या खलु वीणावेण्वादिजा शब्दव्यक्ति सन्ततिद्वारेणैकेन पुरुषेण प्रतीयते सैवापरेणापि तद्देशवर्तिना प्रतीयते नत्वेवमात्मगुण सुखादिरित्यात्मगुणवैधर्म्यान्नात्मगुण इत्यर्थ। ५ रूपादिवद् आन्तरत्वेनानवगमादात्मनि समवेतत्वाभावान्नात्मगुण इत्यर्थ। ६ य खल्वात्मगुण सोऽहङ्कारेण समानाधिकरणो गृह्यते सुख्यहमित्यादि नत्वेव शब्दस्य ग्रहणमतो नात्मगुण इत्यर्थ। ७ ये किल दिक्कालमनसा गुणा सयोगादयस्ते श्रोत्रग्राह्या न सन्त्यय तु तद्ग्राह्योतो न तद्गुण इत्यर्थ। ८ शब्दो न दिगादिगुणो विशेषगुणत्वात्सुखादिवदिति भाव।

अस्य चावीतस्य व्यतिरेकिण उदाहरणमग्रेऽभिधास्यते,

वीतं च द्वेधा-पूर्ववत् सामान्यतो दृष्टं च, तत्रैकं दृष्टस्वलक्षणसामान्यविषयं यत् तत्पूर्ववत्, पूर्वं=प्रसिद्धं-दृष्टस्वलक्षणसामान्यमिति यावत्,

---

यत्तु न्यायभाष्ये ( सदनित्यमित्येवमादिना द्रव्यगुणकर्मणामविशेषेण सामान्यविशेषसमवायेभ्यो निर्भक्तस्य शब्दस्य तस्मिन् द्रव्यगुणकर्मसंशये न द्रव्यमेकद्रव्यत्वाद्, न कर्म शब्दान्तरहेतुत्वाद् यस्तु शिष्यते सोयम् इति शब्दस्य गुणत्वप्रतिपत्ति ) इत्येव शब्दस्य गुणत्वावधारण परिशेषोदाहरण प्रदर्शित, तत्तु ( इदन्तु परिशेषोदाहरण नादरणीयं व्यतिरेकिणो हि नामान्तरमिदं परिशेष इति, एष पुनरन्वयव्यतिरेकी द्रव्यकर्मान्यत्वे सति सदाद्यभेदस्य सपक्षे रूपादौ सत्त्वाद् विपक्षे सामान्यादावभावात्, तस्मादात्मतन्त्रतासाधनमिच्छादीना परिशेषोदाहरण द्रष्टव्यम् ) इत्येव तात्पर्यटीकायाम्मिश्रैर्दूषितत्वादनादेयमेव ।

अत्रेद बोध्य—इच्छादीना गुणत्वेन पारतन्त्र्यप्रतिपत्ति सामान्यतोदृष्टानुमानेन साधनीया, आत्मतन्त्रताप्रतिपत्तिस्तु परिशेषानुमानादिति ।

ननु साङ्ख्यकृतान्त इच्छादीनामात्मधर्मत्वाभावेनावीतोदाहरणासम्भवात् तदतिरिक्त प्रकृतकृतान्तोपयुक्तमवीतोदाहरण किमित्यपेक्षायामाह—"अस्य चावीतस्य" इति । अग्रे='असदकरणाद्' इत्यार्याव्याख्याया 'न पटस्तन्तुभ्यो भिद्यत' इत्यारभ्य (तान्येतान्यभेदसाधनान्यवीतानि ) इत्यन्तेन ग्रन्थेनाभिधास्यते मयेत्यर्थ ।

एवमवीत निरूप्य सम्प्रति वीत विभजते-"वीत च द्वेधा" इति ।

आद्य वीत स्पष्टयितुमाह—"तत्रैकम्" इति, तत्र=तयोर्वीतयोर्मध्ये एक यद् दृष्टस्वलक्षणसामान्यविषय तत्पूर्ववन्नामक वीतमित्यर्थ ।

पूर्ववदितिशब्देन कथमेतादृगर्थोदिगतिरित्याकाङ्क्षाया व्युत्पत्त्या तल्लाभमाह-"पूर्वं प्रसिद्धम्" इत्यादिना, प्रसिद्धपदार्थमाह-"दृष्टस्वलक्षणसामान्यम्" इति ।

---

१ "सदनित्य द्रव्यवत् कार्य कारण सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेष ," इति काणादसूत्रात् सत्तावत्त्वे सत्यनित्यत्वादि द्रव्यगुणकर्मणा साधर्म्य, तथा च सत्ताऽनित्यत्वादीना शब्दे वर्तमानत्वात्सामान्यविशेषसमवायेभ्योऽतिरिक्त शब्दो द्रव्य वा भवेद् गुणो वा स्यात्कर्म वेति भवति सशय इत्यर्थ । २ द्विविधमेव हि द्रव्यम्—अद्रव्यमनेकद्रव्य च अद्रव्य परमाण्वादि, अनेकद्रव्य च घटादि शब्दस्त्वेकद्रव्य तस्मान्न द्रव्य रूपादिवदित्यर्थ इति मिश्रा । ३ शब्दान्तरहेतुत्वादित्यस्य समानजातीयारम्भकत्वादित्यर्थ इत्युद्योतकराचार्य । ४ एष =शब्दस्य गुणत्वसाधक ( शब्दो गुणो द्रव्यकर्मान्यत्वे सति सत्तादिमत्त्वाद् रूपवद् ) अय प्रयोगोऽन्वयव्यतिरेकीत्यर्थ , तदेवाह—"द्रव्यकर्मान्यत्वे सति" इत्यादिना । ५ उद्योतकराचार्योक्त विशेषमाह—"इच्छादीनाम्" इत्यादिना, इच्छादयो गुणा अनित्यत्वे सत्यस्मदाद्यचाक्षुषप्रत्यक्षत्वाद् गन्धवत्, ते च क्वचिदाश्रिता गुणत्वाद् रूपादिवदिति सामान्यतो दृष्टानुमानद्वाराऽनिर्धारिते कस्मिंश्चिदाश्रये सिद्धे न तावत्पृथिव्यादिचतुष्टयगुणा प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वाद्, नाप्याकाशविशेषगुणा बाह्येन्द्रियाप्रत्यक्षत्वात्, नापि दिक्कालमनसा गुणा विशेषगुणत्वादित्येव प्रसक्तप्रतिषेधे सति इच्छादयोऽष्टद्रव्यातिरिक्तद्रव्याश्रिता इत्याद्युक्तरीत्याऽऽत्मतन्त्रतासिद्धिरित्यर्थ । ६ एतादृग्=दृष्टस्वलक्षणसामान्यविषयमित्येतादृगित्यर्थ ।

तद्स्य विषयत्वेनास्त्यनुमानज्ञानस्येति पूर्ववद्,

यथा धूमाद् वह्नित्वसामान्यविशेषः पर्वतेऽनुमीयते, तस्य च वह्नित्वसामान्यस्य स्वलक्षण वह्निविशेषो दृष्टो रसवत्याम् ।

अपर च वीत सामान्यतो दृष्टम्—अदृष्टस्वलक्षणसामान्यविषय,

---

स्वलक्षणशब्द स्वम्=असाधारण लक्षण=रूपमिति व्युत्पत्त्या तत्तदवयवसन्निवेशविशेषालिङ्गिततत्तद्व्यक्तिपर., तदुक्त न्यायबिन्दौ ( यस्यार्थस्य सन्निधानाऽसन्निधानाभ्या ज्ञानप्रतिभासभेदस्तत्स्वलक्षणम् ) इति ।

'अर्थशब्दो विषयपर्याय , यस्य ज्ञानविषयस्य सन्निधान=निकटदेशावस्थानम् , असन्निधान=दूरदेशावस्थान, तस्मात्सन्निधानादसन्निधानाच्च ज्ञानप्रतिभासस्य=ग्राह्याकारस्य भेद =स्फुटत्वाऽस्फुटत्वाभ्या, यो हि ज्ञानस्य विषय सन्निहित सन् स्फुटमाभास ज्ञानस्य करोति असन्निहितस्तु योग्यदेशावस्थित एवास्फुट करोति तत्स्वलक्षण, सर्वाण्येव हि वस्तूनि दूरादस्फुटानि दृश्यन्ते समीपे त्वस्फुटानि तान्येव स्वलक्षणानि, इत्येतदर्थ इति धर्मोत्तराचार्य ।

अय भाव —वस्तुनो हि द्विविध रूपम्—असाधारणं साधारण च, तत्र यदसाधारण पृथुबुध्नोदराादिक तत्स्वलक्षण, यच्च सकलव्यक्तिसाधारण घटत्वादिक तत्सामान्यलक्षणमिति, तथा च दृष्ट=पूर्वमधिगत, स्वलक्षणम्=असाधारण रूप यस्य सामान्यस्य तद् दृष्टस्वलक्षण सामान्य, तद्विषयक यज् ज्ञान तत्पूर्ववदनुमानमित्यत्र फलितम् ।

एतदेवोदाहरणेन विशदयति—"यथा" इत्यादिना ।

'वह्नित्वसामान्यविशेष" इति, ननु 'सामान्यावधारणप्रधाना वृत्तिरनुमानम्' इति योगभाष्याद् वह्नित्वरूपसामान्यस्यैवानुमेयत्वावगन कथमभिहित वह्नित्वसामान्यविशेषोऽनुमीयत इति व्यक्तिरूपविशेषस्यानुमेयत्वमिति चेद्, नात्र वह्नित्वसामान्यस्य विशेषोऽनुमेय इति विवक्षित किन्तर्हि वह्नित्वरूप सामान्यविशेषोऽनुमीयत इत्यभिप्रेतमिति गृहाण—

कथ वह्नित्वस्य सामान्यविशेषोभयात्मकत्वमिति चेद्, अत्राहु —पदार्थधर्मसङ्ग्रहकारा[१]—( सामान्य द्विविध परमपर चानुवृत्तिप्रत्ययकारण, तत्र पर सत्ता महाविषयत्वात्, सा चानुवृत्तेरेव हेतुत्वात्सामान्यमेव, द्रव्यत्वाद्यपरमेल्पविषयत्वात्, तच्च व्यावृत्तेरपि हेतुत्वात्सामान्य सद्विशेषाख्यामपि लभते ) इति ।

अयमर्थ —अत्यन्तव्यावृत्ताना तत्त्वाना यत कारणादन्योन्य वरूपानुगम प्रतीयते तत्सामान्यमित्यभिधीयते, तच्च द्विविधम् , एक द्रव्यादित्रिकवृत्तिसत्ताख्य परम्, एतच्च स्वाश्रयस्यानुवृत्तेरेव हेतुत्वात्सामान्यमित्येव कीर्त्यते, अपर च द्रव्यत्वपृथिवीत्वगोत्वादिरूपमपर सामान्यम्, एतच्च स्वाश्रयस्य विजातीयेभ्योऽपि व्यावृत्तेरपि हेतुत्वाद् विशेष इत्यपि व्यवह्रियते, तथा च सिद्ध वह्नित्वादे सामान्यविशेषरूपत्वमिति ।

लक्ष्ये लक्षण समन्वयति—"तस्य च" इति, रसवत्याम्=पाकशालायामित्यर्थ ।

द्वितीय वीत निरूपयति "अपर च" इति, सामान्यतो दृष्टमित्यस्यार्थमाह—"अदृष्टस्वलक्षणसामान्यविषयम्" इति, न दृष्ट स्वलक्षण यस्य सामान्यस्य तत्तथा तद्विषयमित्यर्थ ।

---

१ काणादसूत्रभाष्यकारा प्रशस्तपादा इत्यर्थ ।

यथेन्द्रियविषयमनुमानम्,

अत्र हि रूपादिविज्ञानानां क्रियात्वेन करणवत्त्वमनुमीयते, यद्यपि करणत्वसामान्यस्य छिदादौ वास्यादि स्वलक्षणमुपलब्धं तथापि यज्जातीयस्य रूपादिज्ञाने करणत्वमनुमीयते तज्जातीयस्य करणस्य न दृष्टं स्वलक्षणं प्रत्यक्षेण, इन्द्रियजातीयं हि तत्करणं, न चेन्द्रियत्वसामान्यस्य स्वलक्षणमिन्द्रियविशेषः प्रत्यक्षगोचरोऽर्वाक्दृशां, यथा वह्नित्वसामान्यस्य स्वलक्षणं वह्निः,

सोयं पूर्ववतः सामान्यतो दृष्टात्सत्यपि वीतत्वेन तुल्यत्वे विशेषः,

---

उदाहरति "यथेन्द्रियविषयकम्" इति, रूपादिज्ञानानि करणवन्ति क्रियात्वात् छिदिक्रियावदितीन्द्रियसाधकमनुमानं सामान्यतो दृष्टमित्यर्थः। तदेवाह—"अत्र" इति,—अत्र= इन्द्रियसाधकेऽनुमान इत्यर्थः।

ननु छेदनादिक्रियाया कुठारादिस्वलक्षणस्य करणस्य दृष्टत्वात्कथमदृष्टस्वलक्षणसामान्यविषयमेतदनुमानमित्याशङ्कते—"यद्यपि" इति, छिदादौ=छेदनादिक्रियाया करणत्वसामान्यस्य स्वलक्षणं वास्यादि=कुठारादि उपलब्धमित्यन्वयः, तथाचेदमपि दृष्टस्वलक्षणसामान्यविषयत्वान्न पूर्ववतोऽतिरिक्तमिति भावः।

सामान्यतो दृष्टत्वेपि विशेषेणाऽदृष्टत्वान्नेदं पूर्ववदित्याशयेन परिहरति "तथापि" इति, रूपादिज्ञाने यज्जातीयस्य=यादृग्जातिमतः करणत्वमनुमेयं तादृग्जातिमतः करणस्य स्वरूपं प्रत्यक्षेण न दृष्टमित्यर्थः।

किंजातीयं तत्करणं यन्नाध्यक्षगोचरं इत्याकाङ्क्षायामाह—"इन्द्रियजातीयम्" इति, इन्द्रियत्वजातिमद् हि तत्करणं=रूपज्ञाने करणं भवत्विन्द्रियं करणं तेन किमायातमित्यत्राह—"न चेन्द्रियत्वसामान्यस्य" इति।

अर्वाग्दृशाम्=अयोगिनामिन्द्रियविशेषो न प्रत्यक्षगोचरो निरवयवत्वेनातीन्द्रियत्वात्, तथाचायातमिन्द्रियस्यादृष्टत्वमिति।

तत्र व्यतिरेकिदृष्टान्तमाह—"यथा" इति, यथा वह्नित्वसामान्यस्य स्वलक्षणं वह्निरध्यक्षगोचरो न तथेन्द्रियत्वसामान्यस्य स्वलक्षणमिन्द्रियमध्यक्षगोचरं, तत्सिद्धं पूर्ववतोऽनुमानादस्यातिरिक्तत्वमिति तत्त्वम्।

तदेवाह "सोयम्" इति, वीतत्वेनोभयोः समानत्वेपि सोयम्=अनन्तराभिहित एव दृष्टस्वलक्षणसामान्यविषयत्वरूपः पूर्ववतः=पूर्ववदनुमानस्य सामान्यतो दृष्टानुमानाद् विशेषः= प्रभेद इत्यर्थः।

ननु सामान्यतो दृष्टमितिव्याख्येयवाक्यस्थदृष्टपदस्याऽदृष्टस्वलक्षणसामान्यविषयमिति व्याख्यानवाक्येनाऽदृष्टार्थपरत्ववर्णनमयुक्तं, दृष्टपदस्य तद्विरुद्धाऽदृष्टार्थकत्वासम्भवादित्याश-

---

१ जात्यन्तात्छे प्रत्यये सति यथा ब्राह्मणजातीय इत्यादौ ब्राह्मणत्वजात्याधारभूत इत्यर्थो दृष्टस्तथाऽत्रापीति ध्येयम्।

**अत्र च दृष्ट=दर्शनं, सामान्यत इति सामान्यस्य, सार्वविभक्तिकस्तसिः, अदृष्टस्वलक्षणस्य सामान्यविशेषस्य दर्शनं सामान्यतो दृष्टमनुमानमित्यर्थः ॥**

---

छाया न दृष्टपदस्याऽदृष्टार्थत्वमभिहितमपि तु 'सामान्यत' इत्यस्य षष्ठ्यन्तप्रकृतिकतसन्तत्वेन 'सामान्यस्य' इत्यर्थपरत्व 'दृष्टम्' इत्यस्य च भावक्तान्तत्वेन 'दर्शनम्' इत्यर्थपरत्वञ्चादाय 'सामान्यस्य दर्शनम्' इत्यर्थलाभाद् आयातमर्थाद् विशेषस्यादृष्टत्वमित्यार्थिकार्थमभिप्रेत्य तथाभिधानान्न दोष इति समाधान मनसि निधायाह—"अत्र" इति, अत्र=सामान्यतो दृष्टमिति वाक्ये ।

तथाच विशेषदर्शनस्थले पूर्ववदनुमान सामान्यदर्शनस्थले च सामान्यतो दृष्टानुमानमिति दृष्टत्वाऽदृष्टत्वप्रयुक्तस्तयोर्भेद इति फलितम् ।

न्यायवार्तिककारास्तु—(पूर्ववदिति वतिप्रत्यय एष, यथा पूर्वं प्रत्यक्षेण दृष्टोऽर्थस्तथानुमानेनापि तमेवार्थं प्रतिपद्यत इति पूर्ववद् दृष्टो भवति, यदितरधर्मदर्शनाद् धर्मिणोऽधिगति साधन तत्सामान्यतो दृष्ट यथेच्छादिभिरात्मा) इत्यादिग्रन्थेन 'यत्र साध्यतावच्छेदकहेतुतावच्छेदकरूपपुरस्कारेण व्याप्तिग्रहस्तत्पूर्ववदनुमान, यत्र च साध्यतावच्छेदकहेतुतावच्छेदकरूपव्यापकधर्मपुरस्कारेण व्याप्तिग्रहस्तत्सामान्यतो दृष्टमनुमानम्' इत्येव तयोर्भेदमाहु ।

(पूर्ववद् इति—यत्र कारणेन कार्यमनुमीयते यथा मेघोन्नत्या भविष्यति वृष्टिरिति, शेषवत् तद् यत्र कार्येण कारणमनुमीयते—पूर्वोदकविपरीतमुदक नद्या पूर्णत्व शीघ्रत्व च दृष्ट्वा स्रोतसोऽनुमीयते भूता वृष्टिरिति, सामान्यतो दृष्ट=व्रज्यापूर्वकमन्यत्र दृष्टस्यान्यत्र दर्शनमिति, तथाचादित्यस्य तस्मादस्त्यप्रत्यक्षाप्यादित्यस्य व्रज्येति) इति न्यायभाष्योक्त व्याख्यान्तरमप्यत्रानुसन्धेयम् ।

वृत्तिकृतस्तु–पूर्ववदित्यन्वय्यनुमान, शेषवदिति व्यतिरेक्यनुमान, सामान्यतो दृष्टमित्यन्वयव्यतिरेक्यनुमानम्, इत्येवमपि व्याचक्षते ।

---

१ यत् स्वलक्षण तदेव विशेषशब्देनात्र व्यवह्रियत इति ज्ञेयम् । २ पूर्वेण तुल्य वर्तत इति पूर्ववत्, क्रियातुल्यतायाच वति, यथा पूर्वमन्यतरदर्शनेन सहाऽन्यतरदर्शन दृष्टान्तधर्मिणि, एवसाध्यधर्मिण्यन्यतरसाधनधर्मदर्शनेनान्यतरसाध्यधर्मस्यानुमितिदर्शनमि'ति भवति क्रियातुल्यतेत्यर्थ । ३ यथा पर्वते पक्षे धूमेन हेतुना वह्नौ साध्ये धूमत्ववह्नित्वरूपपुरस्कारेण महानसादौ व्याप्तिग्रह । ४ यथेच्छादिभिरात्मनि साध्य इच्छात्वाऽऽत्मत्वव्यापकाभ्या गुणत्वद्रव्यत्वाभ्या व्याप्तिग्रह । ५ तयो=पूर्ववत्सामान्यतो दृष्टयोरित्यर्थ । ६ वृष्टिमन्त एते मेघा गम्भीरध्वानवत्त्वे सति बहुबलाकावत्वे सति अचिरप्रभवत्वे सति उन्नतिमत्त्वाद् वृष्टिमन्मेघवद् इति न्यायवार्तिकारीयो न्यायाकारोऽत्र बोध्य । ७ उपरि वृष्टिमद्देशसबन्धिनी नदी स्रोत शीघ्रत्वे सति पूर्णफलकाष्ठादिवहनशीलत्वे सति पूर्णत्वात् पूर्णवृष्टिमन्नदीवद्, इत्येवमत्र प्रयोगोऽवसेय । ८ देशान्तरप्राप्तिमानादित्य, द्रव्यत्वे सति क्षयवृद्धिप्रत्ययाविषयत्वे च प्राङ्मुखोपलभ्यत्वे च तदभिमुखदेशसबन्धादनुत्पन्नपादविहारस्य परिवृत्य तत्प्रत्ययविषयत्वान्मण्यादिवदिति चात्र न्यायाकार । ९ विश्वनाथन्यायपञ्चानना इत्यर्थ ।

सर्वं चैतदस्माभिर्न्यायवार्तिकतात्पर्यटीकाया व्युत्पादितमिति नेहोक्तं विस्तरभयाद्।

प्रयोजकवृद्धशब्दश्रवणसमनन्तरं प्रयोज्यवृद्धप्रवृत्तिहेतुज्ञानानुमानपूर्वकत्वाच्छब्दार्थसंबन्धग्रहणस्य, स्वार्थसबन्धज्ञानसहकारिणश्च शब्दस्यार्थप्रत्यायकत्वादनुमानपूर्वकत्वमित्यनुमानानन्तरं शब्द लक्षयति "आप्तश्रुतिराप्तवचनं तु" इति,

---

अत्र न्यायदर्शनीयतुरीयसूत्रीयन्यायभाष्यमुपादाय प्रवृत्ते न्यायवार्तिके तत्तात्पर्यटीकाया च बहुविस्तरो वागाडम्बर प्रदर्शित इति तत्रैव कणेहत्यालोचनीयमित्याशयेनाह—"सर्वं चैतदस्माभिर्न्यायवार्तिकतात्पर्यटीकायाम्" इति।

उद्देशक्रमप्राप्त शब्दप्रमाण निरूपयितुमुपक्रमते "प्रयोजकवृद्ध" इति, अनुमानानन्तर शब्द लक्षयतीति सबन्ध।

'उभय महाविषय शब्द प्रत्यक्ष च कथमिति, प्रत्यक्षेणापि सामान्यविशेषतद्वता ग्रहण शब्देनापि, इत्युद्योतकराचार्योक्ते प्रत्यक्षशब्दयो सारूप्येणानुमानस्य च सामान्यविषयत्वेन वैरूप्यात्प्रत्यक्षानन्तरमेवागमो निर्वक्तव्यो नानुमानानन्तरमित्याशङ्कायामाह—"अनुमानपूर्वकत्वमिति" इति, इति=यत शब्दस्यानुमानपूर्वकत्वमतस्तदनन्तरमेवागमनिरूपण युक्तमित्यर्थ।

आगमस्य प्रत्यक्षसारूप्येऽप्यनुमाननिरूपणमन्तराऽऽगमस्याऽशक्यनिरूपणत्वात्तस्य[1]ानुमानपूर्वकत्वात् तयो[2]रुपजीव्योपजीवकभावसङ्गतिरिति भाव।

कथ तस्यानुमानपूर्वकत्वमित्यत्राह—"स्वार्थसबन्धज्ञानसहकारिणश्च शब्दस्याऽर्थप्रत्यायकत्वाद्" इति, स्व=शब्दश्चार्थश्च स्वार्थौ—तयोर्य सबन्ध=शक्तिवृत्त्यादिप्रयुक्तो वाच्यवाचकत्वादिरूप ससर्गविशेष, तज्ज्ञानसहकृतस्यैव शब्दस्यार्थज्ञानजनकत्वादित्यर्थ।

अस्तु शक्तिधीसहकृतस्य शब्दस्यार्थप्रत्यायकत्वमेतावता कथमुपजीव्योपजीवकभाव इत्यत्राह—"शब्दार्थसबन्धग्रहणस्य प्रयोजकवृद्धशब्दश्रवणसमनन्तरं प्रयोज्यवृद्धप्रवृत्तिहेतुज्ञानानुमानपूर्वकत्वाद्" इति।

प्रयोजकवृद्ध=प्रेरक आचार्यादि, प्रयोज्य=प्रेर्य शिष्यादि, प्रयोज्यवृद्धस्य या प्रवृत्तिस्तस्यैव हेतुर्यस्य प्रवर्तकज्ञानस्य तस्य यदनुमान तत्पूर्वकत्वाच्छब्दार्थसबन्धज्ञानस्येत्यर्थ[3]।

अयं भाव—प्रयोजकप्रयुक्तगामानयेत्यादिवाक्यश्रवणसमनन्तरं प्रयोज्यवृद्धस्य गवानयनमुपलभ्य पार्श्वस्थो व्युत्पित्सुर्बाल इत्थमाकलयति—इयमस्य प्रवृत्तिर्ज्ञानपूर्विका स्वतन्त्रप्रवृत्तित्वान्मदीयप्रवृत्तिवद् इति, तदनु चायं प्रवर्तकप्रत्यय आचार्योच्चरितवाक्यजन्यस्तदनन्तरभावित्वादित्येवं स्वात्मदृष्टान्तेन प्रवर्तकप्रत्यये शब्दपूर्वकत्व चानुमाय शब्दानन्तरभाविनि तस्मिन् शब्दस्य शक्तिं गृह्णाति तदनु च गा बधान समिधं चानय इत्यादिप्रयोगान्तरेषु आनयनगोशब्दयोरुद्धारे तदर्थयोरप्युद्धारात् प्रक्षेपे च प्रक्षेपदर्शनादन्वयव्यतिरेकाभ्या गवादिविशेषेषु पदविशेषस्य सामर्थ्यमवगच्छतीति स्फुट सबन्धज्ञानस्यानुमानपूर्वकत्वमिति।

---

१ तस्य=शब्दस्य। २ तयो=अनुमानागमयो। ३ प्रवृत्तिलिङ्गकप्रवर्तकज्ञानानुमानपूर्वकत्वादित्यर्थ।

**तत्राप्तवचनमिति लक्ष्यनिर्देशः, परिशिष्टं लक्षणम् ।**
**आप्ता=प्राप्ता–युक्तेति यावद्, आप्ता चासौ श्रुतिश्चेत्याप्तश्रुतिः ।**
**श्रुतिः– वाक्यजनितं वाक्यार्थज्ञानम् ।**

---

लक्ष्यलक्षणभावेन मूलवाक्यस्य विभागमाह–"तत्र" इति, तत्र='आप्तश्रुतिराप्तवचन तु' इति मूलवाक्ये, परिशिष्टम्=आप्तश्रुतिरित्याकारम् । युक्ता=तथ्यार्थप्रत्यायनसमर्थत्वेन समीचीना, दोषहीनेति वा ।

ननु साङ्ख्यनये ज्ञानरूपाया बुद्धिवृत्तेरेव प्रमाणत्वव्यवहारात्कथ श्रुतेरागमप्रमाणत्वमित्याशङ्कायामाह–"श्रुति -वाक्यजनित वाक्यार्थज्ञानम्" इति ।

'श्रुति स्त्री वेद आम्नाय' इत्यभिधानाद् वेदवाक्ये शक्तमपि श्रुतिपदमत्र लक्षणया सामान्यवाक्यपर तन्नीत्वा पुनरुपचाराद् वाक्यजन्यबोधपरत्वेन व्याख्येयमित्यर्थ ।

यद्वा यथा द्विरेफ शब्दायत इत्यादौ तार्किकै पूर्व द्विरेफपदेन रेफद्वयघटित भ्रमरपद लक्ष्यते पुनश्च भ्रमरपदेन स्वशक्यसम्बन्धी जन्तुविशेषरूपोऽर्थो लक्ष्यते तथाऽत्रापि पूर्व श्रुतिपदेन वाक्य लक्ष्यते पुनश्च वाक्येन तज्जन्य ज्ञान लक्ष्यत इत्येव लक्षितलक्षणासमाश्रयणेनाय ग्रन्थो नेय ।

यद्यपि (श्रुतो हि भगवान् बहुश श्रुतिस्मृतीतिहासपुराणेष्विदानी मन्तव्यो भवति ) इति कुसुमाञ्जलिग्रन्थसाङ्गत्याय व्याख्यातृभि (स्मृत्यन्यप्रमाणशब्दत्वेन शक्तमपि श्रुतिपद 'श्रोतव्य श्रुतिवाक्येभ्य' इत्यत्र प्रमाणशब्दत्वेन श्रुतिस्मृती बोधयन्न लाक्षणिकम्) इत्येव लक्षणामन्तरैव श्रुतिपदस्य श्रुतिस्मृत्यादिवाक्यपरत्वमुपवर्णित तथाप्यत्र तथाऽऽस्थातु न युक्तम्, आप्तेतिविशेषणस्य तथा सत्यसङ्गतत्वाऽऽपातात्, शाक्यादिवाक्याना हि प्रमाणत्ववारणायाऽऽप्तपदमुपात्तमित्युत्तरत्र व्यक्त, श्रुतिशब्देन श्रुतिस्मृत्यादिवाक्याना ग्रहणे तु शाक्यादिवाक्याना ग्रहणाप्रसक्त्या तद्वारकमाप्तेति पद पुनरुक्त सदसङ्गत स्याद् ।

यद्वा श्रूयत इति श्रुति =श्रोत्रग्राह्य वाक्यमिति व्युत्पत्त्या श्रुतिपदस्य वाक्यमिति वाच्योर्थ तज्जन्य ज्ञान च लाक्षणिकोऽर्थ इति पन्था अत्राऽऽश्रयणीय, सर्वथापि श्रुतिपदमत्र वाक्यजन्यज्ञानपरमिति ग्राह्यमिति तत्त्वम्।

एवमाप्तवचनमित्यत्राप्युपचारेणाप्तवचनजन्य ज्ञान ग्राह्यम् ।

---

१ पटैकदेश दग्धे पटो दग्ध इति व्यवहारात्समुदाये प्रवृत्ताना शब्दानामेकदेशेपि प्रवृत्तिदर्शनात्समग्रवेदे शक्तमपि श्रुतिपद वेदैकदेशतद्वाक्येपि प्रवृत्त भवतीत्याशयेन 'वेदवाक्ये शक्तम्' इत्यभिहितम् । २ लक्षणया=अनभिप्रेतभागत्यागरूपया जहदजहल्लक्षणयेत्यर्थ । ३ कुतश्चिन्निमित्तादतत्त्वेपि तत्त्वव्यवहार उपचार, यथा प्राणसाधनत्वेप्यन्नस्योपचाराद् 'अन्न प्राणा' इति प्रयोगस्तथात्रापि वाक्यजन्ये ज्ञाने वाक्यमित्युपचारेण प्रयोग, स्पष्ट चैतत् "सहचरण" इति ( २।२।५९ ) सूत्रे न्यायभाष्ये । ४ श्रुतिवाक्येनात्मन श्रोतव्यत्वोक्ते कथ श्रुतिस्मृतीतिहासपुराणादिवाक्येनात्मन श्रुतत्वमभिहितमित्येव कुसुमाञ्जलिग्रन्थस्यासङ्गतत्व आपादिते सति श्रुतिपद शब्दप्रमाणवाचकमित्येव तत्साङ्गत्यायेत्यर्थ । ५ श्रुतिशब्दस्य शाब्दबोधपरत्वे कथमाप्तवचनमित्यनेन सामानाधिकरण्य नहि वचनमेव ज्ञानमित्याशङ्कायामाह–"अत्राप्युपचारेण" इति ।

**तच्च स्वतःप्रमाणम्—अपौरुषेयवेदवाक्यजनितत्वेन सकलदोषाऽऽशङ्का-विनिर्मुक्तेर्युक्तं भवति ।**

नचैव पौनरुक्त्य शङ्क्य, लक्ष्यलक्षणभावस्थले पौनरुक्त्याऽनङ्गीकाराद् अन्यथा प्रमाकरण प्रमाणमित्यादौ का गति स्यात्, "शब्दार्थयो पुनर्वचन पुनरुक्तमन्यत्रानुवादाद्" इति न्याय-सूत्रेऽनुवादपदमुपलक्षणमिति तत्त्वम् । वाक्यजनित ज्ञानमित्येतावतैव सिद्धेऽलमन्तर्गडुना 'वाक्यार्थ' इत्यनेन, न हि वाक्यार्थज्ञानभिन्नमन्यत्किंचिद् वाक्यजन्य ज्ञान यद् वाक्यार्थे-तिविशेषणेन व्यावर्त्येत इति तु न शङ्कनीय, वाक्येनाऽर्थ्यते=स्वकीयतात्पर्यविषयतया प्रार्थ्यते योऽभिधेयस्तज्ज्ञानस्यैव वाक्यजन्यस्याऽऽगमप्रमाणत्व न यथाश्रुतवाक्यजन्यज्ञानस्येत्यर्थबोध नार्थं तस्यार्थवत्वाद्, युक्त चैतद अन्यथा 'गाव सत्रमासत' 'यजमान प्रस्तर' इत्याद्यर्थ-वादवाक्यजन्यज्ञानस्य प्रामाण्य न स्याद, यथाश्रुतस्य तस्य प्रत्यक्षादिविरुद्धत्वेनासम्भवग्रस्त-त्वाद्, तात्पर्यविषयीभूतस्य वाक्यजन्यार्थज्ञानस्यागमप्रमाणत्वाभ्युपगमे त्वर्थवादवाक्यानामपि स्वबोध्यतात्पर्यविषयीभूतप्राशस्त्यादिरूपार्थज्ञानजनकत्वसम्भवादुपपन्नमर्थवादवाक्यजन्यस्यापि ज्ञानस्यागमप्रमाणत्वमिति ।

आगमप्रमाणस्यावान्तरविशेषप्रदर्शनपुरस्सरं तस्य युक्तत्वमाख्याति—"तच्च स्वत प्रमाणम्" इत्यादिना, तच्च=वाक्यार्थज्ञान च यत् स्वत प्रमाण तद् युक्त भवति इत्यग्रिमेणान्वय, वाक्य-जन्य ज्ञान द्विविधम्—एतदन्यप्रमाणनिरपेक्षस्वार्थबोधनसमर्थमाम्नायवाक्यजन्य स्वत प्रमाणम्, अपर चाम्नायरूपमूलप्रमाणसापेक्षस्मृत्यादिवाक्यजन्य परत.प्रमाण, तत्र स्वत. प्रमाणस्य युक्तत्वे हेतुमाह—"सकलदोषाऽऽशङ्काविनिर्मुक्ते" इति ।

सकला ये भ्रमप्रमादविप्रलिप्साकरणापाटवादय पुन्दोषा—तेषां याऽऽशङ्का=सम्भावना मात्रेण प्रसक्ति—तस्या विनिर्मुक्ते=विरहाद्, अयुक्तत्वापादकपुन्दोषराहित्यादित्यर्थ ।

कुत पुन्दोषशङ्काकलङ्कविमोक इत्यपेक्षाया हेतुमाह "अपौरुषेयवेदवाक्यजनितत्वेन" इति कापिलनये जैमिनीयनये चेश्वरानङ्गीकाराद् वेदस्य पुरुषविशेषेश्वरप्रणीतत्वाभावेनापौ रुषेयत्व ज्ञेयम् ।

तथाच सूत्र—"न पौरुषेयत्व तत्कर्तु पुरुषस्याभावाद्" इति ।

एव च प्रणेतृपुरुषासत्त्वेन निराश्रयाणा दोषाणा वेदेऽभाव इति "अपौरुषेय" इत्यनेन बोधितम्, तदुक्त भट्टपादै—'यद्वा वक्तुरभावेन न स्युर्दोषा निराश्रया' ६३ इति, यथा च वेदस्य

१ प्रमाणपदस्यापि प्रमाकरणत्वरूपार्थबोधकत्वात्स्पष्ट पौनरुक्त्यम् । २ अ० ५ आ० २ सू १४। ३ अन्तर्=मध्ये गडुना=ग्रीवाप्रदेशजातमांसपिण्डेनेव निरर्थकेनेत्यर्थ । ४ तस्य= अर्थवादवाक्यजन्यज्ञानस्य । ५ तस्य=आगमप्रमाणस्य । ६ भ्रमश्च उच्चारणीयवाक्यार्थगोचरो भ्रम, प्रमादोऽनवधानता—साच वाक्यार्थज्ञानस्वरूपयोग्यस्य वक्तुरुच्चारणीयवाक्यार्थनिश्चयव्यति-रेक, शुकीवाक्यार्थनिश्चयव्यतिरेकवारणाय षष्ठ्यन्तनिवेश, अन्यथाप्रतीतस्यार्थस्यान्यथाप्रतिपि-पादयिषा प्रतारणा सैव विप्रलिप्सा, इच्छाविषयीभूतपूर्ववर्णानुकूलकण्ठताल्वाद्यभिघातानुत्पादका-लीनापरवर्णानुकूलकण्ठताल्वाद्यभिघात करणापाटव, करण-कण्ठताल्वाद्यभिघात तस्यापाटवम्-असामर्थ्यम्, इच्छाविषयीभूतवर्णाननुकूलत्वमिति यावद् इत्यर्थ इति तर्कप्रकाशे श्रीकण्ठ । ७ सा० अ० ५। सू० ४६ । ८ चोदनासूत्रे कुमारिलस्वामिभिरित्यर्थ ।

स्वत प्रमाणत्वमपौरुषेयत्व च तथा स्पष्टम्—'यदा स्वतःप्रमाणत्व तदाऽन्यन्नैव गृह्यते, निवर्तते हि मिथ्यात्वं दोषाज्ञानादयत्नत ' ६२ इत्यादिना चोदनासूत्रे श्लोकवार्तिके ।

ननु "एतस्य महतो भूतस्य नि श्वसितमेतद् यद् ऋग्वेद" इत्यादिश्रुत्या महतो भूतस्य=महत्तत्त्वाख्यादिविकारस्य पुरुषस्य नि श्वासभूता वेदा इति प्रतीते कथमपौरुषेयत्वमिति चेद्—

अत्राहु –"यस्मिन्नदृष्टेपि कृतबुद्धिरुपजायते तत्पौरुषेयम्" इति सूत्रे साङ्ख्यप्रवचनभाष्यकारा –( दृष्ट इवादृष्टेपि यस्मिन् वस्तुनि कृतबुद्धि =बुद्धिपूर्वकत्वबुद्धिर्जायते तदेव पौरुषेयमिति व्यवह्रियते इत्यर्थ , एतदुक्त भवति, न पुरुषोच्चरिततामात्रेण पौरुषेयत्व श्वासप्रश्वासयो सुषुप्तिकालीनयो पौरुषेयव्यवहाराभावात् किन्तु बुद्धिपूर्वकत्वेन, वेदास्तु नि श्वासवदेवादृष्टवशादबुद्धिपूर्वका एव स्वयम्भुव सकाशात्स्वय भवन्तीत्यतो न पौरुषेया इति । जैमिनीयास्तु सम्प्रदायाविच्छेदे सत्यस्मर्यमाणकर्तृकत्वमपौरुषेयत्व वेदानामित्येवमातिष्ठन्ते ।

वेदान्तिनस्तु–सत्यपीश्वरविवर्तत्वे वेदाना प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वाभावरूप, पूर्वकल्पीयानुपूर्वीसमानानुपूर्वीघटितत्वरूप वा अपौरुषेयत्व वेदानामित्येव प्रतिजानते ।

एवमवान्तरविशेषेपि पुरुषाऽस्वातन्त्र्यमात्रमपौरुषेयत्व सर्वत्र समानमिति ध्येयम् ।

तथाचाहुर्मिश्रा –( यथाऽत्र सर्गे नियतानुपूर्व्यं वेदाध्ययनमभ्युदयनि श्रेयसहेतुरन्यथा तदेव वाग्वज्रतयाऽनर्थहेतुरेव सर्गान्तरेष्वपीति तदनुरोधात्सर्वज्ञोपि सर्वशक्तिरपि पूर्वपूर्वसर्गानुसारेण वेदान् विरचयन्न स्वतन्त्र , पुरुषास्वातन्त्र्यमात्रं चापौरुषेयत्व रोचयन्ते जैमिनीया अपि, तच्चास्माकमपि समानमन्यत्राभिनिवेशाद् ) इति ।

तथाचापौरुषेयाम्नायवाक्यजन्यत्वेन निरस्तसमस्तदोषाशङ्कतया युक्तमाम्नायवाक्यजन्यस्य ज्ञानस्य युक्तत्वमित्यत्र फलितम् ।

ये तु 'तच्च स्वत. प्रमाणम्' इति पृथग् वाक्यमिति मत्वा 'तद् वाक्यार्थज्ञान स्वग्राहकसामग्रीग्राह्यप्रामाण्यविशिष्ट नतु तार्किकादिवत्परत प्रमाणम्' इत्येव प्रामाण्यवादविचारप्रकारमत्र सयोजयन्ति ते (युक्त भवति) इत्यत्र किं कर्तृपद यद् भवति इति क्रियया सबध्येत इति प्रष्टव्या ।

किं च नहि वाक्यार्थज्ञानमेव स्वत प्रमाणमपि तु, 'स्वत सर्वप्रमाणाना प्रामाण्यमिति गम्यताम्' इत्युक्तप्रकारेण ज्ञानमात्र, तथा च केवलस्यागमज्ञानस्य तत्कथन न शोभनम्, अपि च 'प्रमाणत्वाऽप्रमाणत्वे स्वतः साङ्ख्या समाश्रिता' इत्यभियुक्तोक्ते प्रमाणत्वस्येवाप्रमाणत्वस्यापि स्वतस्त्वादत्र तदेकमात्रत्वाभिधानमसमीचीनम् ।

किञ्चैव सति बुद्धादिवाक्यजन्य ज्ञानमपि स्वत प्रमाणमापद्येत, तथा च मदभिहितैव व्याख्या ज्यायसीति ध्येयम् ।

---

१ कापिलैरीश्वरानङ्गीकारात् तन्मतेन महतो भूतस्यार्थान्तराख्यानम्, पुरुषोपाधित्वेन महानपि पुरुष उच्यते । २ अ० ५। सू० ५० । ३ अज्ञातकर्तृके जीर्णकूपारामादौ व्यभिचारवारणाय–'सम्प्रदायाविच्छेदे सति' इति, भारतादिषु व्यभिचारपरिहाराय–( अस्मर्यमाणकर्तृकत्वम् ) इति । ४ यथा वृत्तमर्थजात पूर्वमुपलभ्य पुनर्विरचिता भारतादयो, यथा वा पूर्वकल्पीयानुपूर्वीविभिन्नानुपूर्वीघटिता भारतादयस्तथा न वेदा इत्यर्थ । ५ शास्त्रयोनित्वाधिकरणे भामतीकार इत्यर्थ ६ ये=स्थलविशेषे स्वल्पटिप्पणकारा श्रीभारतीनामानस्तारानाथादयश्च। ७ तच्चेत्यनेन सामान्य वाक्यजन्यज्ञानस्यात्र परामृष्टत्वाद् ।

**एवं वेदमूलस्मृतीतिहासपुराणवाक्यजनितमपि ज्ञानं युक्तं भवति । आदिविदुषश्च कपिलस्य कल्पादौ कल्पान्तराधीतश्रुतिस्मरणसम्भवः ।**

---

एवं स्वतः प्रमाणस्य युक्तत्वमाख्याय परतः प्रमाणस्य युक्तत्वमाह-'एवं वेदमूलस्मृति'इत्यादिना । स्मृत्यादीनां पुरुषबुद्धिप्रभवत्वेन पौरुषेयदोषाक्रान्ततया कथं तेषां युक्तत्वमित्याकाङ्क्षायां 'वेदमूल' इति हेतुगर्भविशेषणम् ।

किञ्चित्स्मृत्यादिकं प्रत्यक्षवेदमूलकं, किञ्चिच्चोच्छिन्नवेदशाखामूलकमित्यर्थः ।

यथा च प्रत्यक्षवेदमूलकत्वेऽपि स्मृतीनां नानुवाददोषग्रस्तत्वं तथा "विरोधे त्वनपेक्षं स्याद् सति ह्यनुमानम्" 'हेतुदर्शनाच्च' इत्यादिसूत्रेषु (शाखान्तरविप्रकीर्णानि हि पुरुषान्तरप्रत्यक्षाण्येव वाक्यानि पुरुषधर्मानुष्ठानक्रमेणापठितानि वेदसमाम्नायविनाशभयात्स्वरूपेणानुपन्यस्यार्थोपनिबन्धनद्वारलभ्यानि विशिष्टध्वनिस्थानीयेन तेनैव परोक्षाण्यपि व्यज्यमानानि पिण्डीकृत्य स्मर्यन्ते ) इत्यादिना तन्त्रवार्तिके स्पष्टम् ।

स्मृतीनामुच्छिन्नशाखामूलकत्वे च 'विवादपदं स्मृतिः स्मृत्यर्थानुभावकवेदमूलाऽक्लृप्तमूलान्तरत्वे सति महाजनपरिगृहीतत्वात्प्रत्यक्षवेदमूलस्मृतिवद्'इति वर्द्धमानोपाध्यायोक्तमनुमानं बोध्यम्

यथा च वेदशाखोच्छेदसम्भवस्तथा "स्मृत्यनुष्ठानानुमितानां शाखानामुच्छेददर्शनाद्" इत्यादिना कुसुमाञ्जलिग्रन्थे विस्तरः ।

एवमितिहासपुराणयोरपि वेदमूलकत्वं ज्ञेयम् ।

स्मृतित्वाविशेषात्कापिलस्मृतेरपि 'अजामेकाम्' 'असङ्गो ह्ययं पुरुषः इत्यादिवेदमूलकत्वेन युक्तत्वमवसेयम् ।

ननु यथा मन्वादिभिर्वेदमधीत्य तदर्थं चावगत्य तत्र तत्र विप्रकीर्णवेदवाक्यान्यर्थतः पिण्डीकृत्योपनिबद्धानि न तथा कपिलमुनिना, "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति" इत्यादिश्रुत्योत्पन्नमात्रस्यैव तस्य ज्ञानसम्पन्नत्वश्रवणाद् वेदाध्ययनमन्तरैव प्रकृतशास्त्रस्य प्रणीतत्वात्, तथा च कथं वेदमूलकत्वं, नच वेदवाक्यवत्स्वतः प्रमाणत्वम्, पुरुषबुद्धिप्रभवस्य तस्य तत्त्वायोगाद् इत्याशङ्कायामाह "आदिविदुषश्च कपिलस्य कल्पान्तराधीतश्रुतिस्मरणसम्भवः" इति ।

---

१ ननु यदि सर्व एव स्मार्तोऽर्थो वेदेऽभिहितस्तर्ह्यनुवादकत्वेनाज्ञातज्ञापकत्वाभावात्कथं स्मृत्यादीनां प्रामाण्यमित्याशङ्कायामाह "यथाच" इति । २ जै० अ० १ पा० ३ सू० ३।४। ३ कस्याचिच्छाखायामष्टकादिकर्मस्वरूपं निरूपितं, कुत्रचिच्च तन्मन्त्राः, क्वचिच्च तद्देवतादिकमित्येव विभिन्नानामर्थानामेकत्रोपसंहरणं मन्वादयः कृतवन्त इत्यर्थः । ४ यदि हि स्वरूपत एव वेदवाक्यान्युद्ध्रियेरंस्तदा वेदीयनियतानुपूर्वीविनाशेन तत्स्वाध्यायस्य प्रत्यवायकरत्वं स्यादित्यालोच्य तत्तदर्थोपनिबन्धेन वेदवाक्यानि सङ्गृहीतानीति भावः । ५ 'विवादपदमिति' एतच्च प्रत्यक्षवेदमूलस्मृत्यंशे लोभादिमूलस्मृत्यंशे च सिद्धसाधनबाधादिवारणार्थं, तादृप्यसिद्धयेऽनुभावकान्त, न्यायादिमूलकस्मृतौ व्यभिचारवारणाय अक्लृप्तेति, असम्भवन्मूलान्तरत्वे सतीत्यर्थः, भ्रम एवात्र मूलमित्यसिद्धिशङ्कानिरासाय 'महाजनपरिगृहीतपदम्' इत्येतट्टीकायाम्मकरन्दकारो रुचिदत्तः । ६ द्वितीयस्तबके तृतीयकारिकायामिति शेषः । यादृशाखा उपलभ्योपनिबद्धा मन्वादिभिर्धर्मास्ता इदानीमुत्सन्ना इति भावः । ७ इतिहासपुराणानां वैदिकोपाख्यानोपबृंहणपरत्वान्न पौनरुक्त्यं, तथाचाहुः 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेद्' इति । ८ तस्य=कापिलवाक्यस्य, तत्त्वायोगात्=स्वतः प्रमाणत्वायोगाद् ।

सुप्तप्रबुद्धस्येव पूर्वेद्युरवगतानामर्थानामपरेद्युः,

तथाचाऽऽवट्यजैगीषव्यसंवादे भगवान् जैगीषव्यो दशमहाकल्पवर्ति जन्मस्मरणमात्मन उवाच—"दशसु महाकल्पेषु विपरिवर्तमानेन मया" इत्यादिना ग्रन्थसन्दर्भेण।

आप्तग्रहणेन चाऽयुक्ताः शाक्यभिक्षुनिर्ग्रन्थकसंसारमोचकादीनामागमाभासाः परिहृता भवन्ति।

---

तथा च कापिलस्मृतेरपि वेदमूलकत्वाद् युक्तमेतस्या अपि युक्तत्वमित्यत्र फलितम्।

महाप्रलयान्तरिते कथं वेदानां स्मरणमित्याशङ्कायाम् (आदिविदुषे) इति हेतुगर्भितं विशेषणम्। अतीतकल्पानुष्ठितप्रकृष्टधर्मबलेन सर्गादावेव विज्ञानसम्पन्नः कपिलः किलाविर्बभूवेति स आदिविद्वानित्यर्थः।

तत्र दृष्टान्तमाह "सुप्तप्रबुद्धस्येव" इति, पूर्वं सुप्तस्य पश्चात्प्रबुद्धस्य इव=यथा पूर्वेद्युः=पूर्वस्मिन्नह्नि समधिगतानामर्थानाम् अपरेद्युः=अपरस्मिन्नह्नि स्मरणं तथेत्यर्थः, यथा चैतत् तथा 'समाननामरूपत्वाद्'[1] इति ब्रह्मसूत्रभाष्यभामत्यादौ स्पष्टम्।

प्रकृष्टयोगजधर्मबलेन कल्पान्तरानुभूतमपि स्मर्यत इत्यत्र प्रसिद्धं संवादमाह—"तथा चावट्य" इति।

केन वचनेनोवाचेत्याकाङ्क्षायां योगभाष्यस्थितं[2] तद्वचनमाह—"दशसु महाकल्पेषु" इति।

(भगवतो[3] जैगीषव्यस्य संस्कारसाक्षात्करणाद् दशसु महासर्गेषु जन्मपरिणामक्रममनुपश्यतो विवेकजं ज्ञानं प्रादुरभवद्, अथ भगवानावट्यस्तनुधरस्तमुवाच दशसु महासर्गेषु भव्यत्वा[4]दनभिभूतबुद्धिसत्त्वेन त्वया नरकतिर्यक्सम्भवं दुःखं सम्पश्यता देवमनुष्येषु पुनः पुनरुत्पद्यमानेन सुखदुःखयोः किमधिकमुपलब्धमिति, भगवन्तमावट्यं जैगीषव्य उवाच—दशसु महासर्गेषु भव्यत्वादनभिभूतबुद्धिसत्त्वेन मया नरकतिर्यग्भवं दुःखं संपश्यता देवमनुष्येषु पुनः पुनरुत्पद्यमानेन यत्किञ्चिदनुभूतं तत्सर्वं दुःखमेव प्रत्यवैमि) इत्यादिग्रन्थसन्दर्भेणेत्यर्थः।

आप्तश्रुतिरित्यत्राप्तपदस्य कृत्यमाह—"आप्तग्रहणेन च" इति, अयुक्ताः परिहृता भवन्तीत्यन्वयः।

के तेऽयुक्ता इत्यत्राह—"शाक्यभिक्षु" इत्यादिना,

पञ्चविंशतिबुद्धप्रभेदानामन्यतमो यः शाक्यसिंहा[5]भिधानः शुद्धोदननृपतनयस्तन्मतानुयायिनो[6] ये सौत्रान्तिकवैभाषिकयोगाचारमाध्यमिकाः "कृत्तिः[7] कमण्डलुर्मौण्ड्यं चीरं पूर्वाह्णभोजनं, सङ्घो रक्ताम्बरत्वं च शिश्रिये बौद्धभिक्षुभिः"—इत्युक्तवृत्तिमन्तो बौद्धसंन्यासिनस्ते शाक्यभिक्षव इत्यभिधीयन्ते।

---

१ अ० १ पा० ३ सू० ३०। २ पा० ३ सू० १८। ३ लिङ्गशरीरमात्रविहार्यपि योगबलेन परीक्षार्थं निर्माणकायं धृत्वेत्यर्थः। ४ भव्यत्वात्=कुशलत्वात्। ५ शाकेषु तत्रापुरुषंशविशेषकेषु साधुः शाक्यो बौद्धधर्मस्थापको बुद्धः सिंह इव शाक्यः शाक्यसिंहः सोऽभिधानं यस्य स तथा तस्य शुद्धोदनो नाम नृपः पिता तस्यायं तनय इत्यर्थः। ६ अस्योदन्तो ललितविस्तरे विस्तर इति तत्रैवाधिकमालोच्यम्। ७ कृत्तिः=मृगचर्मादिकम्, वृत्तिरिति पाठान्तरम्।

अयुक्तत्व चैतेषा विगानाद् विच्छिन्नमूलत्वात्,

निर्ग्रन्थका =ग्रन्थेभ्यो–वेदादिसच्छास्त्रेभ्यो निष्क्रान्ता –त्रयीबाह्या नग्ना जैनविशेषा ।

संसारमोचका –( संसारमोचकादेश्च हिंसा पुण्यत्वसम्मता ) इत्यभिहिता हिंसादिपरायणा 'घटभङ्गे तदन्तर्वर्तिसलिलविलयवद् देहभङ्गे तदन्तर्गतजीवभङ्ग एव मोक्ष' इत्येव ब्रुवाणाश्चार्वाकविशेषा , आदिना देहात्मवादिनश्चार्वाकविशेषा ग्राह्या ।

कथमेतेषामागमाभासानामयुक्तत्वमित्याशङ्क्य "विगानाच्छिन्नमूलत्वात्कैश्चिदेव परिग्रहाद्" इति, श्लोकवार्तिकोक्त हेतुमाह–"अयुक्तत्व चैतेषा विगानाद्" इति, वि=विरुद्ध गान=शब्दन, तस्मादित्यर्थ ।

'कैश्चिदेव परिग्रहण, विप्रलिप्सुना बुद्धेनाऽऽगम प्रणीत इति विरुद्धस्मरण च विगानम्' इति न्यायरत्नाकरकार ।

तथाच "या वेदबाह्या स्मृतयो याश्च काश्च कुदृष्टय , सर्वास्ता निष्फला प्रेत्य तमोनिष्ठा हि तास्स्मृता " इत्यादिविगानदर्शनाद् बौद्धाद्यागमाभासा अयुक्ता इत्यत्र फलितम् ।

सर्वास्तित्वविज्ञानमात्रास्तित्वादिपरस्परविरुद्धवदनमपि विगानमत्र ज्ञेयम् ।

जैमिनीयादिषड्दर्शनेष्वपि समानं विगानमित्याशङ्क्याह–"छिन्नमूलत्वाद्" इति वेदमूलकत्वाभावादित्यर्थ ।

नच सर्वज्ञसुगतप्रणीत आगम एव मूलमिति साम्प्रत, सर्वज्ञस्मरणस्यासम्भवन्मूलत्वात् ।

तथाचाहु कुमारिलस्वामिन –

सर्वज्ञोऽसाविति ह्येव तत्काले तु बुभुत्सुभि । तज्ज्ञानज्ञेयविज्ञानरहितैर्गम्यते कथम् ॥१३४॥
कल्पनीयाश्च सर्वज्ञा भवेयुर्बहवस्तव । य एव स्यादसर्वज्ञ स सर्वज्ञ न बुध्यते ॥ १३५ ॥
सर्वज्ञोऽनवबुद्धश्च येनैव स्यान्न तं प्रति । तद्वाक्यानां प्रमाणत्व मूलाज्ञानेऽन्यवाक्यवत्॥१३६॥
रागादिरहिते चास्मिन् निर्व्यापारे व्यवस्थिते । देशनाऽन्यप्रणीतैव स्यादृते प्रत्यवेक्षणाद् ॥

( छिन्नमूलता विवृणोति–"सर्वज्ञ" इति, तज्ज्ञानज्ञेय यत्सर्वं तद्विषयज्ञानरहितैर्नरै कथ सर्वज्ञो ज्ञायतामतो न सर्वज्ञे कस्यचित्किंचित्प्रमाण सभवतीति निर्मूलैव स्मृतिरिति, यदि त्वन्योऽपि कश्चित्सर्वज्ञ इष्यते बुद्धस्य सर्वज्ञत्वज्ञानार्थं ततस्तेनैव प्रकारेणान्यस्यान्यस्य कल्पनाया बहुसर्वज्ञापत्तिरित्याह–"कल्पनीयाश्च" इति, एवं सर्वज्ञो न केनचित्प्रमातु शक्यते इत्युक्तम्, एव च सम्यङ्मूलत्वाज्ञानात् तदागमस्यापि रथ्यापुरुषवाक्यवन्न प्रामाण्य सिद्ध्यतीत्याह–"सर्वज्ञ" इति, इतश्च तदागमस्याऽप्रामाण्यमित्याह–"रागादि" इति, लाभपूजाख्यातिरागनिमित्त ह्यागमप्रणयन स्वयूथ्यस्पर्द्धानिमित्त वा प्रक्षीणरागादिदोषस्य बुद्धस्य न सम्भवति निर्व्यापारस्थाय नासावर्थप्रतिपादनाय शब्द समुच्चारयितु शक्नोति, कथ, प्रत्यवेक्षणपर्यायस्य

१ जैमिनीये० सू० ५श्लो०५। २ जै० सू०२ श्लो० १३३। ३ विप्रलब्धु प्रतारयितुमिच्छतीति विप्रलिप्सुस्तेन। ४ मानवे अ०१२ श्लो०९५। ५ बाह्यवस्तुजातमध्यक्षगोचर इति सौत्रान्तिक , आन्तरमेव वस्तु सद् बहिस्त्वनुमेयमिति वैभाषिक , सर्वं विज्ञानमात्रमिति योगाचार , शून्यतैव तत्त्वमिति माध्यमिक इत्येव परस्परविगान बोध्यमित्यर्थ । ६ 'ईश्वराऽसिद्धे ''एतेन योग प्रत्युक्त' इत्यादिक विगान तत्र तत्र स्फुटमेवेत्यर्थ । ७ धर्मलक्षणाधिकरणे भट्टपादा इत्यर्थ ।

प्रमाणविरुद्धार्थाभिधानाच्च कैश्चिदेव म्लेच्छादिभिः पुरुषापसदैः पशुप्रायैः परिग्रहाद् बोद्धव्यम्।

तु-शब्देनानुमानाद् व्यवच्छिनत्ति,

वाक्यार्थो हि प्रमेयो न तु तद्धर्मो वाक्यं येन तल्लिङ्गं भवेद्।

---

विकल्पस्याऽसम्भवाद्, अस्येद साधनमनेन च शब्देनेद प्रतिपादयितु शक्यमिति यावन्न विकल्प्यते न तावद् वाक्यप्रणयन सभवति न चाय विकल्पो निर्विकल्पकेन प्रत्यक्षेणाखिल जगद् व्यक्षयतो बुद्धस्यास्ति तस्मादन्येन केनचित्प्रणीतो देशनाधर्मोपदेश इत्यप्रामाण्यमिति) इत्येतदर्थ इति पार्थसारथिमिश्रा।

एव जैनाद्यागमानामपि छिन्नमूलत्वमवसेयम्।

अयुक्तत्वे हेत्वन्तरमाह–"प्रमाणविरुद्धार्थाभिधानाच" इति, प्रत्यभिज्ञाप्रमाणादिविरुद्धार्थक्षणिकत्वाद्यभिधानाच्चेत्यर्थ।

यथाच बौद्धाद्यागमाभासानामयुक्तत्व तथा "समुदाय उभयहेतुकेऽपि तदप्राप्ति[1]." इत्यादि ब्रह्मसूत्रभाष्यादिषु निरीक्ष्यमिति।

महाजनापरिगृहीतत्वाच्चायुक्तत्वमित्याशयेन विगान विवृणोति–'कैश्चिदेव म्लेच्छादिभि' इति।

'गोमासखादको यस्तु विरुद्ध बहु भाषते। सर्वाचारविहीनश्च म्लेच्छ इत्यभिधीयत' इति बौधायननिरुक्तम्लेच्छसमानै, पुरुषेषु अपसदै=नीचै अत एव पशुकल्पैरिति, एवविधै कैश्चिदेव परिग्रहादयुक्तत्व बोद्धव्यमित्यर्थ।

ये पशुदेशीयैर्यैर्यैर्हेतुभिर्बौद्धाद्यागमा परिगृहीतास्ते त उदयनाचार्यै कुसुमाञ्जलौ 'भूयस्तत्र कर्मलाघवमित्यलसा(आलस्यवन्त) इतः पतितानामप्यनुप्रवेश इत्यनन्यगतिका, भक्ष्याद्यनियम इति रागिण, स्वेच्छया परिग्रह इति कुतर्काभ्यासिन' इत्यादिना ग्रन्थसन्दर्भेण निरूपिता इति तत एवाधिकमालोकनीयम्।

ये किल शाक्या 'द्विविधं सम्यग् ज्ञान प्रत्यक्षमनुमानं च' इत्येवं निरूपयन्त आगमप्रमाणमपलपन्ति ये चौलुक्यौ[3] अनुमाननिरूपणानन्तरम् "एतेन शाब्द व्याख्यातम्[4]" इत्येवमनुमानान्तर्भूतमेवागमप्रमाणमिति मन्यन्ते तान् न्यक्कर्तुमाह 'तुशब्देन' इति, 'आप्तवचनन्तु' इति तुशब्देनेत्यर्थ, व्यवच्छिनत्ति=पृथक् करोति, आगमप्रमाणमिति शेष।

कथमनुमानाद् व्यवच्छेद इत्यत्राह–"वाक्यार्थो हि" इति। हिरवधारणे, इद वाक्यं, ससृष्टार्थज्ञापकम्, आप्तवाक्यत्वाद्, वाक्यान्तरवद् इत्येवं परस्परपदार्थससर्गरूपो वाक्यार्थ एव प्रमेय=अनुमानेन मेय, स चासम्भवी वाक्यत्वस्य लिङ्गत्वासम्भवादित्यर्थ।

कथ लिङ्गत्वासम्भव इत्यत्राह–"नतु तद्धर्मो वाक्यम्" इति, यथा प्रमेयवह्नेर्धर्मो धूमो न तथा तद्धर्म=प्रमेयवाक्यार्थस्य धर्मो वाक्य येन तस्य वाक्यार्थस्य लिङ्ग भवेदित्यर्थ।

---

१ अ० २ पा० २ सू० १८। २ द्वितीयस्तबके तृतीयकारिकायामिति शेष। ३ औलूक्या=कणादाचार्या। ४ अ० ९ आ० २ सू० ३ (शाब्द=शब्दकरणक ज्ञानमिदमिति यन्नैयायिकादीनामभिमत तदपि एतेन=लैङ्गिकत्वेन—लिङ्गप्रभवत्वेनैव व्याख्यात, यथा व्याप्तिपक्षधर्मताप्रतिसन्धानापेक्ष लैङ्गिक तथा शाब्दमपीत्यर्थ) इत्युपस्कारकार शङ्करमिश्र।

**नच वाक्यं वाक्यार्थं बोधयत्संबन्धग्रहणमपेक्षते, अभिनवकविविरचितस्य वाक्यस्याऽदृष्टपूर्वस्याऽननुभूतचरवाक्यार्थबोधकत्वादिति ।**

**एवं प्रमाणसामान्यलक्षणेषु तद्विशेषलक्षणेषु च सत्सु यानि प्रमाणान्तराण्युपमानादीनि प्रतिवादिभिरभ्युपेयन्ते तान्युक्तलक्षणेष्वेव प्रमाणेष्वन्तर्भवन्ति, तथाहि—उपमानं तावद् यथा गौस्तथा गवय इति वाक्यं तज्जनिता धीरागम एव ।**

---

एतच्च ( पदानामेव पदार्थस्मरणावान्तरव्यापाराणा वाक्यार्थप्रमा प्रति करणतया प्रमाणत्वात् तेषा चापक्षधर्मतया लिङ्गत्वानुपपत्ते ) इत्यादिना तात्पर्यटीकाया 'कथ च पक्ष धर्मत्व शब्दस्येह निरूप्यते' इत्यादिना श्लोकवार्तिके च व्यक्तम् ।

ननु मेघोन्नत्यादिना वृष्ट्यादेरनुमेयत्वदर्शनात्र धर्मधर्मिणोरेव लिङ्गलिङ्गिभावनियमोऽपि तु ययोरव्यभिचरितसहचाररूपसबन्धग्रहण तयोर्लिङ्गलिङ्गिभावसमयः, तथा च यथा धूमधूमध्वजयोस्तादृक्संबन्धग्रहणाल्लिङ्गलिङ्गिभावस्तथा वाक्यवाक्यार्थयोरपि तादृक्सबन्धग्रहणात्कथन्न तयोस्तद्भाव इत्याशङ्कामपनेतुमाह—"न च वाक्यम्" इति ।

यथा पर्वते वह्निं बोधयन् धूम पूर्वं महानसादौ वह्निना सह स्वसबन्धग्रहणमपेक्षते तथा वाक्य स्वार्थं बोधयत् पूर्वकालिकसबन्धग्रहण नचापेक्षत इत्यर्थ ।

तथाचाहु शालिकनाथमिश्रा (नह्यत्र गम्येनार्थेन गमकशब्दस्य सबन्धनियमोऽवगतो,नापि गम्यस्यार्थस्य किञ्चित्प्रत्येकदेशत्व,नापि च गमकस्येति सामग्रीभेदादनुमानाशङ्कापि नास्ति)इति।

उक्तार्थे हेतुमाह—"अभिनव" इत्यादिना, यस्य वाक्यस्य पूर्वं स्वार्थेन सह संबन्धो न गृहीतस्तथाविधस्याभिनवस्य=नूतनोच्चरितवाक्यस्यात एवाऽदृष्टपूर्वस्य=पूर्वमश्रुतस्य—पूर्वमननुभूतनूतनवाक्यार्थबोधकत्वदर्शनादित्यर्थः ।

शब्दादमुमर्थं प्रत्येमीतिविलक्षणानुभवबलाद् आकाङ्क्षायोग्यतादिसामग्रीवैलक्षण्याच्च नाग मस्यानुमानविधया प्रामाण्यमित्यन्यत्र विस्तर ।

प्रमाणसामान्यतद्विशेषनिर्वचननिरूपणप्रकरणमुपसहरन् 'सर्वप्रमाणसिद्धत्वाद्' इत्यत्राभिहित प्रमाणत्रयेऽन्यप्रमाणान्तर्भाव स्मारयति—"एवम्" इत्यादिना ।

कथमन्तर्भाव इत्यत्राह—"तथाहि" इति, यथान्तर्भावस्तथा प्रदर्शयामीत्यर्थ ।

तत्र ये किलान्वीक्षिकीकुशला 'प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम्' इत्यक्षपादीयसूत्रानुसारिण ( कीदृशो गवय इति नागरिकेण पृष्ट आरण्यक प्रसिद्धेन गवा साधर्म्यादप्रसिद्ध

---

१ धूमध्वज,=वह्नि । २ अव्यभिचरितसहचाररूपसबन्धग्रहणाद् । ३ तयो =वाक्यवाक्यार्थयो , तद्भाव =लिङ्गलिङ्गिभाव । ४ प्रकरणपञ्चिकाया प्रमाणपारायणे पञ्चमे प्रकरण इति शेष ।

५ उक्तार्थे=सबन्धनियममन्तरैव वाक्यस्य स्वार्थबोधकत्वमित्यर्थ इत्यर्थ ।

६ पूर्वं दृष्ट इति दृष्टपूर्व , भूतपूर्ववत्समास , तथा न भवतीत्यदृष्टपूर्व , वाक्यस्येति विशेष्यबलेन दर्शनमत्र श्रावणज्ञानमित्याशयेनाह—"अश्रुतपूर्वस्य" इति, 'अदृष्टपूर्वाननुभूतचर' इति पाठे तु 'अदृष्टपूर्व' इत्यस्य 'अननुभूतचर' इति व्याख्यान ज्ञेय, हेतुहेतुमद्भावेन वा नेयम् । ७ अन्यत्र= 'अननुभूतचरे स्मरणायोगाद्' इत्यादिना कुसुमाञ्जलिग्रन्थे इत्यर्थ । ८ न्या० सू० ६।

**योऽप्ययं गवयशब्दो गोसदृशस्य वाचक इति प्रत्ययः सोऽप्यनुमानमेव, यो हि शब्दो यत्र वृद्धैः प्रयुज्यते सोऽसति वृत्त्यन्तरे तस्य वाचकः**

---

गवय येन वाक्येन बोधयति यथा गौरेव गवय इति तद् वाक्यमुपमानम् ) इत्येवमुपमान वर्णयन्ति तान् प्रत्याह–"उपमान तावद्" इति, यथा गौस्तथा गवय इति यद् वाक्य तज्जन्य यद् वाक्यार्थज्ञान तदागमप्रमाणमेवेत्यर्थ,

तथाचागमान्तर्भावान्नोपमान पृथक् प्रमाणमित्यत्र फलितम् ।

तथाचाहु प्रशस्तपादाचार्या –( आप्तेनाप्रसिद्धगवयस्य गवा गवयप्रतिपादनादुपमानमाप्त वचनमेव ) इति ।

कुमारिलस्वामिनश्च–( पुरुषप्रत्ययेनैव तत्रार्थ सम्प्रतीयते, तदीयवचनत्वेन तस्मादागम एव स इति,

ये च तार्किकयूथ्या ( समाख्यासबन्धप्रतिपत्तिरुपमानार्थ ) इति न्यायवार्तिकमनुसरन्त ( यथा गौस्तथा गवय इति श्रुतातिदेशवचनस्य ग्रामीणस्य कानने गोसमान पिण्डमालोकमानस्य ननमयमसौ गवयपदाभिधेयो य पुरारण्यकेन गोसदृशो गवय इत्युपदिष्ट इति या प्रमितिरुपजायते तत्करणमुपमानम् ) इत्येवमुपमानकृत्य निरूपयन्ति तान् शिथिलयितुमाह–"योप्ययम्" इति,

योऽपि गवयशब्दो गोसदृशस्य वाचक इत्यय प्रत्यय सोऽपि ( गवयपद गोसदृशपिण्डवाचक लक्षणागुणवृत्त्योरसद्भावे सति वृद्धैस्तत्र प्रयुज्यमानत्वाद् गोत्वे प्रयुज्यमानगोपदवद् ) इत्यनु मानप्रयोगसाध्यत्वादनुमानमेवेत्यर्थ,

सञ्ज्ञासञ्ज्ञिसबन्धज्ञानरूपोपमानफलस्यानुमानेनैव निष्पन्नत्वान्न तदर्थं पृथगुपमान मानान्तरमुपेयमिति भाव,

उपमानफलस्यानुमानसाध्यत्व स्पष्टयितुमुक्तानुमानप्रयोगसामग्रीमाह–"यो हि शब्द" इति, एतेन व्याप्तिस्वरूपोपदर्शनमुखेन "असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वाद्" इति हेतुस्वरूपमत्रोपदर्शितमिति ज्ञेयम्,

गङ्गाया घोष प्रतिवसति–सिंहोऽय बलवर्मा इत्यादिषु यथाक्रम लक्षणया गुणवृत्त्या चावाच्येष्वपि तीरादिषु प्रयुज्यमानैर्गङ्गादिपदैर्व्यभिचारपरिहाराय 'असति वृत्त्यन्तर' इति हेतुविशेषण–नच लक्षणया तथाप्रयोग इति विशेषणासिद्धो हेतुरिति शङ्क्यम्, आरण्यकाना तथाप्रयोगाभावप्रसङ्गाल्लक्षणाया अनङ्गीकाराद् ।

अय भाव–गोसादृश्यवाचकस्य सत तदविनाभूते गवयत्वे लक्षणया गवयशब्दस्य प्रयोग इति हि शङ्कितुरभिमत तच्चासम्भवि, अदृष्टगोव्यक्तीनामरण्यैकनिकेतनाना गोसादृश्यानधिगमे गवयपदाप्रयोगप्रसङ्गादिति ।

---

१ साङ्ख्यनये चित्तवृत्तेरेव प्रमाणत्वाद् वाक्यजन्य ज्ञानमेवागमप्रमाण न तु वाक्यमात्रमित्यर्थ । २ अविदितगवयस्य नागरिकस्य पुरुषस्येत्यर्थ । ३ सञ्ज्ञासञ्ज्ञिसबन्धज्ञानमुपमानफलमिति वार्तिकार्थ । ४ गोसदृशे गवयपदप्रयोग इत्यर्थ ।

यथा गोशब्दो गोत्वस्य, प्रयुज्यते चैष गवयशब्दो गोसदृश इति तस्यैव वाचक, इति तज्ज्ञानमनुमानमेव ।

यत्तु गवयस्य चक्षुःसन्निकृष्टस्य गोसादृश्यज्ञानं तत्प्रत्यक्षमेव, अतएव स्मर्यमाणाया गवि गवयसादृश्यज्ञानं प्रत्यक्षम्,

---

एव हेतुमुपदर्श्योदाहरणमाह—"यथा गोशब्दो गोत्वस्य" इति,

उपनयमाह—"प्रयुज्यते चैष गोशब्दो गोसदृश" इति, निगमनमाह—"इति तस्यैव वाचक" इति, इतिशब्द तस्मादित्यर्थक ।

उपसहरति "इति तज्ज्ञानम्" इति, इति=इत्येव तज्ज्ञान=सञ्ज्ञासञ्ज्ञिसबन्धज्ञानम्, अनुमानम्=अनुमानफलमेवेत्यर्थ ।

एतेन 'सबन्धस्य परिच्छेद सञ्ज्ञया सञ्ज्ञिना सह[1], प्रत्यक्षादेरसाध्यत्वादुपमानफल विदु ' इत्युदयनाचार्योक्तमपि पराकृत वेदितव्यम्, अनुमानसाध्यत्वसम्भवेन 'प्रत्यक्षादेरसाध्यत्वाद्' इत्युक्तेरसाङ्गत्याद् ।

ये च पूर्वमीमासका 'उपमानमपि सादृश्यमसन्निकृष्टार्थे[2] बुद्धिमुत्पादयति यथा गवयदर्शन गोस्मरणस्य' इति शाबरभाष्यानुयायिन (नगरानुभूतचरगोपिण्डस्य नरस्यारण्य प्राप्तस्य तत्र साक्षाद्-गवयमीक्षमाणस्य प्रत्यक्ष[3]दृष्टगवयसादृश्यविशिष्टासन्निकृष्टगोपिण्डग्रहणरूप यदनेन सदृशी मदीया गौरिति ज्ञान तदुपमानम्) इत्येव मन्यन्ते तेषामनोरथानपार्थीकर्तुमाह—'यत्तु गवयस्य' इत्यादि ।

गवयनिष्ठ गोसादृश्यज्ञानमुपमान, गोनिष्ठ च गवयसादृश्यज्ञानमुपमानफलमिति हि मीमासकाभिमत, तत्र यद् गवयनिष्ठं गोसादृश्यज्ञान तत्प्रत्यक्षज्ञानमेव न प्रमाणान्तरमित्यर्थ ।

तत्र हेतुगर्भित विशेषणमाह—' चक्षु सन्निकृष्टस्य" इति ।

यथा चक्षु'सन्निकृष्टाया गवि तन्निष्ठ गोत्वमध्यक्षीभवति तथा चक्षुस्सन्निकृष्टे गवये तन्निष्ठं सादृश्यमपि प्रत्यक्षमेवेत्यर्थ ।

( सामान्यवच्च सादृश्यमेकैकत्र समाप्यते, प्रति[4]योगिन्यदृष्टेऽपि यस्मात् तदुपलभ्यते ) इति भट्टपादोक्ते. सादृश्य हि सामान्यवत् प्रत्येकव्यक्तिसमाप्त न सयोगवदुभयत्र व्यासज्य वर्तते तेन प्रतियोगिनोगोपिण्डस्यादर्शनेऽपि भवति गवयव्यक्तौ गोसदृशोऽयमिति प्रत्यक्षप्रतीतिरिति भाव

नन्वस्तु गवयनिष्ठ गोप्रतियोगिकसादृश्यज्ञानमध्यक्ष तथापि गोनिष्ठगवयसादृश्यज्ञानरूप यदुपमानफल तत्केन साध्यमित्याशङ्कायामाह—"अत एव" इति ।

अतएव=वक्ष्यमाणहेतोरेव, यथा गवयगत सादृश्यमध्यक्ष तथा स्मृत्यारूढाया गवि गत सादृश्यमपि प्रत्यक्षमेवेत्यर्थ ।

---

१ न्यायकुसुमाञ्जलौ तृतीयस्तबके दशमश्लोकोयमिति ज्ञेयम् । २ यत्सादृश्य दृश्यमानम सन्निकृष्टार्थे बुद्धिमुत्पादयति तदुपमान=प्रमेयबुद्धिजनकमेव सादृश्यमिन्द्रियप्रत्यक्षमुपमान, यथा गवयदर्शन=सादृश्यविशिष्टगवयदर्शन गोस्मरणस्य जनकम्, इति भाष्यार्थ इति न्यायरत्नाकरकार । ३ प्रत्यक्षेण दृष्टो यो गवयस्तत्सादृश्यविशिष्टतयाऽसन्निकृष्टस्य नगरगतगोपिण्डस्य यद् ग्रहण तदुपमानमित्यर्थ । ४ पञ्चमसूत्र उपमानपरिच्छेदे ३५ श्लो० प्रतियोगिनि गव्यदृष्टे कथ गवयगत सादृश्य प्रत्यक्षमित्याशङ्कायामिदमभिहितमिति ज्ञेयम् ।

न ह्यन्यद् गवि सादृश्यमन्यच्च गवये, भूयोऽवयवसामान्ययोगो हि जात्यन्तरवर्ती जात्यन्तरे सादृश्यमुच्यते, सामान्ययोगश्चैकः, स चेद् गवये प्रत्यक्षो गव्यपि तथा,

इति नोपमानस्य प्रमेयान्तरमस्ति यत्र प्रमाणान्तरमुपमानं भवेद्, इति न प्रमाणान्तरमुपमानम् ।

एवमर्थापत्तिरपि न प्रमाणान्तरम् ।

---

चक्षुःसन्निकर्षाभावेन कथं गोगतं सादृश्यं प्रत्यक्षमित्याशङ्क्य अतएव इत्यभिहितं हेतुमाह—"नह्यन्यद्" इति, हि=यतो गव्यन्यादृशं सादृश्यं गवये चान्यादृशं सादृश्यमिति नास्त्यत उभयोरेकत्वेन तदपि प्रत्यक्षमेवेत्यर्थः ।

कथमुभयोरैक्यमित्यत्राह—"भूयोऽवयवसामान्ययोगो हि" इति,

(सादृश्यस्य च वस्तुत्वं न शक्यमपबाधितुं, भूयोऽवयवसामान्ययोगो जात्यन्तरस्य तद्) इति कुमारिलस्वाम्युक्तेर्गवयसकाशाज्जात्यन्तरे गोपदार्थे वर्तमानो यो भूयोऽवयवसामान्ययोग=भूयसामवयवानां यानि सामान्यानि—खुरत्वलाङ्गूलत्वादीनि तेषां यः सबन्धस्तदेव जात्यन्तरे गवये सादृश्यमुच्यते, स च भूयोऽवयवसामान्ययोगो गोत्वादिवदेकः स चेद् गवये साक्षात्कृतस्तर्हि गव्यपि साक्षात्कृत एवेत्यर्थः ।

द्रव्यादिचतुष्टयपदार्थवादिभट्टनये सादृश्यस्य सामान्यपदार्थविशेषरूपत्वेन गोत्वादिवदाश्रयग्रहणेनैव गृह्यमाणत्वात्पूर्वं गृहीतमेव गवि सादृश्यं पुनः परामृश्यते, तत्रैतावान् विशेषः—पूर्वमनेन सदृशी मदीया गौरिति प्रतियोगिवैशिष्ट्यव्यतिरेकेण गोत्ववन्निर्विकल्पेन सादृश्यमाकलितं पुनर्गवयरूपप्रतियोगिदर्शने तु सविकल्पकेन तत्प्रत्यभिज्ञायते, तत् किमपरमवशिष्यते यत्रोपमानमिष्येतेत्याशयेनाह—"इति नोपमानस्य" इति, इति=इत्येव प्रत्यक्षसिद्धे सादृश्यज्ञाने ।

सामान्यपदार्थादतिरिक्तं सादृश्यमिति प्रभाकरमते तु गोगतसादृश्यज्ञानं स्मरणरूपं बोध्यमिति तत्त्वम् ।

यदपि (प्रत्यक्षेणावबुद्धेऽपि सादृश्ये गवि च स्मृते, विशिष्टस्यान्यतोऽसिद्धेरुपमानप्रमाणता) इति भट्टपादैः स्मर्यमाणैव गौर्गवयसादृश्यविशिष्टा, तद्विशिष्टं वा सादृश्यमुपमानस्य प्रमेयम्, इत्येवमुपमानकृत्यं दर्शितं तदपि (सा गौर्गवयसदृशी गोत्वाद् गवयेन सहोपलभ्यमानगवान्तरवद्) इत्याद्यनुमानेन निष्पादितत्वान्नोपमानकृत्यमित्यैन्यत्र विस्तरः ।

एवमुपमानं यथायथं प्रत्यक्षादिष्वन्तर्भाव्यार्थापत्तिमनुमानेऽन्तर्भावयितुमुपक्रमते—"एवमर्थापत्तिरपि न प्रमाणान्तरम्" इति ।

---

१ श्लो० १८ । 'गवयात्सकाशाज्जात्यन्तरस्य गोपदार्थस्य यो गवयगतभूयोऽवयवसामान्यैर्योगस्तत्सादृश्यम्, अतः सादृश्यस्य वस्तुत्वमपबाधितुमशक्यमिति भट्टोक्तेरर्थः, सादृश्यस्य पदार्थान्तरत्वाभावेऽपि सामान्यपदार्थेऽन्तर्भावाङ्गीकारात् तस्य वस्तुत्वमभ्युपेयमिति भावः । २ श्लो० ३८ । ३ तत्त्वप्रदीपिकाया द्वितीयपरिच्छेदे ३० इति कारिकाया, कुसुमाञ्जलितृतीयस्तवके ९ इति कारिकाया चेत्यर्थः ।

**तथाहि–जीवतश्चैत्रस्य गृहाभावदर्शनेन बहिर्भावस्याऽदृष्टस्य कल्पनमर्थापत्तिरभिमता वृद्धानां, साऽप्यनुमानमेव ।**

---

तत्र शबरस्वामिप्रदर्शिनमर्थापत्तिस्वरूपमाह–"जीवत" इत्यादिना ।

शतवर्षजीवी चैत्र इति दैवज्ञवाक्यात्सम्प्रतिपन्नजीवनस्य चैत्रस्य गृहासत्त्वदर्शनेनादृष्टस्य बहिर्भावस्य कल्पनारूपा याऽर्थापत्तिर्वृद्धानां=मीमांसाभाष्यकाराणामभिमता साप्यनुमानमेवेत्यर्थः,

अयं भावः–उपपाद्यज्ञानप्रभवमुपपादकज्ञानमर्थापत्तिः, तत्र योऽर्थोऽन्येन केनचित्कल्पनीयेन विना नोपपद्यते सोऽर्थ उपपाद्य इति, यस्य च कल्पनीयार्थस्याभावे सत्युपपाद्यं नोपपद्यते स कल्पनीयोऽर्थ उपपादक इति, तत्रोपपाद्यज्ञानं करणतयाऽर्थापत्तिप्रमाणम्, उपपादकज्ञानं च फलतयाऽर्थापत्तिप्रमा, सा चार्थापत्तिः (अर्थापत्तिरपि यत्र दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यत इत्यर्थकल्पना) इति शाबरभाष्याद् द्विविधा, एका "प्रमाणषट्कविज्ञातो यत्रार्थो नान्यथा भवेद्, अदृष्टं कल्पयेदन्यं सार्थापत्तिरुदाहृता" इति लक्षिता दृष्टार्थापत्तिः, अपरा च "पीनो दिवा न भुङ्क्ते चेत्येवमादिवचःश्रुतौ, रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते" इति लक्षिता श्रुतार्थापत्तिः, दृष्टशब्दस्य प्रत्यक्षाद्यवगतयावत्प्रमितमात्रपरत्वेऽपि गोबलीवर्दन्यायेन दृष्टाद् भेदेन श्रुतोपादानाद् आगमप्रमाणावगतश्रुतातिरिक्तप्रमाणपञ्चकप्रमितपरत्वेन दृष्टशब्दो नेयः, तथाच प्रमाणपञ्चकपूर्विका दृष्टार्थापत्तिः पञ्चविधा, आगमप्रमाणपूर्विका च श्रुतार्थापत्तिरेकविधेत्येवं षड्विधाऽर्थापत्तिरित्यायातं, तत्रानुपलब्धिप्रमाणपूर्विका या (जीवतश्चैत्रस्य गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पना) इत्येवंरूपा दृष्टार्थापत्तिश्शबरस्वामिनोदाहृता साऽनुमानमेवेति ।

एतदुक्तं भवति–यदा किल देवदत्तो, ग्रामाद्बहिरेव जीवन्नस्ति कश्चिच्चैत्र इत्याप्तवाक्यादनिर्धारितदेशविशेषनिष्ठतया चैत्रसत्त्वमवगत्य पुनश्च ग्रामं प्रविश्य गृहं चागत्य गृहान्तश्च तस्य जीवतोऽभावमवलोकयति तदा बहिरवस्थानं विनाऽनुपपद्यमानगृहाभावज्ञानात् तदुपपादकबहिरवस्थानज्ञानं तस्य जायत इति यदर्थापत्तिफलत्वेनाभिमतं बहिस्सत्त्वज्ञानं तदनुमानफलमेवेति,

---

१ दैवज्ञ=ज्योतिश्शास्त्रवेत्ता । २ योऽर्थः–गृहासत्त्वरूपोऽर्थः=येनान्येन–बहिः सत्त्वरूपेण कल्पनीयार्थेन विना नोपपद्यते स गृहासत्त्वरूपोऽर्थ उपपाद्य इत्युच्यते, यस्य च=बहिस्सत्त्वरूपस्य कल्पनीयार्थस्याभावे सति उपपाद्यं=गृहासत्वं नोपपद्यते स च बहिस्सत्वरूपोऽर्थ उपपादक इत्युच्यत इत्यर्थः । ३ अर्थस्य=बहिस्सद्भावस्य आपत्तिः=कल्पना यस्मादिति समासेनार्थापत्तिशब्द उपपाद्यज्ञानरूपकरणपरत्वेन प्रमाणवाची, अर्थस्यापत्तिरिति समासेन चोपपादकज्ञानरूपार्थापत्तिप्रमितिपर इति भावः । ४ श्लोकवार्तिकेऽर्थापत्तिपरिच्छेदे प्रथमः श्लोकोऽयम् । ५ श्लो० ५१ । ६ एतेन यद् वेदान्तपरिभाषायां जैमिनीयमतेन बहिस्सत्त्वकल्पनस्य श्रुतार्थापत्तित्वाभिधानं तदुपेक्ष्यमिति ज्ञेयम् । ७ ननु पूर्वोक्तवार्तिकाद् दृष्टशब्दस्य प्रमाणषट्कविज्ञातार्थपरत्वे सति शब्दप्रमाणावगतश्रुतस्यापि दृष्टान्तर्भावसम्भवात्कथं दृष्टात्पृथक् श्रुतोपादानमित्याशङ्कायामाह–"दृष्टशब्दस्य" इति । ८ प्रत्यक्षावगता दाहक्रिया दहनशक्तिमन्तरानुपपन्ना सती वह्नौ दहनशक्तिं कल्पयति, अनुमानावगतं चादित्यगमनं गमनशक्तियोग्यतां विनाऽनुपपन्नं सदादित्ये गमनशक्तियोग्यतां कल्पयति, इत्यादिकानि प्रत्यक्षादिपूर्विकाणामर्थापत्तीनामुदाहरणानि श्लोकवार्तिके ज्ञेयानि ।

यदा[1] खलु सन्नेकत्र नास्ति तदाऽन्यत्रास्ति, यदाऽव्यापक एकत्रास्ति तदाऽन्यत्र नास्तीति सुकरः स्वशरीरे व्याप्तिग्रहः,

तथाच सतो गृहाभावदर्शनेन लिङ्गेन बहिर्भावदर्शनमनुमानमेव,

नच चैत्रस्य क्वचित्सत्त्वेन गृहाभावः शक्योऽपह्नोतुं यतोऽसिद्धो गृहाभावो बहिर्भावे न हेतुस्स्याद् ।

नच गृहाभावेन वा सत्त्वमपह्नूयते येन सत्त्वमेवानुपपद्यमानमात्मान

---

अनुमानप्रयोगश्च (चैत्रो बहिरस्ति जीवनवत्त्वे सति गृहासत्त्वाद् अहमिव) इत्याकारो बोध्य ।

एतस्मिन्ननुमाने 'यदा जीवतो गृहासत्त्व तदा बहिस्सत्त्वम्' इत्यन्वयव्याप्तिं 'यदा तु बहिस्सत्त्वासत्त्व तदा जीवतो गृहसत्त्वम्' इति व्यतिरेकव्याप्तिं च दर्शयितु दृष्टान्ते व्याप्तिग्रहप्रकारमाह–"यदा खलु सन्नेकत्र" इति ।

सन्=विद्यमान –जीवन् मच्छरीरो यदा एकत्र=गृहे नास्ति तदाऽन्यत्र=बहिरस्तीत्यर्थः, मृते व्यभिचारपरिहाराय जीवन्नित्यर्थवाची सन्निति, एतेन यदाह नेह तदान्यत्रेत्यन्वयव्याप्तिर्दर्शिता ।

व्यतिरेकव्याप्तिमाह–"यदाऽव्यापक एकत्र" इति । "नियम्यत्वनियन्तृत्वे भावयोर्यादृशीमते, विपरीते प्रतीयेते त एव तदभावयो " इत्युक्तेरन्वये जीविगृहासत्त्व व्याप्य बहिस्सत्त्व च व्यापक, व्यतिरेके तु बहिरसत्त्व व्याप्य गृहसत्त्व च व्यापकमिति सिद्धान्तबलादत्र पदशोर्विभिद्य सबन्ध कार्य, तथा च यदाऽन्यत्र=बहिर्नास्ति तदा एकत्र=गृहेऽस्तीत्येव योजनयात्र व्यतिरेकव्याप्तिर्ज्ञेया ।

'अव्यापक' इति तु यथाश्रुतपाठमादायार्थकरणपक्षे गगने व्यभिचारापहारायेति बोध्य, गगन ह्येकत्र विद्यमानमपि नान्यत्राविद्यमान भवतीति ।

व्याप्ति प्रदर्श्य हेतुस्वरूप दर्शयन् बहिर्भावानुमितिमाह–"तथा च सत" इति, तथाच= अनन्तरोक्तेन प्रकारेण व्याप्तिग्रहे सिद्धे सति सत =जीवतश्चैत्रस्य गृहाभावज्ञानरूपेण लिङ्गेन= जीवित्वे सति गृहासत्त्वादिति हेतुना बहिर्भावदर्शनमनुमानमेव=अनुमानसाध्यमेवेत्यर्थ[2] , लिङ्गसमुत्था बौद्धप्रमैव वात्रानुमानम् ।

पूर्वोक्तानुमाने हेतो पक्षधर्मता दर्शयितु स्वरूपासिद्धिं वारयति–"नच चैत्रस्य" इति, चैत्ररूपे पक्षे वर्तमानो यो गृहाभावरूपो हेतु स चैत्रस्य क्वचित्सत्त्वेनाऽपह्नोतुम्=अपनेतु न शक्यो येनाऽसिद्ध[3] =स्वरूपासिद्ध सन् गृहाभावो बहिर्भावे हेतुर्न स्यादित्यर्थः ।

सिद्ध एव गृहाभाव इति न हेतो पक्षवृत्तित्वाभाव इति भाव ।

साध्यासिद्धिं वारयति,–"नच गृहाभावेन" इति । सत्त्व=बहिरस्तीति साध्यैकदेशश्चैत्र

---

१ 'यदा खल्वव्यापक' इति पाठ सर्वत्रोपलभ्यमानोऽपि तात्पर्यटीकानुरोधादसबद्धत्वाचात्रोपेक्षित इति ज्ञेयम् । २ गृहासत्त्वज्ञानस्यैव बहिस्सत्त्वज्ञानरूपानुमितिकरणत्वेनानुमानपदाभिधेयत्वात्कथ बहिर्भावदर्शनरूपाया अनुमितेरत्रानुमानाभिधानमित्यत्राह–"अनुमानसाध्यम्" इति, साङ्ख्यमतेनाह–"बौद्धप्रमैव वा" इति । ३ पक्षे हेत्वभाव स्वरूपासिद्धि । ४ येन=गृहासत्त्वापनयनरूपेण कारणेन ।

न बहिरवस्थापयेत्।

तथाहि–चैत्रस्य गृहासत्त्वेन सत्त्वमात्रं विरुद्ध्यते, गृहसत्त्वं वा, न तावद् यत्र क्वचन सत्त्वस्यास्ति विरोधो गृहासत्त्वेन, भिन्नविषयत्वाद्।

देशसामान्येन गृहविशेषाक्षेपोऽपि पाक्षिक इति समानविषयतया विरोध इति चेद्, न, प्रमाणविनिश्चितस्य गृहेऽसत्त्वस्य पाक्षिकतया सांशयिकेन गृहसत्त्वेन प्रतिक्षेपायोगाद्,

---

सद्भावोपि न गृहाभावेनापह्नूयते येन[1] सत्त्वमेवानिष्पन्नं सत् स्वात्मानं बहिर्देशे नावस्थापयितुं शक्नुयादित्यर्थः। बहिस्सत्त्वरूपसाध्यसम्भवान्न साध्याप्रसिद्धिरिति भावः।

क्वचित्सत्त्वेन गृहासत्त्वमपनेतुमशक्यं, गृहासत्त्वेन च क्वचित्सत्त्वमपनेतुमशक्यं विरोधाभाभावादित्यभिहितं विरोधाभावमेव स्पष्टयितुं द्वेधा विकल्पयति–"तथाहि चैत्रस्य" इति। सत्त्वमात्र=यत्र क्वचन सत्त्वमित्यर्थः।

आद्यं विकल्पं निराकरोति "न तावद्" इति।

गृहासत्त्वेन सह यत्र क्वचन सत्त्वस्य विरोधो नास्तीत्युक्तौ हेतुमाह–"भिन्नविषयत्वाद्" इति।

असत्त्वस्य गृहात्मकप्रदेशो विषयः, सत्त्वस्य च बाह्यप्रदेशो विषय इत्येवं समानविषयत्वाभावान्न विरोध इत्यर्थः।

विरोधमापादयितुमुभयोरे[2]कविषयत्वसम्पत्तये यतमानो मीमांसकः शङ्कते-'देशसामान्येन'इति।

जीवी चैत्रः क्वचिदस्तीत्याप्तवाक्यादाक्षिप्य[3]माणेन सत्त्वस्याश्रयीभूतेन देशसामान्येन तन्मध्यवर्तिनो[4] गेहरूपदेशविशेषस्याऽऽक्षेपः=अर्थाल्लाभोपि पाक्षिकः=पक्षे प्राप्तः इति=अतः उभयोस्सत्त्वासत्त्वयोस्समानविषयतया विरोध इति शङ्कार्थः।

एवं यथाकथञ्चिद् विरोधापादनेऽपि नाक्षिप्तेन गृहसत्त्वेन प्रमितस्य गृहासत्त्वस्य प्रतिक्षेपोऽपि तु प्रमितगृहासत्त्वेनाप्रमितगृहसत्त्वस्यैवेत्याशयेन समाधत्ते "न प्रमाणविनिश्चितस्य"इति।

अनुपलब्धिप्रमाणेन प्रत्यक्षप्रमाणेन[5] वा निश्चितस्य गृहेऽसत्त्वस्य गृहसत्त्वेन प्रतिक्षेपायोगाद्=प्रतिरोधस्यायुक्तत्वादिति सम्बन्धः।

गृहासत्त्वस्य प्रतिक्षेप्यत्वाभावे 'प्रमाणविनिश्चितस्य' इति हेतुगर्भं विशेषणमुक्त्वा गृहसत्त्वस्य प्रतिक्षेपकत्वाभावेऽपि हेतुगर्भं विशेषणमाह–"पाक्षिकतया सांशयिकेन" इति, सम्भावनामात्रेण पक्षे प्राप्ततया संशयमापन्नेन[6]–सन्दिग्धेन—अनिश्चितेनेति यावद्।

प्रमिताप्रमितयोरेकत्र सन्निपाते प्रमितेनाप्रमितस्यैव प्रतिक्षेपो युक्तो नाप्रमितेन प्रमितस्येति भावः।

---

१ येन=सत्त्वापनयनरूपेण कारणेन। २ उभयोः=गृहासत्त्वक्वचित्सत्त्वयोः। ३ आक्षिप्यमाणेन=लभ्यमानेन। ४ देशसामान्यान्तःपातिनः। ५ भाट्टवेदान्तिनोर्मतेऽनुपलब्धिप्रमाणेन, साङ्ख्यादिनये तु प्रत्यक्षप्रमाणेनेति विभागः। ६ 'संशयमापन्नः' ५।१।७३ इति सूत्रेण ठञि सांशयिक इति प्रयोगनिष्पत्तिः, सामान्यतोऽवगतं गृहसत्त्वं विशेषतोऽवगतगृहासत्त्वेन बाध्यं नवेति संशयाक्रान्तेन गृहसत्त्वेनेत्यर्थः।

नापि प्रमाणविनिश्चितो गृहाभावः पाक्षिकमस्य गृहसत्त्वं प्रतिक्षिपन् सत्त्वमपि प्रतिक्षेप्तुं सांशयिकत्वं च व्यपनेतुमर्हतीति युक्तं,

गृहावच्छिन्नेन चैत्राभावेन गृहसत्त्वं विरुद्धत्वात् प्रतिक्षिप्यते न तु सत्त्वमात्रं तत्र तस्यौदासीन्याद्,

तस्माद् गृहाभावेन लिङ्गेन सिद्धेन सतो बहिर्भावोऽनुमीयत इति युक्तम् ।

यथा प्रमित गेहासत्त्व गृहसत्त्व प्रतिक्षिपति तथा सत्त्वमात्रमपि प्रतिक्षिपेदित्याशङ्कामपनयति–"नापि प्रमाणविनिश्चित" इति ।

प्रमाणेन निर्णीतो गृहाभावोऽस्य=चैत्रस्य पाक्षिक गृहसत्त्व प्रतिक्षिपन्=प्रतिरुन्धान सन् सत्त्व=सत्त्वमात्रमपि प्रतिक्षेप्तु=निराकर्तुमर्हति तथा गृहसत्त्वस्य साशयिकत्व च व्यपनेतु=दूरीकर्तुमर्हतीति न युक्तमित्यर्थ ।

ननु 'गृहसत्त्व प्रक्षिपन्' इत्येव पूर्वं प्रमितेन गृहासत्त्वेन गृहसत्त्वस्य प्रतिक्षेपमङ्गीकृत्य पुन कथं तद्विपरीत 'साशयिकत्व चापनेतुमर्हतीति न युक्तम्' इत्येव गृहसत्त्वस्य साशयिकतास्वीकरणं, न हि यस्य बाधस्तस्य साशयिकत्व कुत्रचित्सप्रतिपन्न, किञ्च गृहसत्त्वस्य सन्दिग्धत्वे स्थाणुर्वा पुरुषो वा इतीव चैत्रस्य गृहसत्त्व वा गृहासत्त्व वा इति सशयशरीरो वाच्य तथा च गृहसत्त्वमिव गृहासत्त्वमपि सशयविषयीभूतमापद्येत, तच्चासाम्प्रत, न हि यद् यत्र विशेषत प्रमित तस्य तत्रैव विपरीतप्रमाणविषयत्वरूप संशय समुदेतु प्रभवति, न खलु स्थाणुत्वनिर्णये सति स्थाणुर्वा पुरुषो वेत्येव संशयाना जनास्समुपलभ्यन्त इति चेद् न, गृहसत्त्वस्य साशयिकत्वास्वीकारेण त्वदुक्तशङ्काया एवानुत्थानाद् ।

अय भाव -नात्र सर्वस्यैव शङ्काग्रन्थस्य'न युक्तम्'इत्यनेनायुक्तत्वाभिधान किन्तर्हि शङ्कैकांशस्येति ।

एतदुक्त भवति–'सत्त्वमपि प्रतिक्षेप्तुमर्हति'इति,'गृहसत्त्वस्य साशयिकत्व चापनेतुमर्हति'इति च यद् शङ्कायामशद्वय तत्र प्रथमाशस्यैव (न युक्तम्) इत्यनेनायुक्तत्वाभिधान नाशान्तरस्य, तेन गृहसत्त्वस्य साशयिकत्वापनयनस्य स्वीकृतत्वेन तस्य बाध एवात्राभिप्रेतो न साशयिकतेति ।

एतदभिप्रायेणैव सहेतुक गृहसत्त्वस्य बाध सत्त्वमात्रस्य चाबाधमाह'गृहावच्छिन्नेन' इति,

गृहेणाऽवच्छिन्नेन=इतरेभ्योऽवच्छिद्य स्वस्मिन् स्थापितेन–गृहनिष्ठेन चैत्राभावेन गृहसत्त्वमेव प्रतिक्षिप्यते=बाध्यते,तत्र हेतु'–विरुद्धत्वाद्=प्रमितेन गृहासत्त्वेन सहावस्थातुमशक्यत्वात्, सत्त्वमात्र तु न प्रतिक्षिप्यते, कुत ? 'तत्र तस्यौदासीन्याद्' तत्र=सत्त्वमात्रनिरासे, तस्य=गृहासत्त्वस्य-औदासीन्याद्=निर्व्यापारत्वाद् इत्यर्थ , विरोधाभावान्न सत्त्वमात्रस्य प्रतिक्षेप इति भावः ।

एतेनान्तिमकल्पोऽङ्गीकृत इति ज्ञापितम् । फलितमाह–"तस्माद्" इति, यतो गृहाभाव सिद्धस्तस्मात्सिद्धेन तेन लिङ्गेन सत =जीवतश्चैत्रस्य बहिर्भावोऽनुमीयत इति युक्तमित्यर्थ ।

१ न च साशयिकत्व चापनेतुमर्हति, इति पाठ प्रमादादापतित इति वाच्य, तात्पर्यटीकायामपि तथैवोपलम्भाद् । २ यद्=गृहासत्त्व यत्र=चैत्रे प्रमित तस्य=गृहासत्त्वस्य=तत्र चैत्रे विपरीतप्रमाणात्मकसशयज्ञानविषयत्व नोत्पत्तु प्रभवतीत्यर्थ । ३ तस्य=गृहसत्त्वस्य । ४ चैत्रस्य गृहासत्त्वेन सत्त्वमात्र विरुद्धयते गृहसत्त्वं वेति पूर्वोदितकल्पद्वयेऽन्तिमकल्प स्वीकृत इति भाव । ५ अनुमानप्रयोगश्च पूर्वत्रोक्त ।

एतेन विरुद्धयोः प्रमाणयोर्विषयव्यवस्थयाऽविरोधापादनमर्थापत्तेर्विषय इति निरस्तम्,

अवच्छिन्नाऽनवच्छिन्नयोर्विरोधाभावात्।

उदाहरणान्तराणि चार्थापत्तेरेवमेवाऽनुमानेऽन्तर्भावनीयानि,

तस्मान्नानुमानात्प्रमाणान्तरमर्थापत्तिरिति सिद्धम्।

एवमभावोऽपि प्रत्यक्षमेव,

नहि भूतलस्य परिणामविशेषात्कैवल्यलक्षणादन्यो घटाभावो नाम,

---

ये तु (जीवी चैत्र क्वचिदस्तीत्येव सामान्येन स्थितिबोधकस्यागमप्रमाणस्य योऽय गृहासत्त्वावेदकेन प्रत्यक्षप्रमाणेन सह विरोधस्तत्परिहारायागमस्य बहिर्देशविषयत्वकल्पनमथापत्तिकृत्यम्) इति मन्यन्ते तान्प्रत्याह—

"एतेन" इति-एतेन=वक्ष्यमाणेन हेतुना, सम्भावनामात्रेण विरुद्धयो=विरोधाक्रान्तयो प्रत्यक्षागमप्रमाणयोर्या विषयव्यवस्था=आगमस्य बहिस्सत्त्व विषय प्रत्यक्षस्य च गृहासत्त्व विषय इत्येवं व्यवस्था तया विरोधाभावसम्पादनमर्थापत्तेर्विषय=फलमिति निरस्तमित्यर्थ।

'एतेन' इत्यनेन सूचित, निरासे हेतुमाह-"अवच्छिन्नानवच्छिन्नयो" इति, गेहावच्छिन्नमसत्त्वमध्यक्ष तदनवच्छिन्न सत्त्वमात्र चागमिकमित्येव तयोर्विरोधाभावादित्यर्थ।

एतच्च 'न मानयोर्विरोधोऽस्ति' इति कारिकाया विरोधे हि रज्जुसर्पादिवदेकस्य बाध एव स्यान्नतूभयो प्रामाण्यमित्यादिना कुसुमाञ्जलौ[1] व्यक्तम्।

एव पीनोऽय दिवा न भुङ्क्ते इति वाक्यावगतेन पीनत्वेन यद् रात्रिभोजनकल्पनरूप श्रुतार्थापत्ते कृत्यं तदपि (देवदत्तो नक्तभोजी, दिवाऽभुञ्जानत्वे सति पीनत्वाद्, य किल नक्त न भुङ्क्ते स दिवाऽभुञ्जान सन् पीनोऽपि न भवति यथा नवरात्रोपवासी) इत्यनुमानसाध्यत्वान्नार्थापत्ते फलमित्याशयेनाह-"उदाहरणान्तराणि च" इति।

उपसहरति "तस्माद्" इति।

ये किल कुमारिलस्वामिनस्तदनुयायिनो वेदान्तिनश्च[2] यद्यत्र घट स्यात्तर्ह्युपलभ्येत यतो नोपलभ्यतेऽतो नास्तीत्येव योग्यवस्तूपलम्भाभावजन्यमिह भूतले घटो नेत्यर्थाभावज्ञानमनुपलब्धिप्रमाणकृत्यमित्येवमातिष्ठन्ते तेषामास्थामपनेतुमाह-"एवमभावोऽपि" इति।

यथा प्रभाकरादिसम्मतार्थापत्तिर्न प्रमाणान्तर तथा भट्टाद्यभिमताऽनुपलब्धिरपि न प्रमाणान्तरमपि तु प्रत्यक्षमेवेत्यर्थ।

ननु प्रतिविषयाध्यवसाय इत्यत्रार्थसन्निकृष्टेन्द्रियाश्रिताध्यवसायस्यैव प्रत्यक्षत्वाभिधानादत्र चाभावेन सहेन्द्रियसन्निकर्षाभावात्कथमभावस्य प्रत्यक्षत्वमित्याशङ्कामपनयति "नहि" इति।

हि=यतो भूतलस्य परिणामविशेषादन्य कश्चिद् घटाभावरूप पदार्थो नाम नास्त्यत प्रत्यक्षमिति सबन्ध, तथा च भूतलग्रहणेनैव तदग्रहणान्न तदर्थं पृथक् सन्निकर्षापेक्षेति।

---

१ तृतीयस्तबके १९ श्लो०। २ भट्टपादानुयायित्व वेदान्तिना न निखिलांशेऽपि तु प्रमाणेयत्तादिकियदंश इति बोध्यम।

**प्रतिक्षणपरिणामिनो हि सर्व एव भावा ऋते चितिशक्तेः,**

---

परिणामिना भूतलेन सममिन्द्रियसन्निकर्षसत्त्वात् तत्परिणामविशेषोऽभावोऽपीन्द्रियसन्निकृष्ट एवेति भाव ।

ननु यस्य यत्कार्यं तस्य तत्परिणाम इति हि राद्धान्तस्तत्कथमकार्यस्याभावस्य भूतलपरिणामत्वमित्याशङ्कायां 'परिणामविशेषाद्' इति विशेषपद, विशिष्यतेऽन्यस्मात्परिणामादिति विशेष, तस्मादित्यर्थ ।

वैशेष्यमेवाह-"कैवल्यलक्षणाद्" इति, कैवल्य=भावान्तरासंसृष्टत्वरूप सद्वितीयत्वरूपधर्मापेक्षया धर्मान्तर, तदेव लक्षण=स्वरूप यस्य तत्कैवल्यलक्षण तस्मादित्यर्थ ।

धर्मादिभेदेन परिणामत्रैविध्यस्य सम्प्रतिपन्नत्वात् कार्यमेव परिणाम इति नियमाभावात् कैवल्यलक्षणोऽवस्थाविशेषोऽपि भूतलस्य परिणाम एवेति भाव ।

अत्रेद बोध्यम्-"अवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्ति परिणाम" इति हि योगभाष्योक्त परिणामसामान्यलक्षणम्, एव च सद्वितीयत्वरूपपूर्वधर्मनिवृत्तौ यद् भूतलस्य कैवल्यरूपधर्मान्तरेणावस्थान तदपि भूतलपरिणाम एवेति नाभावस्य परिणामविशेषत्वहानिरिति ।

सद्वितीयत्वरूपधर्मवतो भूतलस्य कथ तद्विरुद्धकैवल्यलक्षणधर्मवत्त्वमित्याशङ्कायामाह-"प्रतिक्षणपरिणामिन" इति।

सर्वस्य त्रिगुणात्मकत्वाचलञ्च गुणवृत्तमित्यभ्युपगमात्प्रतिक्षणमन्यथान्यथाप्रथाशीला सर्वे भावा इत्यर्थ ।

कस्मिंश्चित्समये सद्वितीयत्वरूपावस्थया भूतलमवतिष्ठते कदाचिच्च कैवल्यरूपधर्मान्तरेण परिणमत इति समयभेदेनावस्थाद्वयवत्त्व भूतलस्य न विरुद्धमिति भाव ।

सर्वस्य क्षणिकत्वे हि तथागतमतसाम्य स्यात्तन्माभूदित्याशयेनाह-'ऋते चितिशक्ते" इति, चेतनात्पुरुषाद्भिन्नेत्यर्थ ।

अपरिणामित्वेन कूटस्थनित्यायाश्चितिशक्तेरतिरिक्तस्य प्रतिक्षणपरिणामित्वाभ्युपगमान्न सर्वक्षणिकत्वाभिमानिबौद्धसाम्यप्रसङ्ग इति भाव ।

किञ्च-यथा वैनाशिकैर्धर्मिण प्रतिक्षण निरन्वयनाशोऽभ्युपेयते न तथा साङ्ख्यै, अपि त्ववस्थितस्यैव धर्मिणस्तत्तद्धर्मलक्षणावस्थाख्या परिणामा अभ्युपेयन्ते, नचैतावता धर्मिनाश, कटककुण्डलकेयूरादिषु परिणामेषु धर्मिण कनकादेरन्वितत्वेन प्रतीते सर्वानुभवसिद्धत्वादिति न लेशेनापि बौद्धसाम्यापत्तिरिति ।

---

१ घटशरावादयो मृत्परिणामा कटककुण्डलादयश्च कनकपरिणामा इत्येव कार्ये परिणामशब्दप्रयोगदर्शनादिति भाव । २ धर्मपरिणामो, लक्षणपरिणामोऽवस्थापरिणाम इत्येव परिणामत्रैविध्य पूर्वत्र ( ७८ पृ० ) इत्यत्रोक्तम् । ३ पा ३ सू १३ । ४ गुणवृत्त=गुणाना स्वभाव । ५ प्रतियोगिसत्त्वदशायाम् । ६ प्रतियोगिविरहकाले । ७ तथागत =बुद्ध । ८ वैनाशिकै =बौद्धै । ९ स्वरूपेणैव धर्मिनाश ।

स च परिणामभेद ऐन्द्रियक इति नास्ति प्रत्यक्षानवरुद्धो विषयो यत्राऽभावाह्वयं प्रमाणान्तरमभ्युपेयेतेति।

सम्भवस्तु—यथा खार्यां द्रोणाढकप्रस्थाद्यवगमः,

स चानुमानमेव, खारीत्वं हि द्रोणाद्यविनाभूतं प्रतीतं खार्यां

---

अस्त्वभावस्य प्रतियोग्यनुपरक्ततारूपकैवल्यात्मकभूतलपरिणामविशेषत्वमेतावता कथमनुपलब्धेर्मानान्तरत्वविरह इत्यत्राह="स च परिणामभेद" इति, स =कैवल्यात्मक परिणामविशेषश्च ऐन्द्रियक =भूतलस्वरूपत्वेन इन्द्रियाश्रिताऽध्यवसायविषय प्रत्यक्ष इति यावद्, इति=अतो नास्ति प्रत्यक्षानवरुद्ध =प्रत्यक्षाऽगोचरोऽभावरूपो विषयो यत्र=यस्मिन्नभावरूपविषयज्ञानेऽभावाख्य प्रमाणान्तरमभ्युपेय भवेदित्यर्थ.।

प्रभाकरमतेऽप्यभावस्याधिकरणात्मकत्वेनेन्द्रियग्राह्यत्वान्न तदर्थमनुपलब्धे प्रमाणत्वेनाश्रयणमित्यपि ध्येयम्।

आरम्भवादिन केचिदाचार्यास्तु अनुमानेऽनुपलब्धिमन्तर्भाव्य तस्या प्रमाणान्तरत्व वारयन्ति।

स्पष्ट चैतद् "शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेध" इत्यादिनाऽक्षपादीये (अभावोऽप्यनुमानमेव) इत्यादिना प्रशस्तपादीये च।

न्यायवार्तिककारास्तु 'समवाये चाभावे च विशेषणविशेष्यभावाद्' इतिवदन्तस्सयुक्तविशेषणताख्यसन्निकर्षेणाभावस्य प्रत्यक्षत्वमित्येवम्मन्यन्ते।

यथा चाभावप्रतीति. प्रत्यक्षात्मिका तथा कुसुमाञ्जलौ व्यक्तम्।

पौराणिकाभिमतसम्भवप्रमाणस्यानुमानानतिरिक्तता दर्शयितु सम्भवस्वरूपमाह—"सम्भवस्तु यथा खार्याम्" इति, खारीद्रोणादय परिमाणविशेषा, खार्याख्ये महापरिमाणेऽल्प परिमाणा द्रोणादयोऽन्तस्सम्भवन्तीत्येवविधो योऽवगम =अवबोध स सम्भव इत्यर्थ।

एतादृशात्संभवाख्यात्प्रमाणाद् यत् खारीज्ञानेन द्रोणादिज्ञान तत् सम्भवप्रमाणफल सम्भवप्रमितिरित्याख्यायत इत्यपि ज्ञेयम्।

सम्भवोऽनुमानान्नातिरिच्यतेऽविनाभावबलेनार्थावबोधकत्वाद् यदेवविध न तदेतादृग् यथा प्रत्यक्षमिति न्यायमाश्रित्य सम्भवस्यानुमानेऽन्तर्भावमाह—"स च" इति, स =सम्भवश्चानुमानमेव न प्रमाणान्तरमित्यर्थ।

---

१ धर्मधर्मिणोर्भेदाभेदाभ्युपगमादित्यर्थ, व्यक्त चैतद् (१३) इतियोगसूत्रे वाचस्पत्ये।

२ परिणामवादे परिणामपरिणामिनोरभेदाद्भवतु भूतलस्वरूपवदभावस्य प्रत्यक्षत्वम्, आरम्भवादे त्वभावस्य भूतलातिरिक्तत्वेन कथ तस्य प्रत्यक्षत्वमित्याकाङ्क्षायामाह—"आरम्भवादिन" इति। ३ न्या० अ० २ आ० १ सू० २। ऐतिह्यादीना न प्रमाणत्वप्रतिषेधोऽपि तु प्रमाणान्तरत्वप्रतिषेध, कुत शब्द ऐतिह्यान्तर्भावादनुमाने चार्थापत्त्यादीनामन्तर्भावादित्यर्थ। ४ प्रत्यक्षलक्षणपरे सूत्र इति शेष। ५ तृतीयस्तबके (२०) इति कारिकाया गद्यव्याख्याने। ६ द्रोणचतुष्टय खारी, चतुराढकश्च द्रोण, चतु प्रस्थ चाढक, चत्वार कुडवाश्च प्रस्थ, मुष्टिचतुष्टय च कुडव इति ज्ञेयम्। ७ यदनुमान न न तदविनाभावबलेनार्थप्रतिपादकमित्यर्थ, यत्र यत्र खारीत्व तत्र तत्र द्रोणादिसत्त्वमिति व्याप्यव्यापकभावोऽप्यत्र ज्ञेय।

द्रोणादिसत्त्वमवगमयति ।

यच्चानिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमात्रम् 'इति होचुर्वृद्धाः' इत्यैतिह्यं, यथा 'इह वटे यक्षः प्रतिवसति' इति,

न तत् प्रमाणम्, अनिर्दिष्टप्रवक्तृकत्वेन सांशयिकत्वाद् ।

आप्तवक्तृकत्वनिश्चये त्वागम एव, इत्युपपन्नं त्रिविधं प्रमाणमिति ॥ ५ ॥

---

तथाचाहु प्रशस्तपादा –"सम्भवोऽप्यविनाभावित्वादनुमानमेव" इति । अनुमानान्तर्भावप्रकारमुपपादयति–"खारीत्वम्" इति, यथा वह्निनाऽविनाभूतो धूमो ज्ञात सन् वह्निमनुमापयति तथा द्रोणाद्यविनाभूत खारीत्व=खारीप्रमाण प्रतीत सत् द्रोणादिसत्त्वमवगमयतीत्यनुमानसमानधर्मत्वात्रानुमानादतिरिक्त सम्भवाख्य प्रमाणमित्यर्थ ।

ऐतिहासिकाभिमतैतिह्यस्य प्रमाणान्तरत्व निरसितु न्यायभाष्योक्तमैतिह्यस्वरूपमाह–"यच्चानिर्दिष्टप्रवक्तृकम्"इति । असावुच्चारयितैतद्गोचरप्रमावानित्येव विशेषेण न निर्दिष्ट =निश्चित प्रवक्ता यस्य तदनिर्दिष्टप्रवक्तृक प्रवादपारम्पर्यमात्र=प्रचुरजनरवस्य पौर्वापर्येणानुक्रममात्रं यद् 'वृद्धा इति ह कथयन्ति' इत्येवंविध वचन तदैतिह्यमित्यर्थ ।

'पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्ययम्'इत्यमराद् 'इतिह'इति निपातसमुदाय पारम्पर्योपदेशार्थक ,तस्माद् 'अनन्तावसथेतिहभेषजाञ्ञ्य 'इति स्वार्थे ञ्यप्रत्यय ऐतिह्यमिति साधनीयम् ।

किमूचुर्वृद्धा इत्याकाङ्क्षा शमयन्नैतिह्योदाहरणमाह "यथेहवटे" इति ।

ऐतिह्यस्य कुत्रान्तर्भाव इत्याशङ्कायामाह "न तत्प्रमाणम्" इति, प्रमाणस्य सत प्रमाणत्रयान्तर्भावविचारो युक्त ऐतिह्यस्य त्वप्रमाणत्वेन नात्र प्रमाणान्तर्भावविचारावसर इति भाव ।

ऐतिह्यस्याप्रमाणत्वे हेतुमाह–"अनिर्दिष्टप्रवक्तृकत्वेन सांशयिकत्वाद्" इति, अनिश्चितोच्चारयितृत्वेन सन्दिग्धत्वादित्यर्थ ।

अथैतन्मतम्=आप्तोक्तिमूलक एव पारम्पर्योपदेश ऐतिह्य प्रमाण न तु प्रवादपरम्पराप्रतीतमिति, तत्राह—"आप्तवक्तृत्वनिश्चये तु" इति ।

सुदृढेन प्रमाणेनावधारितपदार्थतत्त्वभाव आप्त , स वक्ता=आद्योपदेष्टा यस्य पारम्पर्योपदेशस्य स आप्तवक्तृक , तस्य भावस्तत्त्व, तस्य निश्चये तु आगम एव=आप्तश्रुतित्वेनागमप्रमाणान्तर्भूतमेव तदैतिह्यमिति न तत्प्रमाणान्तरमित्यर्थ ।

तदुक्तम्—"ऐतिह्यमप्यवितथमाप्तोपदेश एव" इति ।

प्रमाणनिरूपणप्रकरणमुपसहरन्मूल सङ्गतयति, "इत्युपपन्नम्" इति, यतोऽन्यै पृथक्प्रमाणत्वेनाभिमतानामुपमानादीना प्रमाणत्रय एवान्तर्भावसभव इति=अत 'त्रिविधं प्रमाणमिष्टम्' इति मूलोक्त युक्तमित्यर्थ ॥ ५ ॥

---

१ परम्परैव पारम्पर्य स्वार्थेष्य , पारम्पर्येणोपदेश पारम्पर्योपदेशस्तत्रेतिह शब्दोऽव्ययमित्यमरटीकाया भरत । भानुजिदीक्षितस्तु परम्पराया आगत ( तत आगत ) इत्यण्, चतुर्वर्णादित्वात् ष्यञ्, पारम्पर्यश्चासावुपदेशश्चेति पारम्पर्योपदेश इत्याह । २ ५।४।२३। ३ पारम्पर्योपदेशस्याप्तोक्तत्वनिश्चये त्वित्यर्थ । ४ प्रशस्तपादैरिति शेष । ५ अवितथम्=आप्तोक्तिमूलकत्वेन यथार्थभूतम्, अवितथमिति कथनेन वितथमप्रमाणमेवेति बोधितम् ।

एव तावद्व्यक्ताव्यक्तज्ञलक्षणप्रमेयसिद्ध्यर्थं प्रमाणानि लक्षितानि, तत्र व्यक्तं पृथिव्यादि स्वरूपतः पांशुलपादको हालिकोऽपि प्रत्यक्षतः प्रतिपद्यते, पूर्ववता चानुमानेन धूमादिदर्शनाद्वह्न्यादीनीति तद्व्युत्पादनाय मन्दप्रयोजनं शास्त्रम्, इति दुरधिगममनेन व्युत्पादनीयं, तत्र यत्प्रमाणं यत्र शक्तं तदुक्तलक्षणेभ्यः प्रमाणेभ्यो निष्कृष्य दर्शयति—"सामान्यतस्तु" इति,

सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात् ॥
तस्मादपि चासिद्धं परोक्षमाप्तागमात्सिद्धम् ॥ ६ ॥

तु-शब्दः प्रत्यक्षपूर्ववद्भ्या विशिनष्टि, सामान्यतो दृष्टादनुमानाद्=

---

वृत्तवर्तिष्यमाणार्थयोस्सङ्गतिं कीर्तयन् सत्रग्रिमार्यापीठिकामारचयति—"एवन्तावद्" इति, तावद्—इति वाक्यालङ्कारे, व्यक्तम्=इन्द्रियगृहीतं पृथिव्यादि, अव्यक्तमतीन्द्रिय प्रधानादि, ज्ञ=चेतन पुरुष, एतत्रिविधलक्षणप्रमेयसिद्ध्यर्थं प्रमाणानि लक्षितानीत्यर्थ ।

किं त्रिविधमेव प्रमेय प्रकृततन्त्रव्युत्पाद्यमुतैष्वन्यतम किञ्चिदित्यत्राह—"तत्र" इति ।

तत्र=त्रिविधप्रमेयमध्ये यद्व्यक्त पृथिव्यादि तत् स्वरूपत=कटघटपटात्मकस्थूलरूपेण पांशुलपादक.=धूलिधूसरितचरण हालिकोऽपि=हलवहनशीलो निरक्षरोऽपि नर प्रत्यक्षत=प्रत्यक्षेण प्रतिपद्यते=जानाति, एव पूर्ववत्सञ्ज्ञकेन चानुमानेन व्यवहितानि वह्न्यादीन्यपि प्रतिपद्यते, यत एवम् इति=अत तद्व्युत्पादनाय=एतादृग्व्यक्तपृथिव्याबोधनाय यद्येतच्छास्त्र स्यात् तर्हि मन्दप्रयोजनम्=अल्पफलं निष्फल वैतच्छास्त्र भवेद्, इति=अत शास्त्रस्य सफलत्वाय दुरधिगमम्=दुरवबोध प्राकृतनराविदितमव्यक्तादिकमेवानेन तन्त्रेण व्युत्पादनीयं न व्यक्तमित्यर्थ ।

तथाच—अव्यक्तं ज्ञश्चैतत्प्रमेयमित्यत्र फलितम् ।

एव पीठिकामारचय्यार्यामवतारयति—"तत्र" इति, तत्र=व्यक्तस्याप्रतिपाद्यत्वेऽव्यक्तपुरुषयोश्च प्रतिपाद्यत्वे स्थिरे सति, अव्यक्तप्रधानादिमध्ये वा, यत्र=यस्मिन्नतीन्द्रिये यत्प्रमाण शक्त=समर्थं तत्प्रमाणमुक्तप्रमाणेभ्यो निष्कृष्य=विभज्य दर्शयतीत्यर्थ ।

कारिका व्याचक्षाण 'सामान्यतस्तु' इति तु-शब्दस्य कृत्यमाह—"तुशब्द" इति, तु-शब्द इत्युपलक्षण, सामान्यतोदृष्टाद्—इत्यनुमानविशेषणोपादान चेत्यपि ज्ञेय, तथा च तुशब्द प्रत्यक्षाद् विशिनष्टि, सामान्यतो दृष्टादितिविशेषण च पूर्ववन्नामकादनुमानाद् विशिनष्टि= व्यवच्छिनत्ति—सामान्यतो दृष्टानुमानमिति शेष ।

---

१ धूलिवाचकात्पाशुशब्दान्मत्वर्थे 'सिध्मादिभ्यश्च' ५।२।७७। इति लचि पाशुल इति, पाशुलौ पादौ यस्य स पाशुलपादक । २ ' तद् वहति ' इत्यधिकारे ' हलसीराट्ठक् ' ४।४।८१। इति ठकि हालिक इति साधु । ३ यत शास्त्रसस्कारविधुरोऽपि नरो व्यक्त पृथिव्यादिक जानात्यत इत्यर्थ । ४ मन्दम्—अल्प प्रयोजन=फल यस्य तन्मन्दप्रयोजन तदेवाह—( अल्पफलम् ) इति, मन्देषु=खलेषु=प्राकृतेषु प्रयोजन यस्येत्यर्थेन निष्फलमित्यर्थो वा । ५ किं व्यवच्छिनत्तीत्याकाङ्क्षा शमयति—"सामान्यतो दृष्टमिति शेष " इति।

अध्यवसायाद् अतीन्द्रियाणा=प्रधानपुरुषादीनां प्रतीतिः=प्रतिपत्तिः, (चिच्छायापत्तिर्बुद्धेरध्यवसाय इत्यर्थः)

उपलक्षणं चैतत् शेषवत इत्यपि द्रष्टव्यम् ।

तत्कि सर्वेष्वतीन्द्रियेषु सामान्यतो दृष्टमेव प्रवर्तते, तथा च यत्र तन्नास्ति महदाद्यारम्भक्रमे स्वर्गापूर्वदेवतादौ च तेषामभावः प्राप्तः, इत्यत आह—"तस्मादपि" इति,

---

नापि प्रत्यक्षात्प्रधानादीना प्रतीतिर्नापि पूर्ववदनुमानादपि तु सामान्यतो दृष्टादनुमानादित्येव व्यवस्थापयतीति भाव ।

तथाच साङ्ख्यसूत्र-"सामान्यतोदृष्टादुभयसिद्धिः" इति ।

साङ्ख्यनये बुद्धिवृत्तेरेव प्रमाणत्वादाह-"अध्यवसायाद्" इति, लिङ्गज्ञानजन्यबौद्धबोधात्मकादनुमानादित्यर्थ, प्रतीति =पौरुषेयबोधात्मकफलरूपानुमितिरित्यर्थ ।

कथ पुनर्जडाया बुद्धेर्ज्ञानरूपोऽध्यवसाय इत्यत्राह="चिच्छायापत्ति" इति, चित्सन्निधानेन या बुद्धेश्चित्तादात्म्यापत्तिस्तद्बलादेव बुद्धेर्ज्ञानरूपो व्यापार इत्यर्थ, प्रपञ्चित चैतत् प्रागिति नात्र किञ्चिद्वचनीयम् ।

यथा च प्रधानपुरुषयोस्सामान्यतो दृष्टानुमानादे प्रतीतिस्तथोत्तरत्र व्यक्तमित्युक्तमत्राम्रेडनेन।

नतु तन्मात्रेन्द्रियाण्यभिमानवद्द्रव्योपादानकानि अभिमानकार्यद्रव्यत्वाद् यन्नैव तन्नैव यथा पुरुष इत्येवं शेषवदनुमानादपि केषाचिदतीन्द्रियाणां प्रतीते सत्त्वात्कथमभिहित सामान्यतो दृष्टानुमानात्प्रतीतिरिति, इत्याशङ्कायामाह "उपलक्षण चैतद्" इति, शेषवत =केवलव्यतिरेक्याख्यपरिशेषानुमानादपि केषाञ्चिदतीन्द्रियाणा प्रतीतिरित्यपि ज्ञेयमित्यर्थ ।

आर्योत्तरार्द्धमुत्थापयितु शङ्कते "तत्किम्" इति, तद्-इत्यव्यय 'तर्हि' इत्यर्थकम् ।

ओमिति वदन्तं प्रत्याह "तथाच" इति, तथाच=एवं सति यत्र यस्मिन्नतीन्द्रिये तत्=सामान्यतो दृष्टानुमान नास्ति=न प्रवर्तते तेषामभाव प्राप्तस्यादित्यन्वय ।

कुत्र तन्नास्तीत्याकाङ्क्षाया यत्रेत्यस्य विवरणमाह-"महदाद्यारम्भक्रम" इति, प्रकृतेर्महान्महतोऽहङ्कार इत्याद्याविर्भावक्रमे, स्वर्गादिपरलोके च, अपूर्वाख्यधर्माधर्मयोश्च, इन्द्रादिदेवताश्च च, आदिना यागादीना स्वर्गादिसाधनत्वे, क्षीरसमुद्रादौ चेत्यर्थ ।

---

१ आदिना महत्तत्त्वादयो ग्राह्या । २ ( ) एतच्चिह्नान्तर्गत पाठ कथञ्चिद् योजितोऽपि न स्वान्त रञ्जयति, नच प्रतीतेर्विवरणमिदमिति भ्रमितव्य, प्रतीतेरनुमितिरूपाया पौरुषेयत्वेन बुद्ध्यध्यवसायत्वाभावात्, टिप्पणादापतितो वाऽस्य पाठ । ३ अ० १ । सू० १०३ । ४ उभयो =प्रकृतिपुरुषयोस्सिद्धिरिति । ५ यथाच बौद्धबोधस्य प्रमाणत्व पौरुषेयबोधस्य च प्रमात्व तथा प्राग् ५ इति कारिकाया प्रत्यक्षलक्षणावसरे विशदीकृतमित्यर्थ । ६ १४।१५। १६।१७ इति कारिकासु । ७ कथितस्य पुन पुन कथनमाम्रेडनम् । ८ अपूर्वम्=अदृष्ट—विहितनिषिद्धक्रियाजन्य सूक्ष्म कर्मेत्यर्थ ।

'तस्मादपि' इत्येतावतैव सिद्धे चकारेण शेषवत इत्यपि समुच्चितम् ॥६॥

स्यादेतद्–यथा गगनकुसुमकूर्मरोमशशविषाणादिषु प्रत्यक्षमप्रवर्तमानं तदभावमवगमयत्येवं प्रधानादिष्वपि, तत्कथं तेषा सामान्यतो दृष्टादिभ्यः सिद्धिरिति, अत आह–"अतिदूराद्" इति—

अतिदूरात्सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् ।
सौक्ष्म्याद् व्यवधानादभिभवात्समानाभिहाराच्च ॥ ७ ॥

'अनुपलब्धिः' इति वक्ष्यमाणं सिंहावलोकनन्यायेनानुषञ्जनीयं यथा उत्पतन् वियति पतत्री अतिदूरतया सन्नपि प्रत्यक्षेण नोपलभ्यते,

सामीप्यादित्यत्राप्यतिरनुवर्तनीयः, यथा लोचनस्थमञ्जनमतिसामीप्यान्न दृश्यते,

इन्द्रियघातः=अन्धत्वबधिरत्वादिः,

---

न्यूनतां पूरयति–"चकारेण" इति, तस्मात्=सामान्यतो दृष्टानुमानात् चकारेण शेषवदनुमानाच्च यदतीन्द्रियमप्रतीत भवेत् तदागमप्रमाणात्सिद्ध भवतीत्यर्थ ॥ ६ ॥

शङ्कते—"स्यादेतद्" इत्यादिना, एतद्=वक्ष्यमाण भवेद्,

तदभावम्=आकाशकुसुमाद्यभावम्, एव प्रधानादिष्वप्यप्रवर्तमान प्रत्यक्ष प्रधानाद्यभावमवगमयेदित्यर्थ ।

अतिदूरत्वादिहेतुभ्य किम्भवतीत्याशङ्कायामाकाङ्क्षासमापकपदानुसधानेन वाक्यं पूरयति "अनुपलब्धि " इति, वक्ष्यमाण=उत्तरार्याया विद्यमानमनुपलब्धिरिति पदमत्र वाक्ययोजनापूरणायानुषञ्जनीय=सबन्धनीयमित्यर्थ,

उत्तरवाक्यगतपदाना पूर्वत्रानुषङ्गे न्यायमाह "सिंहावलोकनन्यायेन" इति, सिंहो ह्यरण्ये व्रजन् सन्नन्तराऽन्तरा हिंसकभीतया पृष्ठभागमप्यवलोकयति यथा तथोत्तरवाक्यस्थपदाना पूर्ववाक्येऽप्यनुसन्धानं सभवतीत्यर्थ,

अतिदूरादनुपलब्धिरित्यस्योदाहरणमाह "यथोत्पतन्" इति,सन्नपि=विद्यमानोऽपि पतत्री=पक्षी वियति=गगने उत्पतन्=उड्डीयमान अत्यूर्ध्वं गत सन्नतिदूरतया प्रत्यक्षेण नोपलभ्यत इत्यर्थः ।

'अन्धत्वबधिरत्वादि.' इत्यत्र 'तस्मादिन्द्रियघाताद् विद्यमान रूप न पश्यति शब्द च न शृणोति' इति शेषो ज्ञेय ।

---

१ एतद्=पूर्वोक्त भवत्वित्यर्थो वा बोध्य, परन्तु पूर्वोक्तस्य भवने शङ्काया अनुत्थितेर्वक्ष्यमाण स्यादित्यर्थ सम्यक् प्रतिभाति। २ अतिदूराद् इति भावप्रधानो निर्देश इत्याशयेनाह "अतिदूरतया" इति, हेतौ तृतीया, अय दूरत्वदोषश्च क्वचिदेव, तेन सूर्यादिमण्डलदर्शने न व्यभिचार इति बोध्यम् ।

'मनोऽनवस्थानाद्' यथा कामाद्युपहतमनाः स्फीतालोकमध्यवर्तिनमिन्द्रियसन्निकृष्टमर्थं न पश्यति,

'सौक्ष्म्याद्' यथेन्द्रियसन्निकृष्ट परमाण्वादि प्रणिहितमना अपि न पश्यति,

'व्यवधानाद्' यथा कुड्यादिव्यवहितं राजदारादि न पश्यति,

'अभिभवाद्' यथाऽहनि सौरीभिर्भाभिरभिभूतं ग्रहनक्षत्रमण्डलं न पश्यति,

'समानाभिहाराद्' यथा तोयदविमुक्तानुदबिन्दून् जलाशये न पश्यति,

चकारोऽनुक्तसमुच्चयार्थः, तेनानुद्भवोपि सङ्गृहीतः, तद् यथा—क्षीराद्यवस्थाया दध्याद्यनुद्भवान्न पश्यति,

एतदुक्त भवति—न प्रत्यक्षनिवृत्तिमात्राद् वस्त्वभावो भवति, अतिप्रसङ्गात्, तथा हि—गृहाद् विनिर्गतो गृहजनमपश्यंस्तदभावं विनिश्चिनुयाद्, नत्वेवम्, अपि तु योग्यप्रत्यक्षनिवृत्तेरयमभावं विनिश्चिनोति, न च प्रधानपुरुषादीनामस्ति प्रत्यक्षयोग्यता, इति न तन्निवृत्तिमात्रात् तदभावनिश्चयो युक्तः प्रामाणिकानामिति ॥ ७ ॥

---

मनोनवस्थानाद्=इतरव्यासङ्गेनेन्द्रियसयोगाभावात्, कामाद्युपहतमना =कामादिविकारेण उपहत= दूषित मनो यस्य स तथा, स्फीत =प्रचण्डत्वेन विस्तृतो य आलोक सूर्यादिप्रकाश स्तदभ्यन्तरे वर्तमानमित्यर्थ,

सौक्ष्म्याद्=निरवयवद्रव्यत्वात्, प्रणिहितमना =समाहितचित्त ,

सौरीभि =सूर्यसबन्धिनीभि भाभि =किरणदीप्तिभिः अभिभूत=तिरस्कृत चन्द्रातिरिक्त मङ्गलादिमण्डलमश्विन्यादिनक्षत्रमण्डल च न पश्यतीत्यर्थ,

सजातीयपदार्थमिश्रण समानाऽभिहार तस्मात्, तोयदेन=मेघेन विमुक्तान् उदबिन्दून्=जलकणान् जलाशये=तडागादौ विभिन्नतया न पश्यति,

अनुद्भव =अनागतावस्थया सूक्ष्मरूपेण स्वोपादानेऽवस्थानम्,

यच्च शङ्कित गगनकुसुमादिवत्प्रधानादीनामभाव एव कथ न स्यादिति, तत्समाधानायाह—"एतदुक्त भवति"इति,

अतिप्रसङ्गमेवाह—"तथाहि" इति,

'नत्वेवम्'=एव=गृहाद्विनिर्गतो गृहजनाभाव निश्चिनोतीत्येव नतु=नहि दृश्यते लोक इत्यर्थ,

तर्हि कीदृक्प्रत्यक्षनिवृत्तेरभावविनिश्चय इत्यत्राह "अपि तु योग्यप्रत्यक्षनिवृत्तेः" इति, सावयवत्वादिसामग्रीसमवधानेन प्रत्यक्षयोग्य यद् वस्तु तत्र प्रत्यक्षनिवृत्तेरय जनोऽभाव निश्चिनोति यथा सावयवाना शृङ्गादीना शशादौ, प्रधानादीनाञ्च निरवयवत्वेन प्रत्यक्षयोग्यता नास्ति इति=अत केवलप्रत्यक्षनिवृत्तिमात्रात् तेषामभावनिश्चय प्रामाणिकाना=प्रमाणैर्व्यवहरमाणाना न युक्त इत्यर्थ ॥ ७ ॥

---

१ अभावनिश्चये रोदनताडनादिप्रसङ्गादित्यपि ज्ञेयम्। २ चार्वाकाणा युक्तोपि प्रत्यक्षाप्रवृत्त्याऽभावनिश्चय प्रमाणकुशलाना तु स न युक्त इत्यर्थ ।

कतमत्पुनरेतेषु कारणं प्रधानादीनामनुपलब्धौ, इत्यत आह–'सौक्ष्म्याद्' इति,

**सौक्ष्म्यात् तदनुपलब्धिर्नाभावात् कार्यतस्तदुपलब्धेः ।**
**महदादि तच्च कार्यं प्रकृतिसरूपं विरूपं च ॥ ८ ॥**

अथाभावादेव सप्तमरसवदेतेषामनुपलब्धिः कस्मान्न भवति, इत्यत आह– 'नाभावाद्' कुतः, 'कार्यतस्तदुपलब्धेः' तद् इति प्रधानं परामृशति, पुरुषोपलब्धौ तु प्रमाणं वक्ष्यति 'सङ्घातपरार्थत्वाद्' (का. १७) इति,

दृढतरप्रमाणावधारिते हि प्रत्यक्षमप्रवर्तमानमयोग्यत्वान्न प्रवर्तत इति कल्प्यते सप्तमस्तु रसो न प्रमाणेनावधारित इति न तत्र प्रत्यक्षस्यायोग्यता शक्याऽध्यवसातुमित्यभिप्रायः ।

किं पुनस्तत्कार्यं यतः प्रधानानुमानम्, इत्यत आह–"महदादि तच्च कार्यम्" इति, एतच्च यथा गमकं तथोपरिष्टादुपपादयिष्यते,

---

आशङ्कापूर्वकमुत्तरकारिकामवतारयति "कतमत्पुन." इति । एतेषु=पूर्वोक्तातिदूरत्वाद्यष्टकारणानाम्मध्ये, कतमत्=किङ्कारणमित्यर्थ,

'सौक्ष्म्यात् तदनुपलब्धि.'इति मूलेन निरवयवत्वरूपसूक्ष्मत्वात् तेषा प्रधानादीनामुपलब्धिर्न भवतीत्यभिहित, तत्र शङ्कते "अथाभावादेव" इति, यथा षड्विधाम्लादिरसातिरिक्त सप्तमो रसोऽभावादेव नोपलभ्यते नतु सौक्ष्म्यात् तथा प्रधानादीनामप्यभावादेवानुपलम्भ कुतो न भवेदित्यर्थ,

कारिकाशमवतार्य समाधत्ते–"नाभावाद्" इति, नतु सप्तमरसवदभावादनुपलब्धिरित्यर्थ,

तत्र[1] हेतु पृच्छति "कुत" इति, समाधत्ते "कार्यतस्तदुपलब्धेः" इति, महत्तत्त्वादिकार्यलिङ्गकानुमानेन प्रधानोपलब्धेरित्यर्थ,

तदुपलब्धेः–इति तत्–शब्देन नात्र प्रधानपुरुषयोरुभयो परामर्शोऽपि तु प्रधानस्य, पुरुषस्याकारणत्वेन कार्यलिङ्गकानुमानेन तदुपलब्धेर्वक्तुमशक्यत्वादित्याशयेनाह–"तद् इति प्रधान परामृशति" इति,

तर्हि पुरुषोपलब्धि कुत, तत्राह–"पुरुषोपलब्धौ तु" इति, वक्ष्यति=मूलकार इति शेष,

यदुक्तम्–प्रत्यक्षाप्रवृत्त्या सप्तमरसवदभाव एव किन्न स्यादिति, तद् विघटयति[2]–"दृढतर" इत्यादिना, प्रबलतरानुमानादिप्रमाणेन निर्णीते हि प्रधानादौ यत्प्रत्यक्ष न प्रवर्तते तत् प्रधानादीनां निरवयवत्वेन तत्र योग्यताभावान्न प्रवर्तते न त्वसत्त्वादिति कल्प्यते सप्तमस्तु रसो न केनापि प्रमाणेन निश्चित इति=अत तत्र=सप्तमे रसे प्रत्यक्षस्यायोग्यता अध्यवसातु=निश्चेतु न शक्येत्यर्थ, असत्त्वादेव सप्तमे रसे प्रत्यक्ष न प्रवर्तते न त्वयोग्यत्वादिति विशेष इति भाव,

'उपरिष्टादुपपादयिष्यते'=१४।१५ इति कारिकाव्याख्यानावसरे मया, सारूप्यवैरूप्ये=केन धर्मेण तत्त्वानां परस्पर साहश्य, केन च धर्मेण परस्परवैलक्षण्यमित्येवं साधर्म्यवैधर्म्ये इत्यर्थ,

---

१ तत्र=अभावान्नानुपलब्धिरपि तु सौक्ष्म्यादित्यत्र । २ खण्डयति।

तस्य च कार्यस्य विवेकज्ञानोपयोगिनी सारूप्यवैरूप्ये आह 'प्रकृतिसरूपं विरूपं च" इति. एते तूपरिष्टाद् विभजनीये इति ॥ ८ ॥

कार्यात् कारणमात्रं गम्यते, सन्ति चात्र वादिनां विप्रतिपत्तयः, तथाहि- केचिदाहुः 'असतः सज्जायते' इति, 'एकस्य सतो विवर्तः कार्यजातं न वस्तु सद्' इत्यपरे ।

अन्ये तु 'सतोऽसज्जायते' इति, 'सतः सज्जायते' इति वृद्धाः ।

---

एते=सारूप्यवैरूप्ये तु उपरिष्टाद्=(१०।११) इति कारिकयो विभजनीये=विभागयोग्ये, इति तत्रैव द्रष्टव्ये इत्यर्थ ॥ ८ ॥

उत्तरकारिकाभूमिकामारचयति "कार्याद्" इति, कार्यदर्शनबलाद् अस्त्यस्य किञ्चित्कारणमित्येव कारणमात्र गम्यते=प्रतीयते न त्विदमस्य कारणमिति विशेष प्रतीयते, तथा च न प्रधानकारणत्वनिश्चय इत्यर्थ,

भवतु कारणमात्रज्ञान तथाप्यन्यस्य कारणस्यासत्त्वात्प्रधानकारणत्वनिश्चयो भविष्यति, इत्यत्राह-"सन्ति च" इति, अत्र=कारणविषये च वादिना=तत्तद्दार्शनिकाना विप्रतिपत्तय= विभिन्ना विभिन्ना मतय सन्ति, तथा च न कारणविशेषावधारणमित्यर्थ,

ता[1] दर्शयितुमाह-"तथाहि" इति, विप्रतिपत्तीर्दर्शयामीत्यर्थ,

तत्र 'शून्यतैव जगत परमार्थता' इति वदता बौद्धानां मतमाह-"असत सज् जायते" इति, अभावाद् भावो जायते इत्यर्थ,

विनष्टाद्धि किल बीजादङ्कुर उत्पद्यते, नष्टाच्च दुग्धाद् दधि, विनष्टाच्च मृत्पिण्डाद् घट इत्येवमभावग्रस्तेभ्यो बीजादिभ्योऽङ्कुराद्युत्पत्तिदर्शनात्, सर्वे कार्यरूपा भावा अभावकारणका कार्यत्वाद् बीजनाशोत्तरोत्पन्नाङ्कुरादिवद् इत्येवमनुमीयत इति हि सौगताकूतम् ।

तथा च बौद्धमतानुवादि न्यायदर्शने पूर्वपक्षसूत्रम्[2]-"अभावाद् भावोत्पत्तिर्नानुपमृद्यप्रादुर्भावाद्[3]" इति ।

ब्रह्मैवैकमनिर्वचनीयानाद्यविद्योपधानादनेकविधनामरूपप्रपञ्चात्मना विवर्तते रज्जुरिव सर्पमालाद्यात्मना, एक मुखमिव चानेकमणिकृपाणदर्पणादिभेदादनेकविधप्रतिबिम्बात्मना, इति वदता वेदान्तिना मतमाह-"एकस्य सत" इति,

एकस्य=अद्वितीयस्य सत=त्रैकालिकबाधविधुरस्य ब्रह्मण विवर्त=शुक्तेरिव रजतमतात्त्विकान्यथाप्रथात्मक कार्यजात=दृश्यमात्र न वस्तुसत्=परमार्थत सदित्यर्थः,

कणादाक्षपादयोर्मतमाह-"सतोऽसज् जायते" इति, सत=भावरूपात्परमाण्वादेरसत्= पूर्वमविद्यमान द्व्यणुकादि जायत इत्यर्थ,

कापिलमतमाह-"सत. सज्जायते" इति, सत=भावरूपात्प्रधानादे सद्=अनागतावस्थया कारणे विद्यमानमेव जायते=कारकव्यापारेणाभिव्यज्यत इति वृद्धा=साङ्ख्याचार्या इत्यर्थ,

---

१ ता=विप्रतिपत्तीरित्यर्थ । २ अ ४ आ १ सू १४ । ३ द्वौ नञौ प्रकृतार्थ द्रढयत, बीजमुपमृद्यैवाङ्कुरप्रादुर्भावादित्यर्थ ।

तत्र पूर्वस्मिन् कल्पत्रये प्रधान न सिध्यति, सुखदुःखमोहभेदवत्स्वरूपपरिणामशब्दाद्यात्मकत्वं हि जगत्कारणस्य प्रधानत्वं=सत्त्वरजस्तमःस्वभावत्वम्

यदि पुनरसतः सज् जायेत असन्निरुपाख्यं कारणं कथं स्यात्, सदसतोस्तादात्म्यानुपपत्तेः।

---

एव मतचतुष्टय प्रदर्श्य साङ्ख्यातिरिक्तान्यमताना प्रधानकारणत्वासाधकत्वादनुपादेयता दर्शयितुमाह—"तत्र पूर्वस्मिन् कल्पत्रये" इति तत्र=पक्षचतुष्टयेषु, कार्यज्ञानेन यादृश कारण प्रधान सिद्ध भवति तादृश प्रधानमाद्यपक्षत्रये न निष्पद्यत इत्यर्थ,

कीदृक् प्रधानं कार्यलिङ्गकानुमानबलेन सिद्धयति यदन्यमते न सिद्धयेद् इत्यत्राह—"सुखदु खमोहभेदवत्स्वरूपपरिणामशब्दाद्यात्मकत्वम्" इति, सुखदु खमोहरूपा ये भेदा =विशेषास्ते विद्यन्ते यत्र तत् सुखदु खमोहभेदवद्, एतादृश स्वरूप येषा ते सुखदु खमोहभेदवत्स्वरूपा, एवविधा ये परिणामा =स्थूलतन्मात्रादिरूपशब्दाद्या त एवात्मा=स्वरूप यस्य तत् तथा, तस्य भावस्तत्त्वम्, एवविध हि जगत्कारणस्य प्रधानत्व कार्यदर्शनात् सिध्यति तच्चान्यमते नोपपद्यत इत्यर्थ,

प्र=प्रकर्षेण—वैषम्यावस्थापरिहारेण धीयन्ते=निधीयन्ते—विद्यन्ते सत्त्वादिगुणा यस्मिन् तत् प्रधान तस्य भाव प्रधानत्वमित्याशयेन 'प्रधानत्वम्' इत्यस्य विवरणमाह "सत्त्वरजस्तम-स्वभावत्वम्" इति, सुखाद्यात्मकसत्त्वादिगुणस्वरूपत्वमित्यर्थ,

(शब्दाद्यात्मक जगत्—सुखाद्यात्मककारणपूर्वक तदन्वितत्वाद्—यद् यदन्वित—तत् तथा[3]—यथा मृदन्वित घटादिक मृत्कारणक तथा[4]चेद—तस्मात् तथा) इत्याद्यनुमानेनावगम्यमान यत् सुखाद्यात्मक त्रिगुण प्रधान कारणस्य कार्यात्मकत्व च तदन्यमते न सिद्धयतीति भाव।

क्वचित् पुस्तके—"सुखदु खमोहभेदवत्स्वरूपपरिणामशब्दाद्यात्मकम्" इति भावप्रत्यय[6]यावटित पाठ उपलभ्यते, स चेत्थ व्याख्येय.—सुखाद्यात्मक यज् जगत् तत् स्वकारणस्य सत्त्वरजस्तम-स्वरूपत्वम् अवगमयतीति शेष,

तत्र बौद्धमते तावदेतादृक्प्रधानासिद्धिमाह—"यदि पुन" इति, असत सज् जायत इति सौगत मत यद्यभ्युपेयेत तर्हि असद्=निरुपाख्यम्[7]—अनिर्वचनीयमभावरूप जगत्कारणमित्यापद्येत, तथाचैवविध कारण भावात्मकसुखादिरूपशब्दाद्यात्मक कथ स्याद्, न कथमपि स्यादित्यर्थ, तत्र हेतुमाह—"सदसतो" इति, भावाभावयोस्तादात्म्यस्यानुपपन्नत्वादित्यर्थ,

अत्राभेद एव तादात्म्यम्, अग्रिमनवमकारिकाया 'कार्यं कारणान्न भिन्नम्' इत्येव कार्य-कारणाभेदरूपतादात्म्यस्य विस्तरेण साधयिष्यमाणत्वाद्, योगभाष्यव्याख्याया तु 'अनुभव

---

१ यादृश=सुखाद्यात्मक, सुखाद्यात्मककार्यदर्शनेन कारणमपि सुखाद्यात्मकमेव सिद्ध भवति नत्वन्यादृशमित्यर्थ, एतच्च पूर्वत्र (३) इति पृष्ठे व्यक्तम्। २ तथा=सुखदु खमोहभेदवत्स्वरूपपरिणामशब्दाद्यात्मकमित्यर्थ। ३ तथा=तादृगन्वितकारणपूर्वकम्। ४ तथा चेद=सुखाद्यन्वित चेद् जगत्, तस्मात् तथा=सुखाद्यात्मककारणपूर्वकम्। ५ एतदग्रे व्यक्तम्। ६ शब्दाद्यात्मकत्वम्—इति 'त्वत्' प्रत्ययरहित इत्यर्थ। ७ उपाख्या=उपाख्यानम्—इदमेतादृगिति वर्णन, ततो निष्क्रान्त निरुपाख्यम्—अलक्षणत्वेन नि स्वभावत्वेन चेदन्तया वक्तुमशक्यमित्यर्थ। ८ पा ३ सू १३।

**अथैकस्य सतो विवर्तः शब्दादिप्रपञ्चः तथापि सतः सज्जायत इति न स्याद्, न चास्याद्वयस्य प्रपञ्चात्मकत्त्वम्, अपित्वप्रपञ्चस्य प्रपञ्चात्मकतया प्रतीतिर्भ्रम एव।**

**येषामपि कणभक्षाक्षचरणादीनां सत एव कारणादसतो जन्म तेषामपि सदसतोरेकत्वानुपपत्तेर्न कार्यात्मकं कारणम्, इति न तन्मते प्रधानसिद्धिः,**

---

एव हि धर्मिणो धर्मादीना भेदाभेदौ व्यवस्थापयति' इत्यादिग्रन्थेन 'ऐकान्तिके कार्यकारण योर्भेदे गवाश्ववत्कार्यकारणभावो न स्याद्, ऐकान्तिके चाभेद इदमस्य कार्यमिति व्यवहारो न स्याद्' इति बोधयन्नय मिश्रोऽविचारितभेदप्रतीतिसहकृताभेद एव कार्यकारणयोस्तादात्म्य मिति बोधयति, सर्वथापि न सदसतोस्तादात्म्यमिति बोध्यम्।

यथा बौद्धमतेऽसता कारणेन सह न सत्कार्यस्य तादात्म्यमेव वेदान्तिमतेऽपि सता कारणेन सह न भ्रममात्रशरीरस्यासत कार्यस्य तादात्म्यमिति न तन्मतेपि प्रधानसिद्धिरित्याह "अथैकस्य" इति।

तथापि=कारणस्य सद्रूपत्वेपि कार्यस्य गगनकुसुमकल्पत्वात् सत सज्जायत इति न स्यात्, तथा च नैतन्मतेपि कार्यात्मक कारणमिति सिद्ध्येत्, सदसतोस्तादात्म्यासम्भवादित्यर्थ,

ननु 'तदनन्यत्वम्' इति सूत्रेण भगवता व्यासेन (तस्मात्=कारणाद् अनन्यत्वम्=अन्यत्वाभाव-अभेद कार्यस्य) इत्येवं प्रतिपादनात् कथ न वेदान्तिमते कार्यकारणयोस्तादात्म्यमित्यत्राह-"न चाऽस्याऽद्वयस्य" इति,

अस्याद्वयस्य ब्रह्मण शब्दादिप्रपञ्चरूपेण परिणामित्व नचाभ्युपेयते वेदान्तिभिरपि तु 'अशब्दमस्पर्शम्' इत्यादिश्रुत्या शब्दादिप्रपञ्चशून्यस्य तस्य प्रपञ्चात्मकतया भान भ्रममात्र मिति मन्यत इत्यर्थ।

'तदनन्यत्वम्' इति सूत्रांशेन नाभेद उच्यते किन्तु (तस्मात्कारणाद् ब्रह्मण परमार्थतोऽनन्यत्व=व्यतिरेकेण कार्यस्याभाव) इत्येवं कार्यस्यासत्त्वं प्रतिपाद्यते 'आरम्भणशब्दादिभ्य' इति सूत्रशेषसूचितायां 'वाचारम्भण विकारो नामधेय मृत्तिकेत्येव सत्यम्' इति श्रुतौ कारणीभूतमृत्तिकाया एव सत्यत्वावधारणेन कार्यस्य घटादेर्मिथ्यात्वप्रतिपादनेन विवर्तवादाश्रयणादिति भाव।

तार्किकमतेपि न प्रधानसिद्धिरित्याह-"येषाम्" इति, कणभक्ष=वैशेषिकदर्शनकर्ता कणादमुनि, अक्षचरण=न्यायदर्शनकारो गोतममुनि, आदिना प्रशस्तपाद-वात्स्यायनादयो मुनयो ग्राह्याः,

---

१ मत इति शेष। २ धर्मिण=मृत्पिण्डादे सकाशाद् धर्मादीना=घटादीनाम्। ३ विचारे क्रियमाणे तु आम्राणा वनमित्यभेदेपि भेदव्यवहारादर्शनान्न व्यवहारबलेन कारणात् कार्यस्य भेद इत्याशयेनोक्तम्-'अविचारित' इति। ४ अ २ पा २। सू १४। आरम्भणशब्दादिभ्य इति सूत्रशेष। ५ शाङ्करभाष्यस्थोय पाठ। ६ कार्यस्य मिथ्यात्वप्रतिपादने हेतुमाह "आरम्भण" इत्यादिना। ७ वाचया केवलमारभ्यते विकारजात न तु तत्त्वतोस्ति, यतो नामधेयमात्रमेतद्, यथा राहो शिर इति विकल्पमात्र, तथाचावस्तुतया विकारजातमनृत, मृत्तिकेत्येव सत्यमित्यर्थ। ८ आदिना=उद्योतकराचार्या ग्राह्या।

अतः प्रधानसिद्ध्यर्थं प्रथमं तावत् सत्कार्यं प्रतिजानीते—"असदकरणाद्" इति,

**असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात्।**
**शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥ ९ ॥**

सत्कार्यं—'कारणव्यापारात्प्रागपि' इति शेषः, तथाच न सिद्धसाधनं नैयायिकतनयैरुद्भावनीयम्,

यद्यपि बीजमृत्पिण्डादिप्रध्वंसानन्तरमङ्कुरघटाद्युत्पत्तिरुपलभ्यते तथापि न प्रध्वंसस्य कारणत्वम्, अपि तु भावस्यैव बीजाद्यवयवस्य,

अभावात्तु भावोत्पत्तौ तस्य सर्वत्र सुलभत्वात्सर्वत्र सर्वकार्योत्पादप्रसङ्गः,

---

एवमन्यमते प्रधानासिद्धिं प्रदर्श्य साङ्ख्यमते तत्साधयितुं तत्सिद्ध्युपयोगिनं सत्कार्यवादं साधयन्ती कारिकामवतारयति—"अत" इति, यतः सत्कार्यवादातिरिक्तान्यवादे न प्रधानसिद्धिरत इत्यर्थः। प्रतिजानीते=अङ्गीकरोति।

ननु नैयायिकनयेपि कारणव्यापारादनन्तरं कार्यं सदेवेति सिद्धसाधनमेतद्, इत्यत आह—"कारणव्यापारात्प्रागपि" इति, अपिना—कारणव्यापारोत्तरमपि कार्यं सत्, तत्रोत्तरकाले कार्यसत्ताया न तार्किकवैमत्यमिति कारणव्यापारात्प्रागपि कारणे कार्यं विद्यत इत्यस्माभिः साधनीयमतो नैयायिकतनयैः=तनयवत् तदनुगामिभिरत्र सिद्धसाधनं न प्रदर्शनीयमित्यर्थः।

स्वमतस्याऽदुष्टत्वव्यवस्थापनायान्यमतानां दुष्टत्वं प्रतिपादयितुमादौ बौद्धमतस्य दुष्टत्वमाह "यद्यपि" इति।

यदि बीजादिनाशोत्तरमङ्कुराद्युत्पत्तिस्तर्हि कथं न नाशस्य कारणत्वमित्यत्राह—"तथापि न" इति, कस्य तर्हि कारणत्वमित्यत्राह "अपितु" इति, बीजावयवा एव कुतश्चिन्निमित्तात्प्रादुर्भूतक्रिया पूर्वव्यूहं[1] जहति व्यूहान्तरं चापद्यन्ते तस्माद् व्यूहान्तराच्चाङ्कुर उत्पद्यत इति बीजावयवस्यैव कारणत्वं नाभावस्येत्यर्थः,

एतच्च "न विनष्टेभ्योऽनिष्पत्ते"[2] इत्यादि न्यायसूत्रेषु स्फुटम्।

अभावाद् भावोत्पत्तौ को दोषस्तत्राह—"अभावात्तु भावोत्पत्तौ तस्य सर्वत्र सुलभत्वात् सर्वत्र सर्वकार्योत्पादप्रसङ्ग" इति,

तथाचाहुश्शङ्कराचार्याः[3]—(यद्यभावाद् भाव उत्पद्येत, अभावत्वाविशेषात्कारणविशेषाभ्युपगमोऽनर्थकः स्याद्, नहि बीजादीनामुपमृदितानां योऽभावस्तस्य च शशविषाणादीनां च निःस्वभावत्वाविशेषादभावत्वे कश्चिद् विशेषोऽस्ति[4] येन बीजादेवाङ्कुरो जायते क्षीरादेव दधीत्येवंजातीयकः कारणविशेषाभ्युपगमोऽर्थवान् स्याद्, निर्विशेषस्य त्वभावस्य कारणत्वाभ्युपगमे शशविषाणादिभ्योऽप्यङ्कुरादयो जायेरन्, नचैवं दृश्यते) इति,

---

१ व्यूहः—अवयवानां सन्निवेशविशेषः, २ अ ४ आ १ सू, १७। ३ 'नाऽसतोऽदृष्टत्वाद्' अ २। पा २ सू २६ इति सूत्रभाष्यं इति शेषः। ४ नह्यभावो विशिष्यते, विशेषणयोगे सोपि भावः स्यान्न निरुपाख्य इत्यर्थः।

इत्यादि न्यायवार्तिकतात्पर्यटीकायामभिहितमस्माभिः ।
प्रपञ्चप्रत्ययश्चासति बाधके न शक्यो मिथ्येति वदितुम्.

---

'यद् येनानन्वितं न तत् तस्य विकारो, यथा घटशरावोदञ्चनादयो हेम्नानन्विता न हेमविकारा, अनन्विताश्चैते विकारा अभावेन, तस्मान्नाभावविकारा, भावविकारास्तु ते, भावस्य तेनान्वितत्वाद्' इति भामत्यभिहिता युक्तिरप्यत्रावसेया,

'नह्यनन्वयविनष्टयो शालियवबीजयो कश्चिद् विशेषोस्ति येनैकस्माच्छाल्यङ्कुरो नान्यस्माद्' इत्यादिना तात्पर्यटीकायामपि स्पष्टमेतद्, इत्याशयेनाह "इत्यादि न्यायवार्तिकतात्पर्यटीकायाम्' इति, इत्यादि=एवंविध दूषणजातमित्यर्थ,

वेदान्तिमतमसङ्गतयितुमाह–'प्रपञ्चप्रत्ययश्च" इति, प्रत्यक्षादिप्रमाणसिद्धशब्दादिप्रपञ्चानुभवश्च मिथ्येति वदितु न शक्य इत्यर्थ ।

ननु–प्रतीयमानत्वात् प्रपञ्चस्य न मिथ्यात्वमित्यभिधानमसमीचीनम्, प्रतीयमानस्यापि शुक्तिरजतादेर्मिथ्यात्वस्य सर्वसम्प्रतिपन्नत्वाद्, इत्याशङ्कायामाह "असति बाधके" इति, दृढतरबाधकप्रमाणासन्निधाने सतीत्यर्थ ।

नेद रजतमित्युत्तरज्ञानरूपबाधकस्य सत्त्वाद् युक्त तत्र तत्प्रतीतेर्मिथ्यात्वमत्र तु न कोपि बाधक इति कथ मिथ्यात्वमिति भाव ।

ननु वाचारम्भणश्रुतिरेवात्र बाधिकेति चेद्, न, तस्या प्रपञ्चमिथ्यात्वप्रतिपादने तात्पर्याभावात्, कुत्र तर्हि तात्पर्यमिति चेच्छृणु–रलयोरभेदविवक्षयाऽऽरभ्यते=आलभ्यते–स्पृश्यत इत्यारम्भण बाहुलकात्कर्मणि ल्युट् ।

वाचा इति तृतीयान्तपद चात्राजहल्लक्षणया वाक्पूर्वकव्यवहारपरं, हेतौ चैषा तृतीया, हेतुत्व चात्र प्रयोजनतया न कारणत्वेन, तथा च वाक्पूर्वकेण 'अय घटोऽनेन घटेनोदकमाहर' इत्यादि व्यवहारेण हेतुना–एतादृग्व्यवहारसिद्ध्यर्थं विकार=पृथुबुध्नोदराकारत्वादिलक्षण सस्थानविशेष, तत्प्रयुक्त च घट इति नामधेयम् आरम्भणम्=मृद्द्रव्येण स्पृश्यते–उदकाहरणादिव्यवहारविशेषसिद्ध्यर्थं मृद्द्रव्यमेव सस्थानान्तरनामधेयान्तरभाग् भवतीति यावद्, अतो घटाद्यपि मृत्तिका=मृद्द्रव्यम् इत्येव सत्य=प्रमाणप्रतिपन्न नतु घटादिक द्रव्यान्तरमिति ।

कार्यस्य कारणात्मकत्वमेवानया श्रुत्या प्रतिपाद्यते न कार्यमिथ्यात्वमिति तत्त्वम् ।

अपि च=सामान्यतो ग्रहे रूपविशेषाग्रहे च तदन्यरूपेण विभ्रमो दृष्ट शुक्तिकादौ, न तु जातु शुक्तिरूप जानन् रजतमिति विपर्यस्यति, न च निरशे स्वसवेदनप्रत्यक्षे ब्रह्मणि तत्स्वरूपाग्रह सामान्यग्रहो वा भवतीति कथ निर्भागस्यैकस्य ब्रह्मणो विपरीतज्ञानगोचरत्वसम्भव इति न युक्तिमदेतन्मतमिति ।

---

१ अ ४ आ १ सू १८ । २ असङ्गत कर्तुम् । ३ आलम्भ स्पर्शहिसयोरिति नैघण्टुका । ४ वाचा=शब्देन, आरभ्यते=उत्पाद्यत इत्यर्थस्तु न युक्त, घटादेर्मृदाद्यारभ्यत्वेन शब्दोपादानकत्वाभावाद्, अत आरम्भणमत्रालम्भनमेवेत्यर्थ । ५ 'कृत्यल्युटो बहुलम्' इति सूत्रेणेत्यर्थ । ६ एषा=वाचा इति । ७ अनेन वसतीतीव प्रयोजनार्थेऽत्र तृतीयेत्यर्थ । ८ यदि मृत्तिकैव सत्य न तु घटादिकमित्यर्थोऽभिमतो भवेत् 'तदा मृत्तिका सत्या' इति समानाधिकरण प्रयुक्त स्यात् तथा प्रयोगाभावाच्च नासावर्थ इत्याशयेन सत्यमित्यस्यार्थमाह–"प्रमाणप्रतिपन्नम्" इति ।

इति कणभक्षाक्षचरणमतमवशिष्यते,

तत्रेदं प्रतिज्ञातं—"सत् कार्यम्" इति,

तत्र हेतुमाह—"असदकरणाद्" इति,

असच्चेत् कारणव्यापारात्पूर्वं कार्यं नास्य सत्त्वं कर्तुं केनापि शक्यं, नहि नीलं शिल्पिसहस्रेणापि पीतं कर्तुं शक्यते,

सदसत्त्वे घटस्य धर्माविति चेत्, तथाप्यसति धर्मिणि न तस्य धर्म इति सत्त्वं तदवस्थमेव, तथा च नाऽसत्त्वम्।

---

इत्थं मतद्वयनिरासमभिधायेदानीं परिशिष्टं तार्किकमतं निरसनीयमित्याह 'इति कणभक्षाक्षचरणमतमेवाऽवशिष्यत' इति, यतो [२]मतद्वयमुक्तप्रकारेणासङ्गतम् इति=अतः तन्निरासे वक्तव्यत्वाभावात्केवलं कणादादिमतमेव निरसनीयत्वेन परिशिष्यत इत्यर्थः।

तद्व्यवशेषाभावाय तदपि निरस्यतामित्याकाङ्क्षायां मूलकारिकाकृतेत्र तन्म[३]तस्य सविस्तरं निरस्यमानत्वान्न तन्मया निरस्यत इत्याह—"तत्रेदम्प्रतिज्ञातम्" इति,

तत्र[४]=तत्कणादादिमतनिरासार्थं, प्रतिज्ञातं=साध्यविशिष्टपक्षनिर्देशात्मकं प्रतिज्ञावाक्यमभिहितं, मूलकृतेति शेषः,

ननु न प्रतिज्ञामात्रेणार्थसिद्धिरित्यत्राह—"तत्र हेतुमाह" इति,

ननु पक्षधर्मत्वाभावात्कथमस्य[५] हेतुत्वमिति चेत्, कार्यं सत् करणात्=क्रियमाणत्वाद् यन्न सत् तन्न क्रियमाणं यथा नीले पीतं नरविषाणं वा इति शेषवदनुमानप्रयोगे हेतूपयोगिव्यतिरेकव्याप्तिस्वरूपोपदर्शकत्वेनास्य हेतुत्वमिति गृहाण,

एतदभिप्रायेणैव व्यतिरेकव्याप्तिस्वरूपं स्पष्टयन् तस्यार्थमाह "असच्चेद्" इति।

ननु न वयं नरविषाणवदसत्स्वभावं विकारजातमिति मन्यामहे येन तद्व[६]न्न क्रियेतेत्यनुयुज्येतापि तु सन् घटोऽसन्[७] घट इत्यादिव्यवहारान्यथानुपपत्त्या सदसत्त्वे विकारजातस्य धर्मौ ते[८] च स्वकारणाधीनलब्धजन्मतया कदाचिदेव भवत इत्यङ्गीकुर्महे, तथा च यथा घटे पाकात्पूर्वं श्यामता पाकानन्तरं च रक्तता तथोत्पत्तेः प्राग्घटस्याऽसत्त्वं धर्मः पश्चाच्च तस्य सत्त्वं धर्म इति न कोपि दोष इत्याशयेन शङ्कते—"सदसत्त्वे" इति,

यदि त[९]योर्धर्मत्वं तर्हि धर्मिरूपं वस्तु दण्डायमानं सदातनमिति न कस्यचित् त[१०]द् विकार इत्यापद्येत, अथासत्त्वसमये तन्नास्ति तर्हि कस्य धर्मोऽसत्त्वं, नह्यविद्यमाने धर्मिणि तद्धर्मो विद्यमान इत्युपपद्यत इत्याशयेनाशङ्कां निरस्यति—"तथापि" इति, सदसत्त्वयोर्धर्मत्वाङ्गीकारेपीत्यर्थः।

---

१ 'शक्यं पीतं कर्तुम्' इति पाठान्तरम्। २ मतद्वयं=सौगतवेदान्तिनोर्मतमित्यर्थः। ३ कणादादिमतस्य। ४ तत्रेति निमित्ते सप्तमी। ५ असदकरणादित्यस्य। ६ तद्वद्=नरविषाणवन्नोत्पद्येतेत्येवमाक्षिप्येत। ७ मृत्पिण्डदशायां घटोऽसन्निति व्यवहारः। ८ ते च=सदसत्त्वे च। ९ तयोः=सदसत्त्वयोः। १० तद्=धर्मिरूपं वस्तु।

**असंबद्धेनातदात्मना चासत्त्वेन कथमसन् घटः।**
**तस्मात्कारणव्यापारादूर्ध्वमिव ततः प्रागपि सदेव कार्यमिति।**
**कारणाच्चास्य सतोऽभिव्यक्तिरेवावशिष्यते,**

---

यतो धर्मिसत्त्व विना धर्मसत्त्वमनुपपन्नम् इति=अत सत्त्व तदवस्थ=उत्पत्त. प्रागपि कार्यस्य सत्त्व स्थित, तथा च न भवदभिमत कार्यस्यासत्त्व सिद्धमित्यर्थ ।

किञ्च–उत्पत्ते प्राग् घटोऽसन्नित्यभिधानमपि त्वन्मते न सघटत इत्याह "असबद्धेन" इति धर्मिणा सहासबद्धेन असत्त्वेन=असत्त्वरूपधर्मेण[1] कथमसन् घट =असत्त्वरूपधर्माश्रयो घट इत्यभिधान कथ, तथा–अतदात्मना=अतत्स्वरूपेण धर्मिस्वरूपतयाऽविद्यमानेन चाऽसत्त्वेन कथमसन् घट इति न कथमपीत्यर्थ ।

अत्रेद बोध्य–तार्किकमते नील कमलमित्यादौ गुणिरूपधर्मिणि समवायादिसंबन्धेन नील-गुणरूपधर्मस्य संबद्धत्वमादायाश्रयाश्रयिभावप्रतीति, साङ्ख्यादिनये तु धर्मधर्मिणोरभेदाद् धर्मिस्वरूपमेव धर्म इति तदात्मतया तत्प्रतीति[2], तत्र 'असबद्धेनासत्त्वेन' इति कथन तार्किक-मताभिप्रायम्, 'अतदात्मना चासत्त्वेन' इति प्रकृतमताभिप्रायमिति[3] ।

धर्मिसबद्धेन धर्म्यात्मना वा विद्यमानेन धर्मेणैव तदाश्रयत्वनियमात्त्वासबद्धेनातदात्मना वासत्त्वेन धर्मेण तदाश्रयत्वसम्भव इति तत्त्वम्,

फलितमाह "तस्माद्" इति,

नन्वेव सति[4] किमपरमवशिष्यते यत् कुलालादिव्यापारेण साध्य, न च घटादिस्वरूप-सिद्ध्यर्थ स[5] इति वाच्य भवन्मते, तस्य प्रागेव सिद्धत्वात्, तथा च यथा प्राक्सिद्धत्वान्मृ-त्पिण्डादे कारणस्य स्वरूपसिद्धये न कश्चिद् व्याप्रियते तथा प्राक् सिद्धत्वात्कार्यस्वरूपस्य तत्प्रसिद्धयेपि न कश्चिद् व्याप्रियेत व्याप्रियते च, अत कारकव्यापारस्यार्थवत्त्वाय मन्यामहे प्रागुत्पत्तेरभावः कार्यस्येत्याशङ्क्य कारकव्यापारस्यार्थवत्त्वमाह–"कारणाच्चास्य" इति,

चकार पुनरर्थे, अस्य सत=कारणव्यापारात्प्रागपि व्यवहारायोग्यसूक्ष्मरूपेण[6] सिद्धस्य कार्यस्य या व्यवहारयोग्यस्थूलरूपापादनरूपाभिव्यक्ति सा पुन कारणात्=कुलालादिव्यापा-राद्भवति, इत्येवमभिव्यक्तिरेव साध्यत्वेनावशिष्यते नोत्पत्तिरित्यर्थ ।

पृथुबुध्नोदरादिकार्याकारेण कारणं व्यवस्थापयत, कारकव्यापारस्य न वैयर्थ्यमिति न तद्बलेनासत्कार्यवादसिद्धिरिति[7] भाव ।

---

१ असबद्धमसत्त्वरूपधर्ममादायेत्यर्थ । २ तत्प्रतीति =आश्रयाश्रयिभावप्रतीति । ३ यथा नील कमलमित्यस्य नीलगुणरूपधर्माश्रय कमलमित्यर्थस्तथाऽसन् घट इत्यस्यापि असत्त्वधर्मा-श्रयो घट इत्यर्थो वाच्य, स चानुपपन्न कमलेन सह नीलस्येवासता घटेन सहासत्त्वरूपधर्म-स्यासबद्धत्वादिति भाव । ४ उत्पत्ते प्रागपि कार्यस्य सत्त्वे सति। ५ स=कारकव्यापार । ६ व्यवहार =उदकाहरणादिकार्यविशेष । ७ तद्बलेन=कारकव्यापारसद्भावबलेन ।

सतश्चाभिव्यक्तिरुपपन्ना, यथा पीडनेन तिलेषु तैलस्य, अवघातेन धान्येषु तण्डुलानां, दोहनेन सौरभेयीषु पयसः,

असतः करणे तु न निदर्शनं किञ्चिदस्ति, न खल्वभिव्यज्यमानं चोत्पद्यमानं वा क्वचिदसद् दृष्टम् ।

इतश्च कारणव्यापारात्प्राक् सदेव कार्यम् 'उपादानग्रहणाद्'–उपादानानि=कारणानि तेषां ग्रहणं=कार्येण संबन्धः, उपादानैः कार्यस्य संबन्धादिति यावद् ।

एतदुक्तं भवति–कार्येण सबद्धं कारणं कार्यस्य जनकं, संबन्धश्च कार्यस्याऽसतो न संभवति तस्मात् सदिति ।

---

असदेव कार्यं तस्मात्[१] कुतो नाभिव्यज्यत इत्यत्राह "सतश्च" इति, पूर्वं सत एव वस्तुनाऽभिव्यक्तिर्युक्ता नत्वसत इत्यर्थ ।

तत्र[२] दृष्टान्तानाह "यथा पीडनेन" इति, तैलस्य–तण्डुलानाम्–पयस–इति षष्ठ्यन्तत्रयस्याऽनुषक्तेन[३] 'अभिव्यक्ति' इत्यनेनान्वय ।

सौरभेयीषु=सुरभेरपत्यभूतासु, गोषु इत्यर्थ,

असतोऽभिव्यक्तौ तु न कोपि दृष्टान्त इत्याह "असत" इति, करणे=अभिव्यक्तौ, निदर्शन=दृष्टान्त ।

एतदेव स्पष्टयति–"न खलु" इति, खलु इत्यवधारणार्थ, यद् वस्तु असत् तद् अभिव्यज्यमान त्वन्मते चोत्पद्यमानं वा क्वचिदपि नैव दृष्टमित्यर्थ, एतेन "नासदुत्पादो नृश्रृङ्गवद्" इति साङ्ख्यसूत्रं[४] व्याख्यातमिति बोध्यम् ।

यदि नरविषाणमपि कारकव्यापारादूर्ध्वं व्यक्तमभविष्यत् तदासत्कार्यमपि कारकव्यापारादूर्ध्वं व्यक्त भविष्यति इतीदमप्युपापत्स्यत[५] तच्चा[६]नुपपन्नमित्यसत्कार्यभवनमप्यनुपपन्नमिति भाव ।

कार्यस्य सत्त्वे हेत्वन्तरमवतारयति "इतश्च" इति, इतश्च=वक्ष्यमाणहेतोरपीत्यर्थ ।

फलितमाह–"उपादानै कार्यस्य सबन्धाद्" इति,

एतेन–'कार्यम् उपादाने सद् उपादानेन सह सबद्धत्वाद् यद् यत्र[७] न सद् न तत् तेन सबद्ध यथा मृत्तिकया पटादिकम्' इत्यनुमानमत्र दर्शितम् ।

एतस्मिन्ननुमाने हेतोर्[८]दुष्टत्व स्पष्टयितुमाह "एतदुक्त भवति" इत्यादिना,

'कार्येण संबद्धमेव कारण कार्यजनकम्' इत्युक्त्या उत्पत्ते प्राक् कार्यम् उपादानसबद्ध तज्जन्यत्वाद् यच्च नोपादानसंबद्ध न तत्[९] तज्जन्यं यथा मृद पटादिकम् इत्यनुमानमत्र सूचितमिति ज्ञेयम् ।

---

१ तस्मात्=कारणव्यापाराद्, २ तत्र=सतोभिव्यक्तौ । ३ अनुषक्तेन=पूर्वस्मादनुवृत्तेन । ४ अ १ सू ११४ । ५ उपपन्नमभविष्यत् । ६ तच्च=नरविषाणभवन च । ७ यत्र=यस्मिन्नुपादाने । ८ हेतो =उपादानसबद्धत्वादिति हेतोरित्यर्थ । ९ तत् कार्यं कार्यासबद्धोपादानेन जन्य न भवतीत्यर्थ ।

स्यादेतद्-असंबद्धमेव कारणैः कस्मात् कार्यं न जन्यते तथा चासदेवोत्पत्स्यतेऽत आह "सर्वसम्भवाभावाद्" इति, असंबद्धस्य जन्यत्वे असंबद्धत्वाविशेषेण सर्वं कार्यजातं सर्वस्माद् भवेद्, नचैतदस्ति, तस्मान्नासंबद्धमसंबद्धेन जन्यतेऽपि तु संबद्धं संबद्धेन जन्यत इति,

यथाहुः साङ्ख्यवृद्धाः-"असत्त्वे नास्ति संबन्धः कारणैः सत्त्वसङ्गिभिः, असंबद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः" इति,

स्यादेतद्-असंबद्धमपि सत् तदेव करोति यत्र यत्कारणं शक्तं, शक्तिश्च कारणस्य कार्यदर्शनादवगम्यते, तेन नाव्यवस्थेत्यत आह-"शक्तस्य शक्यकरणाद्" इति।

---

एतस्मिन्ननुमाने विपक्षे बाधकाभावमाशङ्कते-"स्यादेतद्" इत्यादिना,

विपक्षबाधकानुकूलतर्कप्रदर्शनपरं 'सर्वसम्भवाभावाद्' इति हेतुपदं व्याचष्टे "असंबद्धस्य जन्यत्वे" इति, स्पष्टार्थोऽयं ग्रन्थः,

स्वोक्तार्थे वृद्धसम्मतिमाह-"यथाहुः" इति, असत्त्वे=कार्यस्योत्पत्तेः प्रागविद्यमानत्वे सति तेषां कार्याणां सत्त्वसङ्गिभिः=सत्त्वधर्माश्रयैः कारणैः सह संबन्धो न स्यात्, सदसतोः संबन्धानुपपत्तेः, कारणैरसंबद्धस्य च कार्यस्योत्पत्तिमिच्छतो मते, व्यवस्थितिः=मृद एव घटः कनकादेव कटकमित्येवंविधो नियमो न स्यादिति वृद्धोक्तेरर्थः,

घटपटाद्यर्थिभिर्नरैः प्रतिनियतानि मृत्तन्त्वादीनि कारणानि गृह्यमाणानि लोके दृश्यन्ते, नहि घटार्थिना तन्तवो गृह्यन्ते नापि पटार्थिना मृदुपादीयते, तदेतन्नियतोपादानग्रहणमसत्कार्यवादे नोपपद्यते, समाने हि सर्वत्र सर्वस्य कार्यस्याऽसत्त्वे सर्वं सर्वस्मादुत्पद्येतेति प्रतिनियतोपादानग्रहणं नोपपद्येत, तथा च प्रतिनियतोपादानग्रहणात् सर्वस्मात् सर्वोत्पत्त्यदर्शनाच्च नासत्कार्यमिति भावः।

एतेन 'उपादाननियमात्' 'सर्वत्र सर्वदा सर्वासम्भवाद्' इति साङ्ख्यसूत्रद्वयं व्याख्यातमिति ज्ञेयम्।

कारणसंबद्धमेव कार्यं कार्यसंबद्धेन कारणेन जन्यते न त्वसंबद्धमसंबद्धेनान्यथाऽव्यवस्थेत्युक्तिमसृष्यमाणोऽसत्कार्यवादी शङ्कते "स्यादेतद् असंबद्धमपि" इत्यादिना,

कार्येणासंबद्धमपि सत्कारणं तदेव कार्यं करोति यस्मिन् कार्ये यत्कारणं शक्तं=शक्तियुक्तं न सर्वमित्यर्थः।

शक्तौ प्रमाणमाह-"शक्तिश्च" इति, कार्यनियामकः कश्चिदतिशयविशेषः-सामर्थ्यविशेषो वा शक्तिः, सा च कार्यदर्शनाद्=मृद एव घटस्तन्तुभ्य एव च पट इति प्रतिनियतकार्योत्पत्त्यन्यथानुपपत्तिज्ञानाद्, अवगम्यते=अनुमीयत इत्यर्थः,

---

१ 'तज्जन्यत्वाद्'इति हेतुरस्तु 'उपादानसंबद्धम्' इति साध्यं माभूदित्येवंविधे विपक्ष इत्यर्थः। २ 'उपादानग्रहणात्,' 'सर्वसम्भवाभावाद्' इत्यनयोरभिप्रायान्तरमाह-"घटपटाद्यर्थिभिः" इति। ३ प्रतिनियतोपादानग्रहणान्यथानुपपत्त्या कार्यं सदित्यर्थः, अनुपपन्नत्वे हेतुमाह "समाने हि" इति। ४ अ १ सू ११५।११६। ५ अमृष्यमाणः=असहमानः।

सा शक्तिः शक्तकारणाश्रया सर्वत्र वा स्यात् शक्य एव वा, सर्वत्र चेत्, तदवस्थैवाव्यवस्था, शक्ये चेद् कथमसति शक्ये तत्र इति वक्तव्यम्,

शक्तिभेद एव स तादृशो यतः किञ्चिदेव कार्यं जनयेन्न सर्वमिति चेद्, हन्त भोः स शक्तिविशेषः कार्यसंबद्धो वासबद्धो वा, संबद्धत्वे नासता सबन्ध इति सत्कार्यम्, असबद्धत्वे सैवाव्यवस्था, इति सुष्ठूक्तं—"शक्तस्य शक्यकरणाद्" इति,

---

मूलमवतार्य तद्योजनेनाशङ्कां परिहर्तुं विकल्पयति, "सा शक्ति" इति,

शक्तकारणाश्रया=कार्यजननशक्तिमति कारणे वर्तमाना या शक्ति सा कि सर्वत्र=सर्वकार्यविषया-सर्वकार्यनिरूपिता वा स्याद्, उत शक्ये=यदुत्पादयितु शक्य कार्यं तद्विषया तन्निरूपितैव वा स्यात्, सर्वत्र चेत्, तर्हि सर्वं सर्वस्मात्सभवेदिति पूर्वोक्ताव्यवस्था तदवस्थैव भवेद्, शक्य एव सा शक्तिरिति चेत्, तर्हि अविद्यमाने शक्ये तत्र=तद्विषया तन्निरूपिता वा शक्तिरिति कथ वक्तव्य स्याद् न कथमपि वक्तुमर्हम्, असतो विषयत्वाभावाद्, निरूपकत्वासभवाच्चेत्यर्थ।

सतोरेव विषयविषयिभावसबन्धो निरूप्यनिरूपकभावसबन्धो वा न सदसतोरिति भाव,

शक्तिरपि कार्यसबद्धेव कार्य जनयेन्नासबद्धेति सिद्धान्त्याशयमजानानस्तार्किक पुनरपि रेकते "शक्तिभेद एव" इति,

सिद्धान्ती प्राह—"हन्त भो" इति, हन्त—इति हर्षार्थकमव्ययम्, अन्यत् स्पष्टम्।

उपसहरति—'इति सुष्ठूक्त 'शक्तस्य शक्यकरणाद्' इति, यत शक्त कारण शक्तिसंबद्धमेव शक्य करोति नासबद्धम् इति=अत शोभनमभिहित कारिकाकृता 'शक्तस्य शक्यकरणाद्' इतीत्यर्थः,

कारणे तदात्मना वर्तमाना कार्यस्याव्याकृतावस्थारूपाऽनागतावस्थैव कार्यनियामिका शक्ति, तया सबद्ध कार्यं च शक्यमित्यनागतावस्थावत्त्वेन कारणे कार्यस्य सत्त्वान्न कार्यस्यासत्त्वमिति तत्त्वम्—

तथा चाहु शङ्कराचार्यो—"शक्तिश्च कारणस्य कार्यनियमार्था कल्प्यमाना नाऽन्याऽसती वा कार्यं नियच्छेद्, असत्त्वाविशेषादन्यत्वाविशेषाच्च, तस्मात्कारणस्यात्मभूता शक्ति शक्त श्चात्मभूतं कार्यम्" इति,

---

१ मूल='शक्तस्य शक्यकरणाद्' इत्याकार कारिकाभागमित्यर्थ। २ सर्वत्रेति सप्तमी विषयार्था। ३ रेकते=शङ्कते। ४ हर्षश्च—स्वमत स्थापयितु तार्किकोऽशक्त इति सिद्ध समीहितमित्येतावताऽत्र बोध्य। ५ कार्यशक्तिमत्त्वमेवोपादानकारणत्वम्, अन्यस्य दुर्वचत्वाद्, लाघवाच्च, सा शक्ति कार्यस्यानागतावस्थैवेत्यत शक्तस्य शक्यकार्यकरणान्नासत उत्पाद इत्यर्थ, इत्येतत्स मानानुपूर्वीकसाङ्ख्यसूत्रे विज्ञानभिक्षव। ६ अ २ पा १ सू १८ इति ब्रह्मसूत्रभाष्ये। ७ कार्यकारणाभ्यामन्या कार्यवदसती वा शक्ति कार्यं न नियच्छेत्=कार्यनियामिका न सभवेद्, अन्यत्त्वासत्त्वयो शक्तावन्यत्र चाविशेषाद्, यस्य कस्य चिदन्यस्य नरविषाणादेर्वा नियामकत्वप्रसङ्गाद्, अत कारणस्यात्मभूता=कारणादभिन्ना शक्तिरुपेया शक्तेश्चात्मभूत कार्यमुपेय, कारणेऽव्यक्ततया स्थित कार्यं कार्यस्यानागतावस्थैव वाऽभिव्यक्तिनियामकतया शक्तिर्न ततोऽन्या काचित् शक्तिरिति यावद्।

इतश्च सत्कार्यमित्याह–"कारणभावाच्च"=कार्यस्य कारणात्मकत्वाद्,नहि कारणाद् भिन्नं कार्यं,कारणं च सद् इति कथं तदभिन्नं कार्यमसद्भवेत् ।

कार्यस्य कारणाभेदसाधनानि च प्रमाणानि–'न पटस्तन्तुभ्यो भिद्यते तद्धर्मत्वाद्–इह यद् यतो भिद्यते तत् तस्य धर्मो न भवति यथा गौरश्वस्य–धर्मश्च पटस्तन्तूना–तस्मान्नार्थान्तरम् ।

---

यदपि–'प्रागभाव कार्यनियामक इति नाव्यवस्था' इति मत, तदपि न पेशलम्, अभावे विशेषाभावेन तन्तौ घटादेरपि प्रागभावापत्तेर्दोषतादवस्थ्याद्, नच पटप्रतियोगिक पटनिरूपितो वा प्रागभाव पटोत्पत्तिनियामक इति विशेष इति वाच्यम् । असत पटादे प्रतियोगित्वनिरूपकत्वादिधर्मासभवात्, सदसतोस्सम्बन्धानुपपत्तेरिति । किञ्च– उत्पत्ते प्राक् कार्यस्यासत्वे घट उत्पद्यत इत्यभिधानमप्यनुपपन्नं स्याद्, उत्पत्ते क्रियात्वेन क्रियायाश्च सकर्तृकत्वनियमेन कर्तुरसत्त्वे निराश्रयायाः क्रियाया असम्भवाद्, जनिकर्तुर्जने प्राक् सत्त्वस्यावश्यकत्वाद्, अपि च कार्यस्यासत्त्वे योगिनामनागतादिज्ञान न स्यादिति, अधिकमन्यतोऽवसेयम्,

'सदेव सोम्येदमग्रआसीत्' 'तद्धेद तर्ह्यव्याकृतमासीद्' इत्याद्या आगमा अप्यत्रानुसन्धेया

हेत्वन्तरमवतारयति–"इतश्च" इति,

'कार्यस्य कारणाभेदसाधनानि च प्रमाणानि'–मयाऽभिधीयन्त इति शेष ,

कानि तानीत्याकाङ्क्षाया परिशेषानुमानरूपप्रमाणप्रयोगानाह "न पटस्तन्तुभ्यो भिद्यत" इत्यादिना, प्रतिज्ञावाक्यमभिधाय हेतुवाक्यमाह–"तद्धर्मत्वाद्" इति, तेषां तन्तूनां धर्मत्वात्–तदवस्थाविशेषात्मत्वादित्यर्थ ।

व्यतिरेकव्याप्तिं दर्शयन्नुदाहरणवाक्यमाह–"इह यद् यत" इत्यादिना, तथा च व्यापकस्य तद्धर्मत्वाभावस्य पटे निवृत्त्या व्याप्यस्य भेदस्य निवृत्त्याभेदसिद्धिरिति,

पक्षे तद्धर्मत्वरूपहेतुसत्त्वप्रदर्शनपरमुपनयवाक्यमाह–'धर्मश्च पटस्तन्तूनाम्" इति,

निगमनवाक्यमाह "तस्मान्नार्थान्तरम्" इति, अन्योऽर्थ =पदार्थोऽथान्तरं तन्न, पटस्तन्तुभ्योऽन्यपदार्थो नेत्यर्थ , एवमग्रेपि न्यायाङ्गानि योज्यानि

---

१ यत्र कारणे यस्य प्रागभावस्तत्कारण तस्य जनकमित्यर्थ । २ पेशल=सुन्दरम् । ३ यदि पुनरभावस्यापि विशेषोऽभ्युपगम्येतोत्पलादीनामिव नीलत्वादिस्ततो विशेषवत्त्वादेवाभावस्योत्पलादिवद् भावत्व प्रसज्येतेत्यर्थ । ४ तन्त्वनुत्पाददशाया पटप्रागभाव कुत्र वर्तत इत्यपि प्रष्टव्योसौ, नच काले वर्तत इति वाच्यम्, अभावे क्रियाभावेन तन्तावागमनासम्भवादित्यपि ज्ञेयम् । ५ क्रिया च नाम स्यादकर्तृका चेति विप्रतिषिद्धमिति भाव । ६ योगिना ज्ञानं हि प्रत्यक्षात्मक तच्च विद्यमानालम्बनमसत्यालम्बने किं विषय, तत्स्यादिति भाव । ७अन्यत =बृहदारण्यकप्रथमाध्यायद्वितीयब्राह्मणगतशाङ्करभाष्याद्, ब्रह्मसूत्रीयद्वितीयाध्यायाद्यपादस्थ १६।१७। १८।१९।२० इत्यादिसूत्रस्थभाष्याच्चेत्यर्थ । ८ अग्रे=सृष्टे प्राग् इद दृश्यमान जगत् सदेवासीन्नासद्, इति छान्दोग्यश्रुतेरर्थ , इद=स्पष्टनामरूप यज्जगत् तत् तर्हि=सृष्टे =प्राग् अव्याकृत=अनभिव्यक्तमासीद्, ह इत्यवधारणे, इति बृहदारण्यकश्रुतेरर्थ । ९ न्यायो नाम प्रतिज्ञाद्यवयवसमुदाय ।

उपादानोपादेयभावाच्च नार्थान्तरत्वं तन्तुपटयोः—ययोरर्थान्तरत्वं न तयोरुपादानोपादेयभावो यथा घटपटयोः—उपादानोपादेयभावश्च तन्तुपटयोः—तस्मान्नार्थान्तरत्वमिति,

इतश्च नार्थान्तरत्वं तन्तुपटयोः संयोगाप्राप्त्यभावाद्—अर्थान्तरत्वे हि संयोगो दृष्टो यथा कुण्डबदरयोः—अप्राप्तिर्वा यथा हिमवद्विन्ध्ययोः—नचेह संयोगाप्राप्ती, तस्मान्नार्थान्तरत्वमिति,

इतश्च पटस्तन्तुभ्यो न भिद्यते—गुरुत्वान्तरकार्याग्रहणाद्—इह यद् यस्माद् भिन्नं तस्मात् तस्य गुरुत्वान्तरकार्यं गृह्यते यथैकपलिकस्य स्वस्तिकस्य यो गुरुत्वकार्योऽवनतिविशेषस्तस्माद् द्विपलिकस्य स्वस्तिकस्य गुरुत्वकार्योऽवनतिभेदोऽधिकः—न च तथा तन्तुगुरुत्वकार्यात् पटगुरुत्वकार्यान्तरं दृश्यते—तस्मादभिन्नस्तन्तुभ्यः पट इति,

---

प्रयोगान्तरमाह—"उपादानोपादेयभावाच्च" इति,

उपादीयते=कार्यजननाय गृह्यते यत् तदुपादानं=कार्यीयानागतावस्थाश्रयीभूतं कारणम्, उपादेयं=व्यवहारार्थिभिर्ग्रहीतुं योग्यं कार्यमित्यर्थः, 'संयोगाप्राप्त्यभावाद्' इति। अप्राप्तिः=विभागः, एवं च संयोगानाश्रितत्वाद्, विभागानाश्रितत्वाच्चेति हेतुद्वयमत्र बोध्यम्।

'अप्राप्तिर्वा'—अत्र दृष्टा—इति विपरिणमय्य[1] योजनीयम्, 'नचेह संयोगाप्राप्ती'—दृश्येते इति शेषः, धर्मधर्मिणोरभेदस्येष्टत्वान्न[2] गुणेषु व्यभिचार इत्यपि ज्ञेयम्।

'गुरुत्वान्तरकार्याग्रहणाद्' इति,—"[3]जलभूम्योः पतनकर्मकारणम्" इतिलक्षितं पदार्थनिष्ठधर्मविशेषो गुरुत्वं, तन्तुनिष्ठगुरुत्वापेक्षयान्यद्गुरुत्वं गुरुत्वान्तरं—तस्य यत्कार्यम्=अधःपतनविशेषावनतिरूपं तस्य पटेऽग्रहणादित्यर्थः।

अयं भावः—तुलादण्डकोणद्वयनिबद्धरज्ज्वालम्बनं यच्छिक्यद्वयमस्ति तत्रैकत्र गुञ्जादि धृत्वाऽपरत्र शिक्ये तोलनीयं वस्त्ववस्थाप्यते, तत्र यदि गुञ्जादिनिष्ठगुरुत्वेन समं गुरुत्वं तोलनीये भवति तदा तुलादण्डो नाप्युन्नतो नाप्यवनतो वा भवति, यदा तु गुञ्जाद्याश्रितगुरुत्वापेक्षयाऽधिकं गुरुत्वं तोलनीये भवति तदा तदाश्रितगुरुत्वकार्यावनतिविशेषणाधिकस्तुलादण्डोऽवनतो भवति, तथा च यदि पटस्तन्तुभ्यो भिन्नो भवेत् तदा तन्तुगुरुत्वकार्यापेक्षयाधिकः पटाश्रितगुरुत्वकार्योऽवनतिविशेषो गृह्येत तथा च न गृह्यते किन्तु तन्तुगुरुत्वेन यादृशोऽवनतिविशेषो जन्यः तादृश एव पटाश्रितगुरुत्वेनावनतिविशेषो जन्यते, तथा च समानगुरुत्ववत्त्वान्न पटस्तन्तुभ्यो भिन्न इति।

---

१ दृष्ट इति पुल्लिङ्गपदं स्त्रीत्वेन विपरिणेयम्। २ तन्तुरूपादेरपि संयोगविभागादर्शनाद् रूपादेरपि तन्तुभ्यो भेदो न स्यादित्यत्राह—"धर्मधर्मिणो" इति। ३ प्रशस्तपादीयमिदं वाक्यं, तत्र जलभूम्योरित्याश्रयकथनं, पतनकर्मकारणमिति गुरुत्वस्य कार्यकथनम्। ४ तच्छब्देन परिच्छेद्यद्रव्यं ग्राह्यम्।

**तान्येतान्यभेदसाधनान्यवीतानि,**

**एवमभेदे सिद्धे तन्तव एव तेन तेन संस्थानभेदेन परिणताः पटो न तन्तुभ्योऽर्थान्तरं पटः,**

---

यद्यपि 'गुरुत्वान्तराग्रहणात्' 'समानगुरुत्ववत्त्वाद्' इति वा हेतुस्सम्भवति तथापि 'अप्रत्यक्ष पतनकर्मानुमेयम्' इत्युक्तेरतीन्द्रियत्वेन गुरुत्वस्य प्रत्यक्षेण ग्रहणासम्भवात्पतनकार्यानुमेय तदित्याशयेन कार्यपर्यन्तानुधावनम्।

तत्र व्यतिरेकिदृष्टान्तमाह—"यथैकपलिकस्य" इति, अशीतिरक्तिकाया एक तोलकं, तोलकचतुष्टयं चैक पल, तत्परिमितसुवर्णनिर्मितस्य स्वस्तिकाख्यभूषणविशेषस्येत्यर्थ,

'तन्तुगुरुत्वकार्याद्'=तन्तुनिष्ठगुरुत्वजन्यावनतिविशेषादन्यदवनमन पटे न दृश्यत इत्यर्थ।

तन्तुपटयोस्तादात्म्यात् तन्तुगुरुत्वेनैव पटे पतनकर्मेत्यपि ज्ञेयम्।

एतेन यदत्र कन्दलीकृताभिहितम्—'पटे गुरुत्वान्तराभावे तस्य पतन न स्याद्' इति, तन्निराकृतं, तन्तुगुरुत्वेनैव तत्तादात्म्यापन्नपटस्य पतनसम्भवाद् इति।

अत्र केचिद्—पटस्तन्तुभ्यो न भिद्यते गुरुत्वान्तरप्रयुक्तस्वाश्रिततुलादण्डाद्यवनतिविशेषग्रहणायोग्यत्वाद् गुरुत्वान्तरयुक्तस्वर्णादिवद्, तुल्यगुरुत्वयुक्ते पदार्थद्वये व्यभिचारवारणाय ग्रहणायोग्यत्वाद् इत्युक्त, तस्य च पृथक् तुलादण्डारोपणेऽवनत्यन्तरस्य ग्रहणसम्भवात्, तन्तुपटयोश्च न तथासम्भव इत्याहु।

एते चानुमानप्रयोगा "अर्थान्तरम्—अर्थान्तरस्यावयवो न भवति यथा न गौरश्वस्यावयव—अवयवाश्च तन्तवोऽवयवी च पट—तस्मान्नासौ तेभ्योऽर्थान्तरम्" इत्यादिना न्यायवार्तिके विस्तरेण विचारिता इति तत्रैवोत्कण्ठा शमनीया।

'अस्य च व्यतिरेकिण उदाहरणमग्रेऽभिधास्यते' इति यत्पूर्वम्प्रतिज्ञात तन्मयानुष्ठितमित्याह—"तान्येतानि" इति, 'अभेदसाधनानि=अभेदप्रमाकरणानीत्यर्थ, 'अभेदसाधकानि' इति पाठान्तरम्।

ननु तन्तुपटयोरैक्ये कथमिमे तन्तवः पटश्चायमिति सज्ञाभेदस्तत्राह "एवमभेदे सिद्धे" इति, तेन तेनाऽऽतानवितानरूपसंस्थानभेदेनावस्थान्तर नीतास्तन्तव एव पटो न ततोऽर्थान्तरमित्यर्थ।

अवयवविन्यासविशेषसंस्थानभेदेन सञ्ज्ञाभेद इति भाव।

ये तु तार्किका 'अर्थान्तर पटात् तन्तव—तद्धेतुत्वात् तुर्यादिवदिति, तुर्यादि पटकारण मर्थान्तरमिति दृष्ट तथा च तन्तव तस्मादर्थान्तरमिति, सामर्थ्यभेदाद् विषागदवद्, भिन्न प्रत्ययविषयत्वाद् रूपस्पर्शवद्' इति न्यायवार्तिकसरणिमनुसरन्त 'पटस्तन्तुभ्यो भिद्यते तत्रोत्पन्नत्वेन तत्र नष्टत्वेन च प्रतीयमानत्वाद्, बुद्धिभेदाद्, व्यपदेशभेदाच्च' इत्यादिप्रयोगैः

---

१ प्रशस्तपादीयभाष्यमिदम्। २ गुरुत्वनिरूपणे काणादभाष्यटीकाकृता श्रीधराचार्येणेत्यर्थ। ३ अ २ आह्नि १ सू ३३। ४ अगद=औषधम्। ५ अ २ आ १ सू ३६। ६ यो न भिद्यते स तत्रोत्पन्नो न भवति यथा तन्तव इत्युदाहरणमत्र बोध्यम्।

**स्वात्मनि क्रियानिरोधबुद्धिव्यपदेशार्थक्रियाव्यवस्थाभेदाश्च नैकान्तिकं भेदं साधयितुमर्हन्ति, एकस्मिन्नपि तत्तद्विशेषाविर्भावतिरोभावाभ्यामेतेषामविरोधाद्,**

---

पूर्वोक्ताभेदसाधकावीतप्रयोगान् सत्प्रतिपक्षितान् प्राहुस्तान् प्रत्याह—"स्वात्मनि क्रियानिरोध" इत्यादिना,

स्वात्मनि=अभिन्ने वस्तुनि, क्रिया=उत्पत्तिरूपा जनिक्रिया, निरोध=प्रध्वसरूपो नाश, बुद्धि=इमे तन्तवोऽय च पट इति ज्ञान, व्यपदेश=तन्तुषु पट इति शाब्दो व्यवहार, अर्थक्रिया=सामर्थ्यं, व्यवस्था=सामर्थ्यनियम, तेषा भेदा बुद्धिव्यपदेशार्थक्रियाव्यवस्थाभेदा, क्रियानिरोधौ च बुद्धिव्यपदेशार्थक्रियाव्यवस्थाभेदाश्च क्रियानिरोधबुद्धिव्यपदेशार्थक्रियाव्यवस्थाभेदा इति विग्रह, भेदपदस्य च द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येक बुद्ध्यादिपदचतुष्टयेनान्वय ।

तन्तुपटयोरभेदे पटस्य तन्त्वात्मकत्वेन स्वस्मात्स्वस्योत्पत्तेरसम्भवाद् स्वस्मिंश्च स्वस्य प्रध्वसाघटनादुत्पन्न पट प्रध्वस्त पट इत्युत्पत्तिनिरोधबुद्धिर्न स्याद्, एवं च दृश्यमानावुत्पत्तिध्वसावभिन्नेऽनुपपन्नौ सन्तौ तन्तुपटयोर्भेद साधयत इत्यत्र फलितम् ।

एवबुद्धिभेद पृथक् हेतु, तथा च तन्तव इमे पटश्चायमिति ज्ञानवैलक्षण्यमपि तन्तुपटयोर्भेदसाधकम् ।

एव व्यपदेशभेद=कुण्डबदरयोरिव तन्तुभि पट इत्याधाराधेयरूपव्यवहारभेदोऽपि भेदसाधक ।

एवमर्थक्रियाभेद=तन्तुभि पट सीव्यते, पटेन च देह आव्रियते, इति कटघटत्वप्रयोजनोत्पादनभेदोऽपि भेदसाधक ।

तथार्थक्रियाव्यवस्था=विभिन्नप्रयोजनजनकत्वनियमोऽपि भेदसाधक, कार्यकारणयोरभेदे हि मृत्पिण्डेनाप्युदकमाह्रियेत, घटेनापि च भित्ति क्रियेत, तथा तन्तुभिरपि प्राव्रियेत पटेनापि च पट उत्पाद्येतेत्यव्यवस्थोपलभ्येत सा च नोपलभ्यतेऽतो भेद इत्यथ ।

एवंचाभेदेऽनुपपद्यमाना भेदे च घटमाना एते क्रियानिरोधबुद्धिव्यपदेशभेदादयो हेतवो यद्यपि कार्यकारणयोर्भेद साधयन्ति तथापि ऐकान्तिक=निर्णीत पारमार्थिक भेद साधयितु नार्हन्ति=न योग्या भवन्तीत्यर्थोऽत्र फलित ।

नार्हन्तीत्युक्तार्थे हेतुमाह—"एकस्मिन्नपि" इति, अभिन्नेऽपि वस्तुनि तत्तद्विशेषाविर्भावतिरोभावरूपोपाधिभेदेनौपाधिक भेदमादायैतेषा हेतूना चरितार्थत्वेन विरोधाभावान्न पारमार्थिकाभेदबाधन एतेषा सामर्थ्यमित्यर्थ ।

---

१ यद्यपि कुत्रचित् 'क्रियाविरोधसबध' इति, कुत्रचिच्च 'क्रियानिरोधसबन्धबुद्धि' इत्येव पाठभेदो दृश्यते तथाप्यग्रिमैतदुपपादनपरसदर्भानुसारेणाय पाठोऽत्र निवेशित इति बोध्यम्। २ केनचिद हेतुना प्रतिबद्ध सन् यो हेतु स्वकार्यं कर्तुमशक्त स सत्प्रतिपक्षित इत्युच्यते । ३ व्यवस्थाशब्देन चात्र सनिहितत्वादर्थक्रियाव्यवस्था ग्राह्या, अर्थक्रियाव्यवस्थेति वा पठनीयम्। ४ तथा च बुद्धिभेद, व्यपदेशभेद, अर्थक्रियाभेद, व्यवस्थाभेद इत्यर्थोऽत्र फलित । ५ पटस्तन्तुतो भिन्न—तत उत्पन्नत्वेन तत्र नष्टत्वेन च दृश्यमानत्वाद् यो न भिन्नो न स तत उत्पद्यते यथा तन्तव इत्येव साधयत इत्यर्थ । ६ रूपरसवद् विभिन्नज्ञानविषयत्वात् तयोर्भेद इत्यर्थ । ७ पदार्थफलितार्थमभिधाय वाक्यार्थफलितार्थमाह "एवच" इति । ८ क्रियानिरोधबुद्धिव्यपदेशभेदादिहेतूनामित्यर्थ ।

यथा हि कूर्मस्याङ्गानि कूर्मशरीरे निविशमानानि तिरोभवन्ति, निस्सरन्ति चाविर्भवन्ति न तु कूर्मतस्तदङ्गान्युत्पद्यन्ते प्रध्वंसन्ते वा, एवमेकस्या मृदः सुवर्णस्य वा घटमुकुटादयो विशेषा निस्सरन्त आविर्भवन्त उत्पद्यन्त इत्युच्यन्ते निविशमानाश्च तिरोभवन्तो विनश्यन्तीत्युच्यन्ते, न पुनरसतामुत्पादः सता वा निरोधः,

यथाह भगवान् कृष्णद्वैपायनः—

"नासतो विद्यते भावो नाभावो विद्यते सतः" इति,

यथा कूर्मः स्वावयवेभ्यः संकोचविकाशिभ्यो न भिन्न एवं घटमुकुटादयोऽपि मृत्सुवर्णादिभ्यो न भिन्नाः,

---

अन्यथोपपन्नानामेषा हेतूना 'विकारो नामधेय मृत्तिका' इतिश्रुत्यनुगृहीतै. पूर्वोक्तैर्हेतुभिस्सह समबलत्वाभावात्तैर्हेतुभि पूर्वोक्ताना हेतूना सत्प्रतिपक्षितत्वमिति भाव ।

एतदेव क्रमश उपपादयितुमादावुत्पत्तिप्रध्वसबुद्धेरभेदेऽप्युपपन्नत्वमाह "यथाहि" इति,

निस्सरन्ति–इति शत्रन्तस्य प्रथमाबहुवचनम्, प्रध्वसन्ते वा–इत्यत्र कूर्मशरीरे–इति शेषो ज्ञेयः,

निस्सरन्त =मृदादिभ्यो निस्सरन्त सन्त आविर्भाव प्राप्ता घटादय उत्पद्यन्त इत्युच्यन्ते, तथा मृदादिषु निविशमानाश्च सन्त तिरोभवन्त =अतीतावस्था प्राप्ता घटादयो विनश्यन्तीत्युच्यन्त इत्यर्थ.,

"न पुनरसतामुत्पाद" इति–असतां=प्रागभावप्रतियोगिना घटादीना कारणव्यापारादुत्पाद इति न च, सतामेव च तेषा प्रध्वंस इत्यपि न चेत्यर्थ ।

उक्तार्थे भगवद्गीतावाक्य प्रमाणयति–"नासतो विद्यते भाव" इति,

असत =नरविषाणादेरिवाविद्यमानस्यार्थस्य भाव =सत्त्व न विद्यते सतश्चासत्त्व न सम्भवतीत्यर्थ ।

ननु मा भूता घटादेरुत्पत्तिप्रध्वंसौ तथापि कथ मृद्घटयोरभेद इत्यत्राह "यथा कूर्म" इति,

'मृत्सुवर्णादिभ्य'=घटादेरतीतावस्थाया सकोचशालिभ्यो वर्तमानतावस्थाया च विकाशशालिभ्यो मृत्सुवर्णादिभ्यो न भिन्ना घटादय इत्यर्थ,

आविर्भावरूपविकाशशालिषु मृदादिषु सत्सु घटादय उत्पन्ना इति व्यवहार, कार्योयातीतावस्थारूपसकोचशालिषु च मृदादिषु सत्सु घटादय प्रध्वस्ता इति व्यवहार इति भाव ।

सस्थानभेदेनैकस्मिन्नप्युत्पत्तिनिरोधप्रत्ययस्योपपन्नत्वान्न तद्बलेन घटादीना मृदादिभ्यो भिन्नत्वमिति तत्त्वम्,

पटीयानागतावस्थावत्सु तन्तुषु तन्तव इम इति प्रत्यय, पटीयवर्तमानतावस्थावत्सु च तेषु

---

१ अन्यथोपपन्नानाम्=औपाधिकभेदमादायापि चरितार्थानाम् । २ पूर्वोक्तै =न पटस्तन्तुभ्यो भिद्यते तद्धर्मत्वादित्यादिना पूर्वमुक्तै । ३ य किल निर्णयाय प्रयुक्तो हेतुस्तुल्यबलेनापरेण हेतुना प्रतिबद्ध सन्निर्णय जनयितुमशक्त स सत्प्रतिपक्षित इत्युच्यतेऽत्र च समबलत्वाभावान्न सत्प्रतिपक्षितत्वमिति भाव । ४ अ २ श्लो १३ । ५ उत्पत्तिप्रध्वसदर्शनबलेनेत्यर्थ ।

एवं च—'इह तन्तुषु पट' इति व्यपदेशोऽपि यथा 'इह वने तिलका' इत्युपपन्नः, न चार्थक्रियाभेदोऽपि भेदमापादयति, एकस्यापि नानार्थक्रियादर्शनाद्, यथैक एव वह्निर्दाहकः पाचकः प्रकाशकश्चेति,

नाप्यर्थक्रियाव्यवस्था वस्तुभेदे हेतुः, तेषामेव समस्तव्यस्तानामर्थक्रियाव्यवस्थादर्शनाद्, यथा प्रत्येकं विष्टयो वर्त्मदर्शनलक्षणामर्थक्रियां कुर्वन्ति नतु शिबिकावहनं, मिलितास्तु शिबिका वहन्ति, एवं तन्तवः प्रत्येकं प्रावरणमकुर्वाणा अपि मिलिता आविर्भूतपटभावाः प्रावरिष्यन्ति।

---

पटोऽयमिति प्रत्यय इत्येकस्मिन्नपि विलक्षणबुद्धिबोध्यत्वस्योपपन्नत्वाद् 'विभिन्नप्रत्ययविषयत्वात् तन्तुपटयोर्भेद' इति न्यायवार्तिकाभिहितमपि न युक्तमित्यपि बोध्यम्,

एवमेव 'नहि पटाकारप्रत्ययस्तन्तुमात्रालम्बनो रण्डाकरण्डावस्थितेष्वपि तन्तुषु तत्प्रसङ्गाद्, इति तात्पर्यटीकोक्तमपि निराकृतं वेदितव्य, रण्डाकरण्डावस्थितेषु तन्तुषु पटव्यवहारप्रयोजकावयवविन्यासविशेषाभावेन तत्र पटाकारप्रत्ययप्रसक्त्यभावाद्,

व्यपदेशभेदोऽपि न भेदसाधक इत्याह—"एवञ्च" इति, एवच=एवमेव, व्यपदेशोऽपि—उपपन्न इत्यनेनान्वय, तत्र दृष्टान्त "यथेह वने तिलका इति" इति, तिलकनामकतरुसमुदायस्यैव वनत्वेन तिलकवनयोरभेदेऽपि यथाधाराधेयव्यवहारस्तथा प्रकृतेऽपीत्यर्थ,

एवमेवानेकेषु तन्तुष्वेकोऽय पट इत्येकत्वव्यपदेशोऽप्येकप्रावरणलक्षणप्रयोजनावच्छेदाद्बोध्यो यथैकदेशकालावच्छिन्नेषु बहुष्वपि तरुष्विदमेक वनमिति,

विभिन्नकार्यकारित्वमपि न भेदसाधकमित्याह—"नचार्थक्रियाभेदोऽपि" इति, 'सामर्थ्यभेदाद् विषागदवत् तन्तुपटयोर्भेद' इति न्यायवार्तिककृताऽभिहितोर्थक्रियाभेदोऽपि न भेदमापादयति=साधयति व्यभिचारादित्यर्थ,

व्यभिचारमेवाह—"एकस्यापि" इति, यत्र यत्र विभिन्नकार्यकारित्व तत्र तत्र वस्तुभेद इति व्याप्तिर्न सार्वत्रिकीति भाव।

तन्तुभिरेव सीवन पटेन चैवाच्छादनमिति व्यवस्थापि न भेदनिर्वाहिकेत्याह—"नाप्यर्थक्रियाव्यवस्था" इति,

विष्टय.=कर्मकरा भृत्या, वर्त्म=मार्ग, शिबिका=दोलाख्यो विमानविशेष,

'आविर्भूतपटभावा'=आविर्भाव प्राप्तः पटरूपो भाव=धर्मो येषु त आविर्भूतपटभावास्तन्तव प्रावरिष्यन्ति=आच्छादयिष्यन्ति देहादिकमिति शेष,

(अर्थक्रियाया च प्रत्येकमसमर्था अप्यनारभ्यैवार्थान्तर किञ्चिन्मिलिता कुर्वन्तो दृश्यन्ते यथा ग्रावाण उखाधारणमेकम्, एवमनारभ्यैवार्थान्तर तन्तवो मिलिता प्रावरणमेक करिष्यन्ति) इति भामत्युक्त प्रकारोऽप्यत्रानुसन्धेय।

---

१ रण्डा=मृतपतिकाऽबला, करण्डा=वशादिरचितभाण्डविशेष। २ अ २ आ १ सू ३३।
३ ग्रावाण=पाषाणा, उखा=स्थाल्याख्य पाकपात्रविशेष। ४ अ १ पा २ सू १५।

स्यादेतद्, आविर्भावः पटस्य कारणव्यापारात्प्राक् सन्नसन् वा, असंश्चेत्, प्राप्तं नर्ह्यसदुत्पादनम्, अथ सन्, कृतं तर्हि कारणव्यापारेण, न हि सति कार्ये कारणव्यापारप्रयोजनं पश्यामः, आविर्भावे चाविर्भावान्तरकल्पनेऽनवस्थाप्रसङ्गः, तस्मादाविर्भूतपटभावास्तन्तवः क्रियन्त इति रिक्तं वचः ।

अथासदुत्पद्यत इत्यत्रापि मते केयमसदुत्पत्तिः, सती, असती वा, सती चेत् कृतं तर्हि कारणैः, असती चेत्, तस्या अप्युत्पत्त्यन्तरमित्यनवस्था,

---

उत्पत्ते प्राक् सदेव कार्यं कारकव्यापारेणाभिव्यज्यते दोहनेन दुग्धमिवेति पूर्वत्राभिहित, तत्र येयमभिव्यक्ति सा किं कारणव्यापारात्प्राक् सती वासती वा, सती चेत् सर्वदोपलम्भप्रसङ्ग कार्यस्य, कारकव्यापारवैयर्थ्यं च, असती चेत् तर्हि यथाऽसत्येवाभिव्यक्ति कारणाद् जायत तथा पटादिकार्यमप्यसदेव कारणव्यापारादुत्पद्येतेति सत्कार्यवादभङ्ग इत्याशयेन तार्किक शङ्कते–"स्यादेतद्" इति,

स्यादेतद्=अस्त्वेव कार्यकारणयो कथचिदभेदस्तथाप्यन्यन्मया पृच्छयन इत्यर्थ,

तदेव पृच्छति–"आविर्भाव" इत्यादिना, 'कारणव्यापाराद्'–इत्युभयान्वयी, तथा च कारणव्यापाराद् य. पटस्याविर्भावो भवताभ्युपेयते स किं कारणव्यापारात्प्राक् सन् किं वासन्नित्यत्र फलितम् ।

'कृतम्'–इत्यलमित्यर्थकमिति मेदिनी, कारकव्यापारेण कृत=साध्य नास्तीत्यर्थ, व्यर्थ कारणव्यापार इति यावद्, तत्र हेतुमाह–"न हि" इति, हि=यत सति=विद्यमाने कार्ये सति कारणव्यापारप्रयोजन न पश्यामोऽत तद्[1]व्यापारेणालमित्यर्थ ।

आविर्भावोऽपि पूर्वमनभिव्यक्त इत्यनभिव्यक्ताविर्भावस्याविर्भावाय कारणव्यापार इति चेत् तर्ह्यनभिव्यक्ताविर्भावस्याविर्भावोऽपि पूर्वमनभिव्यक्त इति तस्याप्यन्य आविर्भावो[2] वाच्य एव तस्य तस्याप्यन्योन्य इत्यप्रामाणिक्याविर्भावधारा प्रसज्येतेति न क्वापि विश्रान्ति स्यादित्याह–"आविर्भावे च" इति,

शङ्कामुपसहरति–"तस्माद्" इति, कारणव्यापारेण तन्तुभ्योऽसन् पटो नोत्पाद्यते तु तन्तव एव आविर्भूतपटभावास्तेन[3] क्रियन्त इति यद् वचन तद् रिक्त=प्रमाणविधुरमित्यर्थ ।

"यश्चोभयोस्समो[4] दोष परिहारोऽपि वा सम, नैक पर्यनुयोक्तव्यस्तादृगर्थविचारणे" इति न्यायेन मौनस्थानमेतादृक् प्रत्यवस्थानमित्याशयेन[5] तार्किक तूष्णीं कर्तुं प्रतिबन्दीं[6] गृह्णाति सिद्धान्ती–"अथासदुत्पद्यत इत्यत्रापि मत" इति, तार्किकमतेऽपि इयमुत्पत्ति किंरूपेत्यर्थ ।

---

१ तद्व्यापारेण=कारणव्यापारेण । २ आविर्भावत्वाविशेषाद्, यदनभिव्यक्त तदेवाविर्भवतीति सिद्धान्ताच्चेत्यर्थ । ३ तेन=कारणव्यापारेण । ४ जैमिनीयप्रथमाध्यायाद्यपादीयपञ्चमसूत्रे शून्यवादप्रकरणे श्लोकवार्तिके तु 'तस्माद् यत्रोभयोर्दोष' ( २५२ ) इति पाठभेदो दृश्यते । ५ प्रतीपमवस्थान प्रत्यवस्थान–प्रतिपक्षीभूय शङ्कनमिति यावद्, यत्र प्रत्यवस्थाने शङ्कितुरपि गले दोष आपतेत् तत्र प्रत्यवतिष्ठमानेन मौनमेवास्थेयमित्यर्थः । ६ यथा त्वया निर्वाह्यते तथा मयापि निर्वाह्यत इत्येव प्रत्यवस्थान प्रतिबन्दिग्रहणम् ।

अथोत्पत्तिः पटान्नार्थान्तरम्—अपि तु पट एवासौ, तथापि यावदुक्तं भवति पट—इति तावदुक्तं भवति उत्पद्यते—इति,

ततश्च पट इत्युक्ते उत्पद्यते—इति न वाच्यं, पौनरुक्त्याद्, विनश्यति—इत्यपि न वाच्यम्, उत्पत्तिविनाशयोर्युगपदेकत्र विरोधात्।

तस्मादियं पटोत्पत्तिः स्वकारणसमवायो वा स्वसत्तासमवायो वा, उभ-

---

उत्पत्तिस्थानेऽस्माभिरभिषिक्तायामभिव्यक्तौ यथेदं चोद्यं प्रसरति तथोत्पत्तावपीदं चोद्यं दुरपनोद्यमिति भाव,

उत्पत्तिर्नामाद्यक्षणसंबन्ध, स च स्वरूपसंबन्धविशेष न तु संयोग, प्रध्वंसादानसम्भवात्, स्वरूपसंबन्धश्चानुयोगिरूप, अनुयोगी चात्र पट पटश्च कारणव्यापारात्प्रागनुत्पन्न इति तदनतिरेकिण्युत्पत्तिरप्यनुत्पन्ना, तथाचानुत्पन्नपटानतिरिक्तोत्पत्त्युत्पत्तये कारणव्यापार सार्थक इत्याशयेन तार्किक प्राह—"अथोत्पत्ति पटान्नार्थान्तरम्" इति,

सिद्धान्ती दूषयति—'तथापि" इति,

तथापि=एवं सति उत्पत्तिपटयोरेकार्थत्वेन पर्यायत्वाद् योऽर्थ पट—इत्यनेनाभिधीयते स एवोत्पद्यत—इत्यनेनाप्यभिधीयेत, ततश्च पट इत्युक्ते उत्पद्यत इति न वाच्य—वक्तुं योग्य भवेत्, पर्याययो सहप्रयोगाभावेन पौनरुक्त्यापत्तेरित्यर्थ ।

अनुवादातिरिक्तस्थले पौनरुक्त्यस्यानङ्गीकाराद्, घटो घट इतिवत् शाब्दबोधानुदयाच्च पट उत्पद्यते इति प्रयोगो भवन्मतेऽनुपपन्न इति भाव ।

दूषणान्तरमाह—"विनश्यति' इति, पटो विनश्यतीत्यपि न वक्तुमर्हमित्यर्थ, तत्र हेतुमाह—"उत्पत्तिविनाशयो" इति, पट—इत्यनेन हि उत्पद्यते—इत्यभिधीयते विनश्यति इत्यनेन च ध्वसते—इत्यभिधीयते, तथा च वर्तमानकालिकोत्पत्त्याश्रयो य स वर्तमानकालिकध्वसाश्रय इत्यर्थोऽत्रापद्येत, स च विरुद्ध इत्यर्थ,

पटो विनशिष्यति—इत्येव कालान्तर उत्पत्तिविनाशयोरेकस्मिन्नविरोधेऽपि समसमययोस्तयोस्सहावस्थानस्य न सम्भव इति बोधयितु—'युगपद्' इति, एकस्मिन् काल इत्यर्थ,

पट—इत्यनेनोत्पत्तेरभिधान विनश्यति—इत्यनेन च नाशस्याभिधान तथा च उत्पत्तिश्च नाशश्चेत्यनन्विताभिधानमिदमापद्यतेत्यपि बोध्यम्,

कल्पान्तरानुसरणेऽपि न निस्तार इत्याह—"तस्माद्"इति, यत पूर्वोक्तासम्भव तस्मात्—स्वकारणसमवाय=पटस्य स्वकारणेषु तन्तुषु यस्समवाय सेयं पटोत्पत्ति—अथ वा स्वसत्ता-

---

१ स्वकारणे कार्यस्य समवायो जन्म, स्वस्मिन्नसति कार्ये सत्तासमवायो वा जन्मेत्यर्थ, इत्येतत्समानभामतीपाठव्याख्याने कल्पतरुकार । २ सती वाऽसतीवेत्याकारम्। ३ स्वसमानकालीनपदार्थप्रतियोगिकध्वसानाधारसमयसम्बन्ध इत्येतदर्थ इति कुसुमाञ्जलिप्रकाशे वर्द्धमानोपाध्याय । ४ उत्पत्तिमानभाव प्रध्वसाभाव इति तार्किकमते ध्वसस्योत्पत्तिमत्त्वेन ध्वसाभावेन सहाद्यक्षणसबन्धस्य सयोगादिरूपत्वासभवेन तत्र स्वरूपसबन्धस्यैव वक्तव्यत्वादित्यर्थ, गुणक्रिययोरुत्पत्तिस्थलेपि स्वरूपसबन्धस्यैव सम्भव । ५ तयो =उत्पत्तिविनाशयो ।

**यथापि नोत्पद्यते, अथ च तदर्थानि कारणानि व्यापार्यन्ते, एवं सत एव पटादेराविर्भावाय कारणापेक्षेत्युपपन्नम् ।**

---

समवाय =स्वस्मिन्=पटरूपे कार्ये यैस्सत्ताजातेस्समवाय सा पटोत्पत्तिरित्येव भवता वाच्यम्–उभयथापि=प्रकारद्वयाभ्युपगमेऽपि नोत्पद्यते–उत्पत्तिरिति शेष,

समवायसंबन्धस्य नित्यत्वेन समवायरूपाया उत्पत्तेरपि नित्यत्वादुत्पत्तेरुत्पत्तेरनुप पन्नत्वादित्यर्थ ।

भवतूत्पत्तेरुत्पत्त्यभावस्तथापि भवता परच्छिद्रान्वेषणेन किं लब्धमित्याशङ्क्याह-"अथच" इति

अथच=तथापि–सत्यप्येवमुत्पत्तेरुत्पत्त्यसम्भवेनोत्पत्ते प्राक् सिद्धत्वे यथा भवन्मते तदर्थानि=उत्पत्तिप्रयोजनानि कारणानि व्यापार्यन्ते=व्याप्रियमाणानि क्रियन्ते कार्यार्थिभिर्जनैरिति शेष., एवं=तथा मन्मतेऽपि सत एव=प्राक् सिद्धस्यैव पटादेराविर्भावाय कारणापेक्षेत्युपपन्नमिति मया लब्धमित्यर्थ,

यथा भवन्मते समवायस्वरूपत्वेन प्राक्सिद्धाया एवोत्पत्तेरभिव्यक्तये कारणव्यापारस्तथास्मन्मतेऽपि प्राक्सिद्धस्यैव कार्यस्याभिव्यक्तये कारणव्यापार इति न कारणव्यापारानर्थक्यशङ्काकलङ्को मन्मत इति भावः,

ननु प्रतिबन्दिग्रहेण गृहीतस्सन् तार्किको यथाकथञ्चिन् मौन भजतु नाम तथापि आविर्भावस्य प्राक्सत्वेऽल कारणव्यापारै, असत्त्वे चासत्कार्यवादप्रसङ्ग इति पूर्वोक्तापत्तेर्भवन्मते क उद्धार इति चेद्,

अत्र ब्रूमहे–(तदेतत् त्रैलोक्यं व्यक्तेरपैति, कस्माद् नित्यत्वप्रतिषेधाद्, अपेतमप्यस्ति विनाशप्रतिषेधात्, ससर्गाच्चास्य सौक्ष्म्यम्) इति योगभाष्यात् सर्वकार्याणामवस्थातोऽनित्यत्वेन स्वरूपेण च नित्यत्वेन सदसत्त्वाभ्युपगमेनावस्थानाद्युपजनापायधर्मवत्त्वाङ्गीकाराद्व्यक्तावस्थाख्याविर्भावरूपाभिव्यक्तिरप्यसत्येवोत्पद्यत इत्यभ्युपगमे न काचिदापत्तिरिति, नचैतावता सत्कार्यवादहानि, सूक्ष्मावस्थाया एवास्मन्मतेऽसत्तारूपत्वाभ्युपगमाद्, नचैव

---

१ यस्या सबन्धे सति पट सन्नित्यादिव्यवहार सा सत्ताजातिरिति। २ असत पटस्य कथ कारणे समवाय, कथ वासति पटे सत्तासमवाय सदसतोस्सबन्धासभवादित्येवमप्यसत्कार्यवादी प्रष्टव्य.। ३ कारणव्यापारात्प्राक् सिद्धे सति। ४ तदेतत् त्रैलोक्य=सर्वं कार्यकारणात्मक वस्तु व्यक्ते=वर्तमानावस्थात अपैति=अपगच्छति कूटस्थनित्यत्वाभावेन वर्तमानतामपहायातीतता प्राप्नोति, अपेतम्=अतीतमपि कारणरूपेणास्ति, अत्यन्तोच्छेदाभावाद्, अपेतमप्यस्ति चेत् कार्यं कस्मात्पूर्ववन्नोपलभ्यत इत्यत्राह–'ससर्गाद्' इति, स्वकारणे लयात् सौक्ष्म्य=दर्शनानर्हम् अतश्चानुपलब्धिरिति भाष्यार्थ ।पा ३ सू १३। ५ अनागतावस्थाया स्वरूपेण घट सन् व्यक्तावस्थया चासन्, तथोत्पत्त्युत्तर स्वरूपेण घट सन्ननागतावस्थया चासन् तथामुद्गरपातादिना घटस्यादर्शनेऽतीतावस्थया सन्नन्यावस्थया चासन्नित्येवमवस्थातो विनाशित्व स्वरूपेण च नित्यत्व सर्वकार्याणा बोध्यम्। ६ एतावता=असत्या एवाभिव्यक्तेरुत्पत्त्यङ्गीकारेणेत्यर्थ ।

**न च पटरूपेण कारणानां संबन्धः,**

सत्यभिव्यक्तेरप्यभिव्यक्त्यङ्गीकारेणानवस्थापत्तिरिति शङ्क्यम्, अस्या अनवस्थाया कपिल मुनिनाऽदोषत्ववचनात्,

तथा च साङ्ख्यसूत्रम्–"पारम्पर्यतोऽन्वेषणा बीजाङ्कुरवद्" इति, अ १ सू १२२

"पारम्पर्यत =परम्परारूपेणैवाभिव्यक्तेरनुधावनं कर्तव्य, बीजाङ्कुरवत् प्रामाणिकत्वेनास्या अदोषत्वादित्यर्थ, बीजाङ्कुराभ्यां चात्रायमेव विशेषो यद्बीजाङ्कुरस्थले क्रमिकपरम्परयानवस्था, अभिव्यक्तौ चैककालीनपरम्परयेति, प्रामाणिकत्वं तु तुल्यमेव, इति सूत्रार्थ "इति विज्ञानभिक्षु।

'सदेव सोम्येदमग्र आसीद्' इत्यागमप्रमाणसिद्धसत्कार्यवादपरिपालनपराया अस्या परम्पराया प्रामाणिकत्वमिति भाव।

यद्वा–(किमुत्पत्तिरुत्पद्यते न वा, उत्पद्यते चेद्, अस्या अप्युत्पत्तिरित्यनवस्था, नोत्पद्यते चेत् किमसत्त्वान्नित्यत्वाद्वा, यद्यसत्त्वाद् तर्हि न कदाचिदुत्पत्तिरिति सर्वदानुपलम्भप्रसङ्ग, अथ नित्यत्वान्नोत्पद्यते, तर्हि सर्वदा कार्योपलम्भप्रसङ्गः) इत्याशङ्काया वशेषिकादिभि यथा (उत्पत्ते स्वयमेवोत्पत्तिरूपत्वान्नोत्पत्त्यन्तरकल्पनावकाश) इति समाधीयते तथास्माभिरपि (अभिव्यक्ते. स्वयमेवाभिव्यक्तिरूपत्वान्नाभिव्यक्त्यन्तरकल्पनावकाश) इति समाधीयत इति नात्र काचिदापत्ति,

तथा च–साङ्ख्यसूत्रम्–"उत्पत्तिवद् वाऽदोष" इति, अ १ सू १२३।

यथोत्पत्तेरुत्पत्त्यन्तरानभ्युपगमेन परमते नानवस्थादोष तथाभिव्यक्तेरप्यभिव्यक्त्यन्तरास्वीकारेण नास्मन्मतेऽप्यनवस्थादोष इति सूत्रार्थ,

विज्ञानभिक्षुस्तु यथा घटोत्पत्तेरुत्पत्ति स्वरूपमेवेष्यते परैस्तथास्माभिरपि घटादभिव्यक्तेरप्यभिव्यक्ति स्वरूपमेवेष्यते, ततो नानवस्थादोष, इत्येवं सूत्रार्थमभिधाय अथैवमभिव्यक्तेरभिव्यक्त्यनङ्गीकारे कारणव्यापारात्प्राक् तस्या सत्त्वानुपपत्त्या सत्कार्यवादक्षति, इत्याशङ्क्य अस्मिन् पक्षे सत एवाभिव्यक्तिरित्येव सत्कार्यसिद्धान्त इत्याशयाद् अभिव्यक्तेश्चाभिव्यक्त्यभावेन तस्या प्रागसत्त्वेऽपि नासत्कार्यवादत्वापत्तिरित्येव समादधौ,

कार्याणामनागतावस्थैवाभिव्यक्तेरप्यनागतावस्था सैव चाभिव्यक्त्युपपत्तौ नियामिकेति नासत नरविषाणादेरभिव्यक्तिरित्याशय इत्यन्यत्र विस्तर।

---

१ कारणव्यापारेण या सूक्ष्माया अभिव्यक्तेरभिव्यक्ति सापि पूर्वं सूक्ष्मा सत्यवाभिव्यज्यत इत्युपेयम्, अन्यथासत्कार्यवादप्रसङ्गाद्, एव तस्या तस्या अभिव्यक्तेरन्यान्याभिव्यक्तिरवश्यम्भाविनी, तथा चानवस्थेत्यर्थ। २ वृत्तिकारानिरुद्धानुसारेण सूत्रार्थमभिधाय साङ्ख्यप्रवचनभाष्यकारोक्त सूत्रस्यार्थान्तरमभिधातुमाह–"विज्ञानभिक्षुस्तु" इति। ३ यथा भवन्मते घटोत्पत्तेर्योत्पत्ति सा घटोत्पत्तिस्वरूपैव न ततोऽन्या तथास्मन्मतेऽपि घटाभिव्यक्तेरप्यभिव्यक्तिर्घटाभिव्यक्तिस्वरूपैव न ततोऽन्येति नानवस्थेत्यर्थ, वृत्तिकारेणोत्पत्तेरुत्पत्त्यन्तरविरह इवाभिव्यक्तेरप्यभिव्यक्तिविरह इति साम्य दर्शित, भाष्यकारेण तूत्पत्तेरुत्पत्त्यङ्गीकारेऽपि साम्य दर्शितमिति विशेष। ४ असत्या एवाभिव्यक्तेरुत्पत्तौ सत्या नरविषाणादिकमप्यभिव्यज्येत, इत्याशङ्कामपनेतुमाह 'कार्याणाम्' इति। ५ अन्यत्र=अ २ पा० १ सू० १५ इत्यत्र श्रीभाष्ये, अ० २ पा० १ सू० २१ इत्यत्र विज्ञानामृतभाष्ये, पा० १ योगसू० १२ इत्यत्र योगवार्तिके चेत्यर्थ।

तद्रूपस्याक्रियात्वात्, क्रियासंबन्धित्वाच्च कारणानाम्, अन्यथा कारणत्वाभावात्, तस्मात्सत्कार्यमिति पुष्कलम् ॥ ९ ॥

तदेवं प्रधानसाधनानुगुणं सत्कार्यमुपपाद्य यादृशं तत् प्रधानं साधनीयं तादृशमादर्शयितुं विवेकज्ञानोपयोगिनी सारूप्यवैरूप्ये तावदाह-'हेतुमद्'इति-

**हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।**
**सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥ १० ॥**

व्यक्त-हेतुमद्=हेतुः-कारणं तद्वद्, यस्य च यो हेतुस्तमुपरिष्टाद् वक्ष्यति।

---

केचित्तु-व्यवहारोपयोगितत्तत्कार्याभिव्यक्तस्तत्तत्कार्यनिष्ठसत्त्वगुणरूपतया नित्यत्वेऽपि तमसा प्रतिबद्धत्वान्न व्यवहारोपयोगित्वम्, अभिव्यञ्जकसामग्र्या तूत्तेजकेन मणेरिव तमसः प्रतिबन्धाद्व्यवहारक्षमत्वमिति सामग्र्या उत्तेजकत्वमात्राङ्गीकारात्सत्कार्यवादबाधाभावादित्याहु.

स्वकारणसमवायरूपाया उत्पत्ते प्राक्सिद्धत्वेन न कारणव्यापारापेक्षा भवन्मतेऽपि युक्तेत्यभिहिते सति यदि कश्चिदेव ब्रूयात्पटरूप यत्प्रागसिद्ध तेन सह कारणसबन्ध एव कार्यस्योत्पत्तिस्तथाच पटरूपस्य जननाय कारणव्यापारापेक्षेति, तदुक्तिरपि न युक्तेत्याह-"नच पटरूपेण कारणाना सबन्ध" इति,

पटरूपेण सह कारणसबन्धो न युक्त इत्यत्र हेतुमाह-"तद्रूपस्याक्रियात्वाद्" इति, रूपस्य गुणत्वेन क्रियारूपत्वाभावादित्यर्थ.,

ननु माभूत्पटरूप क्रियारूप तथापि कथ न तेन सह कारणसबन्ध इत्यत्राह-"क्रियासबन्धित्वाच्च कारणानाम्" इति, चकारो हेत्वर्थक, कारणानि क्रियासबद्धानि कारकत्वादन्यकारकवदित्यर्थ, विपक्षे बाधकमाह-"अन्यथा" इति, कारणाना क्रियासंबन्धित्वनियमानङ्गीकारे क्रियाजनकत्व कारकत्वमिति लक्षित कारकत्वमेव भज्येतेत्यर्थ,

उपसंहरति-"तस्माद्" इति, यत सत्कार्यवादे न कोऽपि दोषस्तस्मादुत्पत्ते प्राक् कार्यं सदिति मत पुष्कलं=प्रामाणिकत्वेन श्रेष्ठमित्यर्थ. ॥ ९ ॥

वृत्तानुकीर्तनपुरस्सरमुत्तरार्यामवतारयति "तदेवम्" इति,

आर्या विवृणोति-"व्यक्तम्" इति, व्यक्त=प्रकृतिपुरुषातिरिक्तं महदादित्रयोविंशतितत्त्वमित्यर्थ., व्यक्तम्-इति लक्ष्यपदं विशेष्य, हेतुमद् इत्यादीनि च सप्त पदानि लक्षणपरत्वेन विशेषणानीति ज्ञेय,

'तद्वत्'-तत्=कारणं विद्यत आविर्भावे यस्य तद्धेतुमत्, कदाचिदाविर्भावशीलमिति यावत्,

---

१ साङ्ख्यचन्द्रिकाकारा नारायणतीर्था। २ कार्यानुकूलधर्मविघटकत्व प्रतिबन्धकत्व, प्रतिबन्धकप्रतिबन्धकत्व चोत्तेजकत्वमिति बोध्यम्। ३ विपक्षे=कारकत्वमस्तु क्रियासबन्धित्व माभूदित्येवविधे विरुद्धे पक्ष इत्यर्थ। ४ करणकारकविशेषस्यैव कारणत्वेन क्रियाजनकत्वाभावे कारणत्वमेव न स्यादित्यर्थ।

अनित्यं=विनाशि तिरोभावीति यावद्,

अव्यापि=सर्वं परिणामिनं न व्याप्नोति, कारणेन हि कार्यमाविष्टं न कार्येण कारणं, न च बुद्ध्यादयः प्रधानं वेविषन्तीत्यव्यापकाः ।

सक्रियं=परिस्पन्दवत्, तथा हि बुद्ध्यादय उपात्तमुपात्तं देहं त्यजन्ति देहान्तरं चोपाददत इति तेषा परिस्पन्द इति, शरीरपृथिव्यादीनां च परिस्पन्दः प्रसिद्ध एव ।

अनेकम्—प्रतिपुरुष बुद्ध्यादीना भेदात्, पृथिव्याद्यपि शरीरघटादिभेदेनानेकमेव.

---

उपरिष्टात्=‘प्रकृतेर्महान्’ इति २२ कारिकाया वक्ष्यति—मूलकार इत्यर्थ, ‘विनाशि’ ‘नाश कारणेलय’ इति सूत्रात्कारणे सूक्ष्मतयावस्थान नाश, तद्वत्—कदाचित् तिरोभावशीलमिति यावत्, तदेवाह ‘तिरोभावि’ इति,

अव्यापित्वे हेतुमाह—“कारणेन हि” इति, आविष्ट=व्याप्तम्, वेविषन्ति=व्याप्नुवन्ति, स्वस्वकार्यं व्याप्नुवदपि महदादिक न प्रधान व्याप्नोतीत्यव्यापकम्, असर्वगतमित्यर्थ,

‘परिस्पन्दवत्’—परिस्पन्द =प्रवेशनिस्सरणादिरूपा क्रिया, तद्वत्, तदेवाह—‘उपात्तमुपात्तम्’ इति, गृहीत गृहीतमित्यर्थ, उपाददते=गृह्णन्ति, विज्ञानभिक्षुस्तु ‘सक्रियत्वम्—अध्यवसायादिनियतकार्यकारित्व, प्रधानस्य तु सर्वक्रियासाधारण्येन कारणत्वान्न कार्यैकदेशमात्रकारित्व, नच क्रिया कर्मैव वक्तु शक्यते, प्रकृतिक्षोभात् सृष्टिश्रवणेन प्रकृतेरपि कर्मवत्तयाऽत्र सक्रियत्वापत्ते’ इत्याह ।

क्षोभादिपरिणामलक्षणक्रियाया प्रधाने सत्त्वेऽपि गमनागमनलक्षणपरिस्पन्दात्मकक्रियाया असत्त्वान्न प्रकृतावतिव्याप्तिरिति व्यर्थोऽय भिक्षो प्रयास इति बोध्यम् ।

‘प्रतिपुरुष’=पुरुष पुरुष प्रति बुद्ध्यादीना भिन्नत्वाद् अनेक=सजातीयभेदवद् इत्यर्थ, तत्त्व[3] चात्र स्वाश्रयप्रतियोगिकान्योन्याभावसमानाधिकरणतत्त्वविभाजकोपाधिमत्त्वं, सभवति चेद महदादिषु, महदादिप्रतियोगिकान्योन्याभावेन सह महदन्तरादौ महत्त्वादेः सामानाधिकरण्यसत्त्वाद्, प्रकृतौ तु न सभवति, प्रकृत्यन्योन्याभावस्य प्रकृतावसत्त्वात्, पुरुषे चानेकत्वमिष्टमेवेति न कोऽपि दोष,

एतेन ‘अनेकत्व सर्गभेदेन भिन्नत्व—सर्गद्वयासाधारण्यमिति यावद्, न पुनः सजातीयानेकव्यक्तिकत्वं, प्रकृतावतिव्याप्ते, प्रकृतेरपि सत्त्वाद्यनेकरूपत्वाद्’ इति विज्ञानभिक्षूक्तमनादृतमिति बोध्यम्, प्रकृतेरनेकरूपत्वेऽप्यनेकव्यक्तिकत्वाभावेन प्रकृतिप्रतियोगिकान्योन्याभावस्य

---

१ अ० १ सू० १२१ लीङ्श्लेषण इत्युक्तेर्लय सश्लेष नतूच्छेद इत्यर्थ । २ विष्लृव्याप्ताविति धातो रूपमिदम् । ३ तत्त्व च=सजातीयभेदवत्त्व च । ४ स्वशब्देन महत्तत्त्वादि, तस्याश्रयो महदादि स प्रतियोगी यस्य तादृशो योऽन्योन्याभावस्तत्समानाधिकरणो यस्तत्त्व विभाजकोपाधिस्तादृशोपाधिमत्त्वमित्यर्थ, सभवति चेद=इद लक्षण महदादौ समन्वेतीत्यर्थ ।

'आश्रितं'=स्वकारणमाश्रित बुद्ध्यादि, कार्याणामभेदेऽपि कथञ्चिद् भेद-विवक्षयाश्रयाश्रयिभावः यथेह वने तिलका इत्युक्तः,

'लिङ्गम्'-प्रधानस्य, यथाचैते बुद्ध्यादयः प्रधानस्य लिङ्गं तथोपरिष्टाद् वक्ष्यति, प्रधानं तु न प्रधानस्य लिङ्गं पुरुषस्य लिङ्गं भवदपीति भावः ।

'सावयवम्'=अवयवनम्-अवयवः-मिथः सश्लेषः-मिश्रणं-संयोग इति यावद्, अप्राप्तिपूर्विका प्राप्तिः संयोगः, तेन सह वर्तत इति सावयवं, तथाहि पृथिव्यादयः परस्पर संयुज्यन्ते, एवमन्येऽपि, नतु प्रधानस्य बुद्ध्यादिभिः संयोगः,तादात्म्याद्, नापि सत्त्वरजस्तमसा परस्परं संयोगः, अप्राप्तेरभावाद्

'परतन्त्रम्'-बुद्ध्यादि, बुद्ध्या स्वकार्येऽहङ्कारे जनयितव्ये प्रकृत्यापूरोऽपेक्ष्यते, अन्यथा क्षीणा सती नालमहङ्कारं जनयितुमिति स्थितिः,

---

प्रकृतावसम्भवात्, किञ्च-'अजामेकाम्' इति श्रवणादप्रामाणिक प्रकृतेरनेकव्यक्तिकत्वाभिधानमित्यस्थान एव व्यामोहो भिक्षोरिति,

"स्वकारणमाश्रित"=महत्तत्त्व स्वकारण प्रधानमाश्रितम्, अहङ्कारतत्त्व च महत्तत्त्वमाश्रितम्, इत्येव सर्व व्यक्तमाश्रितमित्यर्थ । 'आश्रयाश्रयिभाव' इत्यस्य उक्त इत्यनेनान्वय.,

'लिङ्ग'-लिङ्गयति=गमयतीति लिङ्ग-ज्ञापक, कस्य ज्ञापकमित्यत्राह "प्रधानस्य" इति,

'उपरिष्टाद्'='भेदाना परिमाणाद्' १[1] इत्यादिनेति शेष ।

अव्यक्तस्यापि पुरुषलिङ्गत्वस्याग्रे वक्ष्यमाणत्वात्कथ लिङ्गत्वस्य व्यक्तमात्रसाधर्म्यमित्याशङ्कापाकरणाय-'प्रधानस्य लिङ्गम्' इति व्याख्यातमित्याशयेनाह—"प्रधान तु" इति,

पुरुषस्य लिङ्ग भवदपि प्रधान न प्रधानस्य लिङ्गमिति न प्रधानेऽतिप्रसङ्ग इत्यर्थ, स्वस्व कारणे लयगमनाद्वा लिङ्ग व्यक्तम्,

अवयवनम्=अवपूर्वकाद् 'यु' मिश्रण इति धातोर्ल्युटि रूपमिदम्,

'सावयव'=सयोगयोगि, सयोगस्यानुयोगि प्रतियोगि[2] चेत्यर्थ,

अप्राप्तिपूर्विका प्राप्ति. सयोग इत्यत्र 'अप्राप्तिपूर्विका' इति पदस्य कृत्यमाह-"नतु प्रधानस्य" इति 'तादात्म्यात्'-तादात्म्यस्थले नित्यप्राप्तिसत्त्वेन प्राप्तेरप्राप्तिपूर्वकत्वाभावेन न प्रधान सयोगस्य प्रतियोगीत्यर्थ,

नापि गुणत्रयसंयोगस्य प्रधानमनुयोगीत्याह "नापि" इति,

बुद्ध्यादीना स्वस्वकार्यं प्रति स्वातन्त्र्येण कारणत्वात्कथ तेषा पारतन्त्र्यमित्याशङ्क्य पारतन्त्र्यं विशदयति, "बुद्ध्या स्वकार्ये" इति,

'प्रकृत्यापूर'=प्रकृत्यनुप्रवेशरूप प्रकृतिसाहाय्यम्, अन्यथा=प्रकृतिसाहाय्यासत्त्वे, क्षीणा=असमर्था, नालम्=न शक्ता स्यादित्यर्थ ।

---

१ १७ इति कारिकायामित्यर्थ । २ यस्य सयोग स प्रतियोगी, यत्र च येन सह वा सयोग सोऽनुयोगीत्यर्थ ।

एवमहङ्कारादिभिरपि स्वकार्यजनने, इति सर्वं स्वकार्येषु प्रकृत्यापूरमपेक्षते-तेन परा प्रकृतिमपेक्षमाणं कारणमपि स्वकार्यजनने परतन्त्रं व्यक्तम्,

'विपरीतमव्यक्तं' व्यक्ताद्, अहेतुमद्, नित्यं, व्यापि, निष्क्रियं, यद्यप्यव्यक्तस्यास्ति परिणामलक्षणा क्रिया तथापि परिस्पन्दो नास्ति, एकम्, अनाश्रितम्, अलिङ्गम्, अनवयवं, स्वतन्त्रमव्यक्तम् ॥ १० ॥

तदनेन प्रबन्धेन व्यक्ताव्यक्तयोर्वैधर्म्यमुक्तं, सम्प्रति तयोस्साधर्म्यं पुरुषाच्च वैधर्म्यमाह-"त्रिगुणम्" इत्यादिना,

**त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि।**
**व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥ ११ ॥**

त्रयो गुणाः सुखदुःखमोहा अस्येति त्रिगुणं,

---

स्वकार्यजनने-इत्यत्र 'प्रकृत्यापूरोऽपेक्ष्यते इत्यनुषञ्जनीयम्,

फलितमाह-"इति सर्वम्" इति, इति=यत सर्वं व्यक्तं स्वकार्येषु जननीयेषु प्रकृत्यापूरमपेक्षते तेन हेतुना कारणमपि व्यक्त परा प्रकृतिमपेक्षमाण सत् स्वकार्यजनने परतन्त्रमित्यर्थ

व्यक्तसाधर्म्यमभिधाय तद्वैधर्म्यमव्यक्ताख्याया प्रकृतावाह-"विपरीतमव्यक्तम्" इति, कस्माद् विपरीतमित्यत्राह "व्यक्ताद्" इति,

अहेतुमद्=अज- न कुतश्चिदाविर्भवतीति यावद्, नित्य=निरन्तरसत्त्वेनातिरोभावि, व्यापि=परिणामजातव्यापक, निष्क्रिय=परिस्पन्दहीनम्, एक=सजातीयभेदविधुरम्, अनाश्रित=क्वापि कारणे न वृत्तिमद्, अलिङ्ग=कारणाज्ञापकम्, अनवयवम्[1]=असयोगि, स्वतन्त्रम्=अन्याचिदनपेक्षं सत् स्वकार्यजनने समर्थमित्यर्थ,

यद्यपि-एकत्वमपहायान्येऽहेतुमत्त्वादय सर्वेऽपि धर्मा पुरुषे वर्तन्ते तथापि त्रिगुणत्वे सतीत्येव प्रत्येक[2] विशेषणान्न पुरुषेऽतिप्रसङ्ग इति बोध्यम् ॥ १० ॥

वृत्तमनुकीर्त्योत्तरार्याकृत्यमाह "सम्प्रति" इति, तयो=व्यक्ताव्यक्तयोर्मिथ साधर्म्यं पुरुषाच्च तयोर्वैधर्म्यमाहेत्यर्थ,

'त्रिगुणम्' इत्यत्र गुणपदार्थमाह-"सुखदु खमोहा" इति,

यद्यप्यत्र तन्त्रे सुखादिधर्मक[3] सत्त्वादितत्त्वत्रयमेव पुरुषोपकरणत्वात्[4] पुरुषपशुबन्धकत्रिगुणात्मकमहदादिरज्जुनिर्मातृत्वाच्च गुणपदाभिधेय न सुखादिक धर्मजात तथापि धर्मधर्मिणोरभेदमादाय सुखादयो धर्मा एवात्र गुणपदेनाभिप्रेता न सत्त्वादयो धर्मिण इति ज्ञेयम्।

अत्रेदमाकूत[5]-यद्यत्र गुणशब्देन सत्त्वरजस्तमांसि तत्त्वानि गृह्येरन् तर्हि 'त्रिगुणम्' इत्यस्य

---

१ सावयव=शब्दादियुक्तम्, अनवयव=शब्दस्पर्शादिशून्यमिति गौडपादा। २ प्रत्येक=त्रिगुणत्वे सत्यहेतुमत्, त्रिगुणत्वे सति नित्यमित्येवमित्यर्थं। ३ सुखधर्मक सत्त्व, दु खधर्मक रज, मोहधर्मक तम इत्यर्थ। ४ राजोपकरणेऽमात्ये गुणव्यवहारस्य प्रसिद्धत्वादित्यर्थ। ५ गुणपदेन सत्त्वादीना ग्रहणे का क्षतिरित्याकाङ्क्षायामाह-"अत्रेदमाकूतम्" इति, आकूतम्=अभिप्राय।

## तदनेन सुखादीनामात्मगुणत्वं पराभिमतमपाकृतम् ।

सत्त्वादिगुणत्रयाधारभूत व्यक्तमव्यक्त चेत्यर्थोऽत्र सपद्येत स चानिष्ट व्यक्तस्य महदादेर्गुणत्रयाधारत्वेऽप्यव्यक्तस्य तथात्वाभावात् तत्राव्याप्तिप्रसङ्गात् । "सत्त्वादीनामतद्धर्मत्व तद्रूपत्वाद्" इति कापिलसूत्रेण "एते गुणा प्रधानशब्दवाच्या भवन्ति" इति योगभाष्येण चाव्यक्तस्य गुणत्रयात्मकत्वाभिधानेन प्रधाने गुणत्रयनिरूपिताधारताया असम्भवाद्, गुणशब्देन सुखादीना ग्रहणे तु प्रधानस्यापि सत्त्वादिधर्मभूतसुखाद्याधारत्वसम्भवान्नाव्याप्तिरिति,

नन्वेव "तस्मिंस्तस्मिंस्तु, तन्मात्रास्तेन तन्मात्रता स्मृता, न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिण" इति विष्णुपुराणवाक्येन सूक्ष्मभूताख्यशब्दतन्मात्रादीना पञ्चतत्त्वाना शान्तादिपदाभिधेयसुखादिधर्मविरहत्वाभिधानेन कथ तेषा सुखादिमत्त्वेन त्रिगुणत्वमिति चेद् ।

अत्रोच्यते—तेषामपि सुखादिमदहङ्कारपरिणामत्वेन सुखाद्याधारभूतपञ्चमहाभूतकारणत्वेन च सुखाद्याधारत्वावश्यम्भावेन त्रिगुणत्वमप्रत्यूहमिति, नच विष्णुपुराणवाक्यविरोध , तस्याऽस्मदाद्युपभोगयोग्यस्पष्टसुखादिधर्मकशब्दाद्याधारभूतानि यानि स्थूलभूतानि तेभ्यो विलक्षणानि=अस्मदुपभोगायोग्यास्पष्टसुखादिमच्छब्दाद्याधारभूतानि सूक्ष्मभूतानि पञ्चतन्मात्राणीत्यर्थे तात्पर्याद्,

एतदुक्त भवति—यथा स्थूलभूतेष्वाकाशादिषु विद्यमाना शब्दस्पर्शादय केचिच्छान्ता केचिच्च घोरा केचिच्च मूढा अस्माभिरुपलभ्यन्त उपभुज्यन्ते च न तथा सूक्ष्मभूतगतशब्दादिषु शान्तत्वादिकमस्माभिरनुभूयते तेषामतीन्द्रियत्वेन तद्गतशब्दादीनां शब्दादिगतशान्तत्वादिधर्माणा चास्मद्ग्रहणायोग्यत्वादिति,

यज्जातीयेषु शब्दादिषु व्यक्ता शान्तत्वादयो विशेषा न तिष्ठन्ति तज्जातीयाना शब्दादीनामाधारभूतानि यानि सूक्ष्मद्रव्याणि तान्येव तन्मात्राणि नतु सर्वथैव शान्तत्वादिशून्यशब्दादि

---

१ तथात्वाभावाद्=गुणत्रयाधारत्वाभावादित्यर्थ । २ कथमव्यक्तस्य गुणत्रयाधारत्वाभाव इत्यत्राह—"सत्त्वादीनाम्" इति, सत्त्वादिगुणाना प्रकृतिधर्मत्व नास्ति तेषा गुणाना प्रकृतिस्वरूपत्वादिति सूत्रार्थ । ( अ० ६ सू० ३९ ) ३ पा० २ सू० १८ । ४ एव=गुणपदेन सुखादीना ग्रहणे सत्त्वादीनामग्रहणे चेत्यर्थ । ५ तेषु तेषु भूतेषु तन्मात्रास्तिष्ठन्तीति कृत्वा धर्मधर्म्यभेदाद्द्रव्याणामपि तन्मात्रता स्मृता, ते च पदार्था शान्तघोरमूढाख्यै स्थूलगतशब्दादिविशेषै शून्या एकरूपत्वात्, तथा च शान्तादिविशेषशून्यशब्दादिमत्त्वमेव भूताना शब्दादितन्मात्रत्वमित्याशय इत्येतदर्थ इति साङ्ख्यप्रवचनभाष्यकार । ( अ० १ सू० ६२ ) ६ यान्येव वेदान्तिभिरपञ्चीकृतपञ्चभूतानि—सूक्ष्मभूतानि इति चाभिधीयन्ते तान्येव साङ्ख्यनये तन्मात्राणीति बोध्यम् । ७ शान्त=सुख, घोर=दु ख, मूढ=मोह, इत्येव शान्तादिपदाभिधेय सुखादिकमित्यर्थ । ८ तथा च तन्मात्रेष्वव्याप्तिनिरासाय गुणपदेन सत्त्वादय एव ग्राह्या न सुखादय इति शङ्काकृतम् । ९ तेषाम्=पञ्चतन्मात्राणाम् । १० कारणगुणानुरूपत्वमेव कार्यस्येति नियमात् तन्मात्राणामपि स्वकारणवत् सुखादिमत्त्वमित्यर्थ । ११ तन्मात्रेषु सुखादीनामसत्त्वे तत्कार्येषु स्थूलभूतेषु सुखादीनामाकस्मिकत्वप्रसङ्ग इति भाव । १२ शान्ता =सुखात्मका —सुखजनका , घोरा = दु खात्मका —दु खप्रदा , मूढा =मोहात्मका =मोहकरा इत्यर्थ ।

अविवेकि=यथा प्रधानं न स्वतो विविच्यते एवं महदादयोऽपि न प्रधानाद् विविच्यन्ते तदात्मकत्वाद्,

मन्ति तानीति[1] यावद्, युक्त चैतद्[2]—अन्यथाऽनात्मजातस्य त्रिगुणत्ववादि "त्रिगुणाचेतनत्वादि द्वयो"[3] इति कापिल सूत्र "न तदस्ति पृथिव्या वा दिवि देवेषु वा पुन.। सत्त्व प्रकृतिजैर्मुक्त यदेभिस्स्यात् त्रिभिर्गुणै"[4] इति भगवद्वचश्च पीड्येत। नच त्रय सत्त्वादयो गुणा यस्मिंस्तत् त्रिगुणमित्यर्थाभिप्रायेणैतदिति[5] शङ्कनीय सत्त्वादिसत्त्वे तद्धर्माणा सुखादीनामवश्यम्भावनियमाद् एतत्स्वीकारेऽपि[6] सुखादिधर्मविरहत्वाभिधानस्यासङ्गतत्वात्, तथा च मदुक्तैव व्यवस्था ज्यायसीति ज्ञेयम्—

एतेन[7] यद् विज्ञानभिक्षुणा (शान्तादिविशेषशून्यशब्दादिमत्त्वमेव भूताना शब्दादितन्मात्रत्वम्) इत्येव तन्मात्राणा सुखादिधर्मशून्यत्वमभिहितं तद् भ्रान्तस्वान्तविलसितमिति बोध्यम्।

किञ्च (तन्मात्राणि च देवादिमात्रभोग्यत्वेन केवल सुखात्मकान्येव सुखाधिक्याद्) इत्यग्रिमग्रन्थे तत्र[8] सुखाधिक्यकथनेन दु खमोहयोरपि सद्भावमर्थाद् बोधयता भिक्षुणा कथमेतद्विरुद्ध सुखादिशून्यत्वमभिहितमिति प्रष्टव्य स भिक्षु,

तत्र सुखादिधर्मकसत्त्वादित्रयात्मकत्वेन प्रधानस्य त्रिगुणत्व, तत्कार्यत्वेन च महदादीना त्रिगुणत्वमिति विशेष,

यथा च सर्वेषा भावाना सुखाद्यात्मकत्व तथा कान्तादृष्टान्तेनाग्रे[9] व्यक्तम्,

त्रय सत्त्वादयो गुणा यस्मिंस्तत् त्रिगुणमिति व्याख्याने तु वने[10] वृक्षवत् प्रधाने सत्त्वादीनामवस्थान ज्ञेयम्।

ये तु "इच्छाद्वेषप्रयत्नसुखदु खज्ञानान्यात्मनो लिङ्गम्" इतिन्यायसूत्रमनुसरन्तः[11] सुखादीनात्मधर्मानाहुस्तान् प्रत्याह—"तदनेन" इति, अनेन=सुखादीनामात्मातिरिक्तव्यक्ताव्यक्तधर्मत्वकथनेन यत् पराभिमत=तार्किकसम्मतं सुखादीनामात्मगुणत्व तत् पराकृत=निरस्तमित्यर्थ।

"असङ्गो ह्ययं पुरुष" "साक्षी चेता केवलो निर्गुणश्च" इत्यादिश्रुतिविरोधान्न सुखादीनामात्मगुणत्वमिति भाव।

साधर्म्यान्तरबोधक पदान्तरमवतारयति "अविवेकि" इति,

विवेक=पृथग्भवन न यस्य विद्यते तदविवेकि—प्रधानाभिन्नमिति यावत्, तदेवाह—"यथा प्रधानम्" इति, स्वतः=प्रधानाद् प्रधान न विविच्यते=भिद्यते स्वस्मिन् स्वस्य भेदासम्भवा-

१ तानि=तन्मात्राणि। २ एतद्—स्थूलभूतेषु व्यक्ता सुखादय, तन्मात्रेषु चाव्यक्ता सुखादय इत्यभिधान युक्तमित्यर्थ, अन्यथा=तन्मात्रेषु सुखादिधर्माणामनङ्गीकारे। ३ अ १ सू १२६ द्वयो=व्यक्ताव्यक्तयोस्त्रिगुणत्वादिक साधर्म्यमित्यर्थ। ४ भगवद्गीता अ १८ श्लो० ४०। ५ एतत्=कापिल सूत्र भगवद्वचश्चेत्यर्थ। ६ एतत्स्वीकारेऽपि=गुणशब्देन सत्त्वादीना ग्रहणेपीत्यर्थ। ७ एतेन=तन्मात्राणामपि सुखादिमत्त्वप्रदर्शनेन। ८ तत्र=तन्मात्रेषु, सुखाधिक्ये सति दु खमोहयोर्न्यूनत्वमर्थादायातमिति तयोरपि सद्भाव इत्यर्थ। ९ अग्रे=१३ इति कारिकाविवरणे। १० यथा वृक्षसमूहरूपवनस्य वृक्षात्मकत्वेऽपि वने वृक्षा इति वनस्याधारत्वव्यवहारस्तथा सत्त्वादिसमूहरूपप्रधानस्य सत्त्वादिस्वरूपत्वेऽपि प्रधाने सत्त्वादयस्तिष्ठन्तीति प्रधानस्याधारत्वव्यवहार इत्यर्थ। ११ अ १ आ १ सू १०।

अथवा—सम्भूयकारितात्राविवेकः, न हि किञ्चिदेकं पर्याप्तं स्वकार्येऽपि तु सम्भूय, तत्र नैकस्मात्कस्यचित्केन चित्सम्भव इति ।

ये त्वाहुः—विज्ञानमेव हर्षविषादमोहशब्दाद्याकारं न पुनरितोऽन्यस्तद्धर्मेति, तान् प्रत्याह—

"विषय" इति, विषयः=ग्राह्यः—विज्ञानाद् बहिरिति यावद्, अत एव 'सामान्यं'=साधारणम्—अनेकैः पुरुषैर्गृहीतमित्यर्थः ।

---

दित्यर्थ, महदादीना प्रधानाभिन्नत्वे हेतुमाह 'तदात्मकत्वाद्' इति, कार्यकारणयोरभेदाभ्युपगमेन महदादीना प्रधानात्मकत्वादित्यर्थ ।

सम्भूयकारिता=परस्परसमिश्रणपुरस्सरकार्यकरणशीलता, तत्र हेतुमाह, "नहि" इति, हि=यत एक किञ्चित् तत्त्व स्वकार्ये=आत्मीयकार्यजनने न पर्याप्त=शक्तम्, अपि तु सम्भूय=मिलित्वाऽतो महदादेस्सहत्यकारितेत्यर्थ ।

फलितमाह—"तत्र" इति, तत्र=एवं सति केनचित्प्रकारेण न कस्यचिदेकस्मात्सभवोऽस्तीत्यर्थ ।

'विषय' इति पदस्यार्थमाख्यातु तत्कृत्यमाह "ये त्वाहु" इति, ये=योगाचारानुसारिणो विज्ञानवादिनो बौद्धा, हर्ष=सुख विषाद=दु ख मोह प्रसिद्ध एतद्धर्मा शब्दादिराकारो यस्य तद् हर्षविषादमोहशब्दाद्याकार विज्ञानमेव सुखादिधर्मकशब्दादिप्रपञ्चाकारधारि न पुन, इत=विज्ञानाद् अन्य-बाह्य शब्दादिप्रपञ्च तद्धर्मा=सुखादिधर्मवानित्यर्थ ।

कुम्भस्तम्भाद्याकारमान्तर विज्ञानमेव वस्तु सत्र ततोऽन्यद् बाह्य वस्तुजातं किमपि सदिति वदत सौगतस्यायमाशय—यथा हि स्वप्नस्थान विज्ञान विनैव बाह्येनार्थेन ग्राह्यग्राहकाकार भवति यथा वा जागरितस्थान मायामरीच्युदकशुक्तिरजतादिविज्ञान बाह्यानालम्बनं तथाऽन्यदपि जागरितस्थान कुम्भस्तम्भादिविज्ञान न बाह्यालम्बनमित्यवगम्यते विज्ञानत्वाविशेषादिति, विज्ञानवैचित्र्य च वासनावैचित्र्यादुपपन्नम् ।

अपि च यद् येन नियतसहोपलम्भन तत्ततो न भिद्यते यथैकस्माच्चन्द्रमसो द्वितीयश्चन्द्रमा नियतसहोपलम्भश्चार्थो ज्ञानेनेति न तत स भिद्यत इति ।

एतदुक्त भवति—भेदो हि सहोपलम्भानियमेन व्याप्तोऽत एव भिन्नावश्विनौ नावश्य सहोपलभ्येते कदाचिदभ्रापिधानेनान्यतरस्यैकस्य नक्षत्रस्योपलब्धे, तथा च भेदव्यापकसहोपलम्भानियमविरुद्ध उपलभ्यमानो विज्ञानार्थयोस्सहोपलम्भनियमस्तद्व्याप्य भेद निवर्तयतीति, तदुक्त "सहोपलम्भनियमादभेदो नीलतद्धियो, भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये" इति ।

---

१ 'अविवेक्तिता' इति पाठान्तरम् । २ 'शब्दाद्यात्मकम्' इति क्वाचित्क पाठ । ३ एतद्धर्मा=हर्षविषादमोहधर्मवानित्यर्थ, हर्षविषादमोहशब्दादि—इति शब्दादीना हर्षादिरूपत्वाभिधान च धर्मधर्मिणोरभेदमादायेति बोध्यम् । ४ सर्वस्य विज्ञानमात्रत्वे कथमेकस्मिन् विज्ञाने नीलमिद पीतमिदमिति वैचित्र्यावभास इत्यत्राह "विज्ञानवैचित्र्य च" इति यथा स्वप्नादिषु विनैव बाह्यार्थ वासनानिमित्त नानावैचित्र्य तथा जागरितेपीत्यर्थ । ५ अश्विनौ=अश्विन्याख्ये नक्षत्रे । ६ एतेन ज्ञेय ज्ञानादभिन्न ज्ञानोपलम्भक्षणनियतोपलम्भग्राह्यत्वाद् ज्ञानवदित्यनुमानमत्र सूचितमिति ज्ञेयम् ।

विज्ञानाकारत्वे त्वसाधारण्याद्विज्ञानाना वृत्तिरूपाणा तेऽप्यसाधारणाः स्युः ( विज्ञानं यथा परेण न गृह्यते परबुद्धेरप्रत्यक्षत्वादित्यभिप्रायः )

तथा च नर्तकीभ्रूलताभङ्ग एकस्मिन् बहूना प्रतिसन्धानं युक्तम्, अन्यथा तन्न स्यादिति भाव. ।

---

'कुम्भादिक विज्ञानाद् भिन्न ग्राह्यत्वात् प्रदीपात् तत्प्रकाश्यपटादिवद्' इत्याद्यनुमानेन सौगत मतमसङ्गतमित्याशयेनोक्त विषय इनीत्याह–"तान् प्रत्याह विषय इति" इति ।

'विज्ञानाद् बहि ' इति, ग्राह्यत्वेन ग्राहकाद् विज्ञानाद् भिन्न कुम्भादिरर्थ इत्यर्थ ।

अर्थस्य विज्ञानात्मकत्वेऽनुपपद्यमान 'सामान्यम्' इति विशेषणान्तरमवतारयति "अत एव सामान्यम्" इति, अत =यतो विज्ञानाद्भिन्न, साधारण–पुरुषभेदेऽप्यभिन्नत्वेन सर्वपुरुषसाधारणमित्यर्थ , तदेवाह–"अनेकै पुरुषैर्गृहीतम्" इति, बहुविज्ञानालम्बनीभूतमित्यर्थ ।

एकस्यैवार्थस्य यदनेकपुरुषग्राह्यत्वेन सर्वपुरुषसाधारण्य प्रतीयते तद्विज्ञानवादे नोपपद्येतेतिभाव ।

कथन्नोपपद्यत इत्यत्राह–"विज्ञानाकारत्वे तु" इति, घटाद्यर्थाना विज्ञानस्वरूपत्वे तु ते= अर्था अपि असाधारणा =प्रतिपुरुषं भिन्ना स्युर्न सर्वपुरुषसाधारणा इत्यन्वय , तत्र हेतुमाह– 'असाधारण्याद् विज्ञानानाम्" इति, बुद्धिवृत्तिरूपाणा विज्ञानाना प्रतिपुरुष भिन्नत्वादित्यर्थ ।

तदेव विशदयति–"विज्ञान यथा" इति, यथा चैत्रीय विज्ञान परेण मैत्रेण न गृह्यते–परबुद्धेरन्यदीयविज्ञानस्यापर प्रति प्रत्यक्षत्वायोगात् तथा तदभिन्नोऽर्थोऽप्यन्येन नैव गृह्यतेत्यर्थ ।

तथाच विज्ञानाकारत्वेऽर्थस्यानेकैर्गृहीतत्व न स्यादित्यत्र फलितम् ।

मा भूदेकस्यार्थस्यानेकैर्ग्रहणमित्याशङ्क्यान्यथाऽनुपपद्यमान प्रतिसन्धानं तत्र साधकमाह– "तथाच" इति, तथाच=अर्थस्यानेकगृहीतत्वेन सर्वपुरुषसाधारण्येऽभ्युपगम्यमाने च एकस्मिन् नर्तनशीलाबलाविलसितकटाक्षविक्षेपरूपेऽभिनयविशेषेऽनेकेषा द्रष्टॄणा यद् युगपत्प्रतिसन्धान तद् युक्त भवतीत्यर्थ ।

विपक्षे प्रतिसन्धानानुपपत्तिरूप बाधकमाह–"अन्यथा" इति, अन्यथा=विज्ञानवदसाधारण्ये तु तत्=प्रतिसन्धान युक्त न स्यादित्यर्थ. ।

अय भावः–नर्तकीभ्रूभङ्गोत्तर तद् द्रष्टॄणा भरतमतपरिचिताना चैत्रादीनां ( दृष्टस्त्वया मैत्र नर्तक्या भ्रूभङ्गं आ दृष्टश्चैत्रापूर्वोयमभिनय , ततोऽपर आह दृष्टो मयाप्यसौ कुशलेय भरतमते-

---

१ ( ) एतच्चिह्नान्त पाती पाठो न सार्वत्रिक । २ तत्र=अर्थस्यासाधारण्यप्रसङ्गे । ३ विज्ञानादभिन्न । ४ अनेकैर्ग्रहणमन्तराऽघटमानम् । ५ दृष्टस्य पुनरनुसन्धानरूप स्मरणकल्प ज्ञानान्तर प्रतिसन्धानम् । ६ तथाच–इत्यनेन नाऽव्यवहितस्याऽसाधारण्यप्रसङ्गस्य परामर्शोऽपि तु व्यवहितस्य साधारण्यस्याग्रिमवाक्यरचनानुरोधादित्याशयेन व्याचष्टे–"अर्थस्यानेकगृहीतत्वेन" इत्यादिना, 'तथाच' इत्यनेनासाधारण्यपरामर्शे तु ( नर्तकीभ्रूलताभङ्ग एकस्मिन् बहूना प्रतिसन्धान युक्त न स्याद् ) इति पाठो युज्येत तथापाठाभावाच्चात्र व्यवहितपरामर्श इति ध्येयम् । ७ विपक्षे=विज्ञानाकारत्वेनार्थस्यासाधारणत्वे । ८ भरताचार्यप्रणीतनाट्यतन्त्राभिज्ञानामित्यर्थ ।

अचेतनं–सर्व एव प्रधानबुद्ध्यादयोऽचेतना न तु वैनाशिकवच्चैतन्यं बुद्धेरित्यर्थः ।

---

ऽवला ) इत्येव परस्परप्रतिसन्धानेन ह्येकस्यैवार्थस्यानेकैर्युगपद् गृहीतत्वरूप सर्वपुरुषसाधारण्यमुपलभ्यते, यदि ह्यर्थो विज्ञानाकार स्यात् तर्हि चैत्रीयस्वप्नज्ञानविलसितस्यार्थस्य मैत्रेणाज्ञानवदन्यदीयविज्ञानाकारस्यार्थस्यान्येन ग्रहीतुमशक्यत्वाद् यस्य विज्ञानस्याकार सोर्थस्तेनैव स गृह्येत न सर्वैरिति प्रतिसन्धानबलेन प्रतीयमान यद् युगपदेकस्यार्थस्यानेकगृहीतत्व तत्तन्मते न युज्येतेति ।

एतेन ( य किलैकस्य विज्ञानेन कल्पितोऽर्थ स एवान्यैरपि ग्रहीष्यते इति केषाञ्चित्कल्पनाप्युच्छिन्ना ज्ञेया, तथा कल्पनायामेकस्मिन्नीलज्ञानवति सर्वेषा नीलज्ञानवत्त्वप्रसङ्गाच्च ।

किञ्च यस्य नानात्वे यस्यैकत्वमवगत तत्ततोऽत्यन्त भिन्न प्रतीतं 'तथा नानागोव्यक्तिभ्य एक गोत्वमवगत च ज्ञाननानात्वेपि वस्त्वैक्यमिति तदपि ततो भिन्न भवितुमर्हतीति ।

तथा चाह स्म भगवान् पतञ्जलिः–"वस्तुसाम्ये चित्तभेदात्तयोर्विभक्त पन्था" इति ।

अयमर्थ -यत्र किलैकस्मिन्नेव योषिद्रूपे वस्तुनि रक्तद्विष्टविमूढाना जनाना विभिन्नानि सुखादिज्ञानानि जायमानान्युपलभ्यन्ते तत्र प्रमातॄणा परस्परप्रतिसन्धानाद् वस्त्वैक्येपि ज्ञाननानात्व दृश्यते यदि हि वस्तु विज्ञानात्मक भवेत् तर्हि विज्ञानस्यासाधारण्यादनेकविज्ञानालम्बनमेक साधारणं वस्तु न सम्भवेद् अत. वस्तुन साधारण्योपपत्तये विज्ञानातिरिक्त तदभ्युपेयमिति ।

साङ्ख्यपक्षे यथैकस्यैव वस्तुनस्त्रैगुण्यपरिणामत्वेन त्रैरूप्य तथाऽग्रे व्यक्तम् ।

यच्चोक्त–'स्वप्नज्ञानवज्जागरितज्ञानमपि निरालम्बनम्' इति, तदपि न विचारसह, स्वप्नजागरितप्रत्ययर्योर्बाधाबाधाभ्या वैधर्म्यात्स्वप्नप्रत्ययदृष्टान्तेन जाग्रत्प्रत्ययस्य निरालम्बनत्वापादनस्याशक्यत्वात् ।

तथाचाह कृष्णद्वैपायनो भगवान् "वैधर्म्याच्च न स्वप्नादिवद्" इति, एतदुक्तं भवति–विज्ञानवादिनापि हि जागरितप्रत्ययस्याबाधितत्वमवश्यास्थेयमन्यथा कथ स्वप्नप्रत्ययो निरालम्बन इति ज्ञायेत, जाग्रत्प्रत्ययेन बाधितत्वाद् हि स्वप्नप्रत्ययो निरालम्बन इत्यवगम्यते यदि

---

१ वैनाशिक =बौद्ध । २ एतेन=अन्यस्वप्नस्यान्येनाज्ञानादित्युक्तेन हेतुना, एकस्मिन्नीलज्ञानवति सर्वेषा नीलज्ञानवत्त्वप्रसङ्गरूपवक्ष्यमाणेन च हेतुना । ३ तद्=एकत्ववद्, तत =नानात्ववत । ४ 'यथा चैत्रस्य ज्ञानमेकमनेकेभ्यो देवदत्तविष्णुमित्रमैत्रप्रत्ययेभ्यो भिद्यते' इति वाचस्पतिमिश्रोक्त वोदाहरणमत्र ज्ञेयम् । ५ योग० पा० ४ सू० १५ । योषित्पिण्डरूपवस्त्वैक्येपि चित्तभेदाद्=ज्ञानभेदात् तयो =वस्तुज्ञानयोर्विभिन्नो मार्ग, एकत्वानेकत्वविरुद्धधर्मवतोर्वस्तुविज्ञानयोर्भेद इति यावद् इति सूत्रार्थ । ६ रक्तस्य तत्कान्तस्य तस्मिन् सुखज्ञान=सुखवती स्त्र्याकारा वृत्ति , द्विष्टस्य च सपत्नीजनादेस्तस्मिन् दु खज्ञान, विमूढस्य च कामुकस्य तस्मिन् विषादज्ञानमित्येवमेकस्मिन् ज्ञाननानात्व दृश्यत इत्यर्थ । ७ या त्वया दृष्टा सैव मयापीति प्रतिसन्धानमत्र ज्ञेयम् । ८ विज्ञानातिरिक्तार्थवादिनामपि नये कथमेकस्मिन् ज्ञाननानात्वमित्यत्राह "साङ्ख्यपक्ष" इति । अग्रे=( १३ ) इति कारिकायाम् । ९ अ० २ पा० २ सू० २९ ।

प्रसवधर्मि—प्रसवरूपो धर्मो य. सोऽस्यास्तीति प्रसवधर्मि, प्रसवधर्मेति वक्तव्ये मत्वर्थीयः प्रसवधर्मस्य नित्ययोगमाख्यातुम्,

---

च जागरितप्रत्ययोपि बाधित एव भवेत् तदा स्वप्नप्रत्ययस्यासौ बाधको न भवेद्, नहि बाध्यमेव बाधक भवितुमर्हति एवञ्च स्वप्नप्रत्ययोपि न मिथ्येति साध्यविकलोऽसौ दृष्टान्त इति न किञ्चिदेतद् ।

यश्च ज्ञानार्थयो सहोपलम्भनियमस्तेषा भ्रान्तिकारक सोपि न विचार सहते, तथाहि—यदि ज्ञानार्थयो साहित्येनोपलम्भ सहोपलम्भस्तर्हि हेतुरेव विरुद्ध साहित्यस्याभेदविरुद्धभेदव्याप्तत्वेनाभेदे तदनुपपत्तेरथैकोपलम्भनियम तथापि न सह—शब्दस्यैकत्ववाचकत्वाभावाद्। अस्तु वैकत्ववाचकत्व, तथापि किमेकत्वेनोपलम्भ आहोस्विदेक उपलम्भो ज्ञानार्थयोरिति, न तावदाद्य, विषयस्य बाह्यतया ज्ञानस्य चान्तरतयैकत्वेनोपलम्भासम्भवाद्, न द्वितीय, एकोपलम्भनियमस्योपायोपेयभावहेतुकत्वेनाभेदासाधकत्वादित्यन्यत्र विस्तर ।

'प्रसवधर्मि' इति, प्रसव =अन्याविर्भावहेतुत्वरूप परिणाम स एव धर्म प्रसवधर्म, सोऽस्यास्तीति प्रसवधर्मि, कर्मधारयान्मत्वर्थ इनिप्रत्यय इत्यर्थ, तदेवाह "प्रसवरूपो धर्म"इति।

ननु प्रसवो धर्मो यस्येत्येव बहुव्रीहौ "धर्मादनिच् केवलाद्" इति समासान्तेऽनिचि प्रसवधर्मेति कथनेनैव प्रसवधर्मवत्तालाभाद् वृत्तिद्वयाश्रयणमसङ्गत, तथाचाहु शाब्दिका (न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत् तदर्थप्रतिपत्तिकर ) इति, इत्याशङ्कायामाह "प्रसवधर्मेति वक्तव्य" इति,

प्रसवधर्मस्य प्रकृत्यादिधर्मिणा सह नित्यसबन्ध कथयितुं मत्वर्थीय इनि प्रत्यय इत्यर्थ,

'भूमनिन्दाप्रशसासु नित्ययोगेऽतिशायने, संबन्धेऽस्तिविवक्षायां भवन्ति मतुबादय' इति वार्तिकादत्र नित्ययोग इनिरिति भाव ।

य एवार्थो बहुव्रीहिणा ज्ञायते स एवार्थो यदि कर्मधारयान्मत्वर्थीयेन बोध्येत तर्ह्येव कर्म-

---

१ एवञ्च=जागरितप्रत्ययस्यापि बाधितत्वेन स्वप्नप्रत्ययाबाधकत्वे सति। २ बाध्यत्वमेव मिथ्यात्वे प्रयोजक न प्रत्ययत्वमिति भाव । ३ तेषा=बौद्धानाम्। ४ साध्याभावव्याप्तो भवेत्। ५ नच ज्ञानाकारत्वेनान्तरएव विषयो भ्रान्त्या बहिर्वदवभासते, "यदन्तर्ज्ञेयतत्त्व तद् बहिर्वदवभासत" इत्युक्तेरिति शङ्क्यम्, बाह्यार्थाभावे बहिर्वदित्युपमानोक्तेरयुक्तत्वाद्, नहि चैत्रो वन्ध्यापुत्रवदवभासत इति प्रेक्षावान् कश्चिदाचक्षीतेत्यपि ज्ञेयम्। ६ यथा सर्वं चाक्षुषमालोकानुविद्ध नियमेन मनुजैरुपलभ्यते न तावतो घटादिकमालोकात्मक भवत्यपि त्वालोकोपायत्वान्नियम एवमिहापि ज्ञानार्थयोरुपायोपेयभावहेतुक सहोपलम्भनियमो नाऽभेदहेतुक इति बोध्यमित्यर्थ । ७ अन्यत्र=अ० २ पा० २ सू० २८ इत्यादि ब्रह्मसूत्रभाष्यभामत्यादिषु, 'किन्ते ग्राह्यग्राहकयो परमार्थसतोरेवाभेदो विवक्षित' इत्यादिनात्मतत्त्वविवेके, निरालम्बनवादे श्लोकवार्तिके चेत्यर्थ । ८ अ० ५। पा० ४। सू १२४ प्रसवशब्दस्य नित्यसमस्तत्वेनैकपदत्वात्केवलपदत्व बोध्यम्। ९ पूर्वं कर्मधारयसमासरूपा वृत्ति पुनश्चेनिप्रत्ययकरणेन तद्धितरूपा वृत्तिरिति वृत्तिद्वयाश्रयणमित्यर्थ ।

सरूपविरूपपरिणामाभ्या न कदाचिदपि वियुज्यत इत्यर्थः ।

व्यक्तवृत्तमव्यक्तेऽतिदिशति "तथा प्रधानम्" इति, यथा व्यक्तं तथाऽव्यक्तमित्यर्थः ।

ताभ्या वैधर्म्यं पुरुषस्याह—"तद्विपरीतः पुमान्" इति,

स्यादेतद्—अहेतुमत्त्वनित्यत्वादि प्रधानसाधर्म्यमस्ति पुरुषस्य, एवमनेकत्वं व्यक्तसाधर्म्यं, तत्कथमुच्यते "तद्विपरीत. पुमान्" इति अत आह—"तथाच" इति । चकारोऽप्यर्थः,

यद्यप्यहेतुमत्त्वादिकं साधर्म्यं तथाप्यत्रैगुण्यादि वैपरीत्यमस्यास्त्येवेत्यर्थः ।

त्रिगुणमित्युक्तं, तत्र के ते त्रयो गुणाः किञ्च तल्लक्षणमित्यत आह= "प्रीत्यप्रीतिविषादात्मका" इति ।

प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।
अन्योऽन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥ १२ ॥

---

धारयान्मत्वर्थीयो न युक्तो यत्र तु विशेषार्थबोधयिषया कर्मधारयान्मत्वर्थीय प्रयुज्यते तत्र स युक्त एव, 'बहुव्रीहिश्चेत् तदर्थप्रतिपत्तिकर' इत्यत्र चेद् इति यदोपादानस्वारस्यादिति तत्त्वम् ।

प्रसवधर्मस्य प्रधानादिषु नित्ययोग स्पष्टयति "सरूपविरूपपरिणामाभ्या कदाचिन्न वियुज्यत" इति,

तत्र त्रिगुणत्वेन महदादय प्रकृते. सरूपपरिणामा हेतुमत्त्वादिना च ते विरूपपरिणामा इति बोध्यम्—

व्यक्तवृत्त=व्यक्तस्वभाव महदादिसाधर्म्यमिति यावद् ताभ्यां=व्यक्ताव्यक्ताभ्याम् ।

तद्विपरीत=व्यक्ताऽव्यक्तविलक्षण' अत्रिगुण विवेकी, अविषय असाधारण चेतन-अप्रसवधर्मी पुरुष इत्यर्थ ।

चकारोऽप्यर्थ इति, एव च 'तथापि पुमान्' इत्यनेनाऽनेकत्वाऽहेतुमत्त्वादिना व्यक्ताऽव्यक्त सरूपोऽपि पुमान् अपिनाऽत्रैगुण्यादिना तद्विपरीतोपीत्यर्थबोधनात् 'तद्विपरीत' इत्युक्तिर्नासङ्गतेत्यत्र फलित, तदेवाह "यद्यपि" इत्यादिना,

नात्र व्यक्ताऽव्यक्तगतयावद्धर्मेण वैपरीत्य विवक्षितमपि तु 'त्रिगुणमविवेकि' इत्यभिहितत्रैगुण्यादिधर्मेणेति भाव ॥ ११ ॥

---

१ व्यक्तसाधर्म्यमित्यत्र 'अस्ति पुरुषस्य' इत्यनुषञ्जनीयम् । २ अस्य=पुरुषस्य, 'अस्त्येव' इति पाठो न सर्वत्रोपलभ्यते । ३ यदि बहुव्रीहिस्तदर्थजनको भवेत् तदा न कर्मधारयान्मत्वर्थीयोऽन्यदा तु स्यादिति चेच्छब्देन बोधनादिति भाव । ४ विवेकी=असहत । ५ असाधारण =प्रतिसङ्घात भिन्न ।

गुणा इति परार्थाः, 'सत्त्वं लघु प्रकाशकम्' इत्यत्र च सत्त्वादयः क्रमेण निर्देक्ष्यन्ते–तदनागतावेक्षणेन तन्त्रयुक्त्या वा प्रीत्यादीनां यथासंख्यं वेदितव्यम्।

---

अत्र गुणशब्देन 'द्रव्याश्रयगुणवान् संयोगविभागेष्वकारणमनपेक्ष' इति गुणलक्षणम् इति कणादसूत्रोक्ता धर्मविशेषा न गृह्यन्तेऽपि तु परार्थत्वसामान्यात्सत्त्वादयस्तत्त्वविशेषावधर्मिण इत्याशयेनाह–"गुणा इति परार्था" इति।

यथा राज्ञ सर्वार्थनिर्वाहका अमात्यप्रभृतयो गुणा इति व्यवह्रियन्ते परार्थत्वात् तथा पुरुषरूपराज्ञो 'भोगापवर्गरूपार्थसाधका ये सत्त्वादयस्तेऽपि परार्थत्वसामान्याद् गुणा इति व्यपदिश्यन्त' इति भाव।

के ते गुणा ये परार्था इत्यत्राह–"सत्त्व लघु" इत्यादिना, उत्तरत्र निर्देक्ष्यमाणाना कथमिह भानमन्वयो वा इत्यत्राह–"तदनागतावेक्षणेन" इति

तद्=अग्रिमार्यायां निर्देक्ष्यमाण गुणत्रयम् अनागतावेक्षणेन=भाविनोऽपि बुद्धया समाकृष्यानुसन्धान भवतीति न्यायेन इह समाकृष्य प्रीत्यादीनां=प्रीत्यात्मक इत्यादीना लक्षणानां यथासङ्ख्य लक्ष्य वेदितव्यमित्यर्थ,

अत्रैव प्रकारान्तरमाह–"तन्त्रयुक्त्या वा" इति, तन्त्र प्रकृतशास्त्र तस्य युक्ति=सत्त्वादय एवात्र गुणास्ते च यथाक्रम प्रीत्यादिधर्मकर्म इत्याकारसङ्केतात्मिका युक्ति तया वा सत्त्वादयोऽत्रानुसन्धेया यथासङ्ख्य च प्रीत्यादिभि सबन्धनीया इत्यर्थ,

"तन्त्रयुक्त्या च इति चकारघटितपाठे तु–अनागतावेक्षणेन भाविन सत्त्वाद्योऽत्रानुसन्धेया" तेषां प्रीत्यादिभिर्यथासङ्ख्य सबन्ध कार्य इत्यर्थोऽत्र बोध्य, प्रकृतशास्त्रसङ्केतेन च,

एतेन (प्रीत्यप्रीतिविषादात्मका–इत्यत्र प्रीत्यादीनामितरेतरयोगद्वन्द्वबलेन साहित्यसद्भावात् सर्वे एव गुणा प्रीत्यप्रीतिविषादात्मका, प्राप्नुवन्ति नतु सत्त्वमेव प्रीत्यात्मक रजश्चाप्रीत्यात्मक तमश्च विषादात्मकमित्येव विभज्यान्वय, साहित्यस्थले विभज्यान्वयाख्यानस्यादृष्टत्वाद्, अत एव अजाविधनौ देवदत्तयज्ञदत्तावित्यत्र न ज्ञायते कस्याजा धन कस्य चाव्य-इत्येव विभज्यान्वयाख्यानमभिहितं महाभाष्ये) इति शङ्कापि निराकृता वेदितव्या, 'यथा

---

१ अ १ सू १६ (कर्मापि द्रव्याश्रित निर्गुण चास्तीत्यत उक्त 'सयोगविभागेषु' इति-यथा सयोगविभागयोरनपेक्ष कारण कर्म तथा न गुण कर्मभिन्न इति यावद्)। २ सुखादिधर्मका इत्यर्थ। ३ भाविना सत्त्वादीनामिहानुसन्धाने तेषा यथासङ्ख्यमन्वये चेत्यत्र। ४ प्रीत्यादीनि धर्मकर्माणि येषा गुणाना ते प्रीत्यादिधर्मकर्माण यथा सत्त्वगुण प्रीतिधर्मा प्रकाशकर्मा चेति। ५ एतस्मिन् पक्षे भाविना गुणानामिह परामर्शे अनागतावेक्षणेन इति साधक तेषा यथासङ्ख्य सबन्धे च 'तन्त्रयुक्त्या' इति साधकम् इति विभज्य कृत्यद्वये साधकद्वयमभिहितमिति बोध्यम्। ६ एतेन=प्रकृतशास्त्रसङ्केतेन यथासङ्ख्यमन्वयकरणेन। ७ अन्वय इत्यत्र प्राप्नोतीति शेष। ८ अजाऽवी धन ययोरिति बहुव्रीहि। ९ कस्य चाऽवयो धनम्=अविशब्दएडकावाची= १० 'आद्यन्तौ टकितौ' इति सूत्रे भगवता पतञ्जलिनेति शेष।

एतदुक्तं भवति—प्रीतिः=सुख, प्रीत्यात्मकः सत्त्वगुणः,

अप्रीतिः=दुःखम्—अप्रीत्यात्मको रजोगुणः, विषादः=मोहः—विषादात्मकस्तमोगुण इति,

ये तु मन्यन्ते—'न' प्रीतिर्दुःखाभावादतिरिच्यते, एवं दुःखमपि न प्रीत्यभावादन्यद् इति, तान् प्रति आत्मग्रहणम्,

नेतरेतराभावाः सुखादयोऽपि तु भावाः, आत्मशब्दस्य भाववचनत्वात् प्रीतिरात्मा भावो येषा ते प्रीत्यात्मानः, एवमन्यदपि व्याख्येयम्.

---

सङ्ख्यमनुदश समानाम्' इति पाणिनीयसङ्केतबलेन 'आद्यन्तौ टकितौ इत्यत्र साहित्यपि विभज्यान्वयाख्यानमिव साङ्ख्यसङ्केतबलेनात्रापि विभज्यान्वये दोषाभावाद्,

तन्त्र=कर्ममीमासाशास्त्र तस्य युक्ति=स्थानाख्यप्रमाणरूपा, तया वा यथासङ्ख्यमन्वय इत्यर्थो वात्र ज्ञेय,

केचित्तु सकृदुच्चरितानां सत्त्वादीना कथङ्कनरत्रात्र चान्वय इत्याशङ्कायामुक्त "तन्त्रयुक्त्या च" इति, इत्येव योजयन्ति, एकस्यानेकार्थबोधकत्वेनानेकत्रान्वयस्तन्त्रयुक्तिरित्यर्थ ।

'प्रीत्यप्रीतिविषादात्मका' इत्यत्रात्मपद द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येक प्रीत्यादिभिरन्वितमित्यभिप्रेत्य यथासङ्ख्यान्वय स्पष्टयति—"प्रीति सुखम्" इत्यादिना, अत्र 'आत्मशब्द स्वभाववाची' 'आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि' इति विश्वकोशात्, तथा च प्रीति स्वभाव=धर्मो यस्यासौ प्रीत्यात्मक इत्यत्र फलितम्, एवमग्रेऽपि ज्ञेयम्,

'प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योन्य वैधर्म्यम्' इति साङ्ख्यसूत्रे 'विषादाद्यै' इति 'आद्य' शब्दोपादानाच्चात्र प्रीत्यादीनामुपलक्षणत्व बोध्य, तेन प्रीतिशब्देन अनुकम्पाऽऽर्जवमार्दवलज्जासन्तोषविवेकक्षमादीनाम्, अप्रीतिशब्देन च—मानमदमत्सरलोभादीनां, विषादशब्देन च वञ्चनकार्पण्यकौटिल्याज्ञानादीना ग्रहणमत्रोह्यम्,

तथाचाहु पञ्चशिखाचार्या "सत्त्व नाम प्रसादलाघवानभिष्वङ्गप्रीतितितिक्षासन्तोषादिरूपानन्तभेद समासत सुखात्मकम्, एव रजोपि शोकादिनानाभेद समासतो दुःखात्मकम्, एव तमोपि निद्रादिनानाभेद समासतो मोहात्मकम्" इति,

'विषादात्मका' इत्यात्मपदोपादानकृत्य दर्शयितुं तन्निरसनीय मतान्तरमनुवदति "ये तु मन्यन्त" इति,

'तान्प्रत्यात्मग्रहणम्' इति,—तन्मतनिरासाय आत्मशब्दोपादानमित्यर्थ ।

यथा च तन्मतनिरासस्तथाह—"नेतरेतराभावा" इति, अपि तु भावा—सद्रूपा इत्यर्थः तत्र हेतु—'आत्मशब्दस्य भाववचनत्वाद्' इति,

---

१ स्थान—क्रम इति पर्याय, येन क्रमेण सबन्धिना भान तेनैव क्रमेण तथामन्वय इति यावद्, एतच्च "क्रमश्च देशसामान्याद्" ३। ३। १२। ३। इति सूत्रे पूर्वतन्त्रे व्यक्तम्। २ अग्रेपि=अप्रीत्यात्मक इत्यादौ । ३ अ० १ सू० १२७ । ४ आत्मशब्दोपादानेन निराकरणीयमित्यर्थ ।

भावरूपता चैषामनुभवसिद्धा, परस्पराभावात्मकत्वे तु परस्पराश्रयापत्ते-रेकस्याप्यसिद्धेरुभयासिद्धिरिति भावः।

स्वरूपमेषामुक्त्वा प्रयोजनमाह—"प्रकाशप्रवृत्तिनियमार्थाः" इति, अत्रापि यथासङ्ख्यमेव।

रजःप्रवर्तकत्वात्सर्वत्र लघु सत्त्वं प्रवर्तयेद् यदि तमसा गुरुणा न नियम्येत, तमोनियत तु क्वचिदेव प्रवर्तयतीति भवति तमोनियमार्थम्,

प्रयोजनमुक्त्वा क्रियामाह—"अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च" इति,

---

अनुभवसिद्धत्वानङ्गीकारे दोषमाह—"परस्पराभावात्मकत्वे तु" इति, दु खे ज्ञाते तदभावात्मकप्रीतिज्ञान प्रीतौ ज्ञातायां च तदभावात्मकदु खज्ञानमित्येवमन्योन्याश्रयापत्तेरित्यर्थ।

एव च आत्मशब्दोऽत्र स्वरूपपर्याय इत्यत्र फलितम्।

नन्वेव सूत्रे प्रीत्यादीना गुणधर्मत्ववचनं विरुध्येत इति चेद्—अत्राहु साङ्ख्यप्रवचनभाष्यकारा 'सुखाद्यात्मकता तु गुणाना मनस सङ्कल्पात्मकत्वाद् धर्मधर्म्यभेदादेवोपपद्यते' इति।

आत्मशब्दस्य स्वभाववाचित्वे तु न कोऽपि दोष इति ध्येयम्।

'प्रकाशप्रवृत्तिनियमार्था' इत्यत्र अर्थशब्द प्रयोजनवाची, प्रयोजन चात्र तद्योग्यता, पूर्ववच्च प्रत्येकमन्वय. प्रकाशार्थं सत्त्व, प्रवृत्त्यर्थं रज, नियमार्थं तम इति च यथासङ्ख्य सबन्ध, तदेवाह अत्रापि यथासङ्ख्यमेव इति, तत्र प्रकाश=बुद्धिवृत्त्यादिरूप आलोक, प्रवृत्ति—यत्न—चालन वा, नियम=प्रकाशक्रियाभ्या शून्यत्व तयो प्रतिबन्ध इति यावद् प्रकाशप्रवृत्तिभ्यामेव सकलार्थसिद्धेरल नियमनेन तम कृत्येनेत्याशङ्कायां तम कृत्यमाह—"रज-प्रवर्तकत्वाद्" इति, रज इति कर्तृपदं यदि गुरुणा तमसा न नियम्येत=स्वकार्यात्प्रवृत्तेर्न प्रच्याव्येत तर्हि प्रवर्तकस्वभावत्वाद् रजोगुण सर्वदैव सर्वत्र लघुरूप सत्त्वगुण प्रवर्तयेत तमोनियतं=तमसाप्रतिबद्धन्तु क्वचिदेव प्रवर्तयति रजोगुणमित्यतो भवति नियमार्थं तम इत्यर्थ।

'सा च प्रत्येकमभिसंबध्यते' इति, उपलक्षण चेदम् 'अन्योन्यपदस्यापि प्रत्येक सबन्धो बोध्य।

एषा मध्येऽन्यतमेन गुणेन—अर्थवशादुद्भूतेन=धर्माधर्मनिमित्तकसुखादिरूपप्रयोजनबलात्स्वकार्यजननोन्मुखेन अन्यद्=गुणान्तर तिरस्क्रियत इत्यर्थः।

सत्त्वम् आत्मन=स्वसबन्धिनी सुखादिरूपां शान्ता वृत्ति प्रतिलभते=प्राप्नोति, सुखादिरूपेण परिणमत इति यावद्, घोराम् इत्यत्रापि आत्मनो वृत्ति प्रतिलभते, इत्यस्यानुवृत्तिर्बोध्या, एवमुत्तरत्रापि।

---

१ एवम्=आत्मशब्दस्य स्वरूपवाचकत्वे। २ 'प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योन्यवैधर्म्यम्' इति सूत्रे वैधर्म्यकथनमुखेन प्रीत्यादीना गुणधर्मत्वसूचनादिति भाव। ३ प्रयोजनयोग्यता, तेन प्रलयदशायां प्रकाशादिकार्याभावेऽपि न तद्योग्यताविरह इति ज्ञेयम्।

वृत्तिः=क्रिया, सा च प्रत्येकमभिसंबध्यते, अन्योन्याभिभववृत्तयः=एषामन्यतमेनार्थवशादुद्भूतेनान्यदभिभूयते,

तथाहि—सत्त्वं रजस्तमसी अभिभूय शान्तामात्मनो वृत्तिं प्रतिलभते, एवं रजः सत्त्वतमसी अभिभूय घोराम्, एवं तमः सत्त्वरजसी अभिभूय मूढामिति,

'अन्योन्याश्रयवृत्तयः'=यद्यप्याधाराधेयभावेन नाश्रयार्थो घटते तथापि यदपेक्षया यस्य क्रिया स तस्याश्रयः,

तथाहि—सत्त्वं प्रवृत्तिनियमावाश्रित्य रजस्तमसोः प्रकाशेनोपकरोति, रजः प्रकाशनियमावाश्रित्य प्रवृत्त्येतरयोः, तमः प्रकाशप्रवृत्ती आश्रित्य नियमेनेतरयोरिति.

अन्योन्यजननवृत्तयः=अन्यतमोऽन्यतममपेक्ष्य जनयति. जननञ्च परि-

अन्यस्याऽन्यत्कथमाश्रय कुण्डबदरयोरिवाधाराधेयभावासम्भवादित्याशङ्क्य समाधत्ते—"यद्यपि" इत्यादिना, आधारत्वेन—आश्रयार्थ =मुख्य आश्रयशब्दार्थोऽत्र न घटते=सभवति तथापि सहकारित्वरूपो गौण आश्रयार्थोऽत्राभ्युपेय इत्यर्थ ।

एतदेव स्पष्टयति—"तथाहि सत्त्वम्" इत्यादिना, सत्त्वगुणो हि रजस्तम कार्यभूतौ प्रवृत्तिनियमौ आश्रित्य=सहकारित्वेनादाय स्वकार्येण प्रकाशेन रजस्तमसी उपकरोति=तयोस्साहाय्यमाचरति, एवं रज स्वधर्मेण प्रवृत्त्या इतरयो =सत्त्वतमसो –उपकरोतीत्यनुषङ्ग., एव तमः स्वकार्येण नियमनेन इतरयो.=सत्त्वरजसोरुपकरोतीत्यर्थ, मातु स्मरतीतिवद् रजस्तमसोरिति कर्मणि षष्ठी, एवम् (इतरयो) इत्यपि, सत्त्व हि स्वयमप्रवर्तकतया रजोधर्मप्रवृत्तिमाश्रित्य प्रकाश करोति, रजश्च स्वयमप्रकाशरूपतया सत्त्वधर्मं प्रकाशमाश्रित्य प्रवृत्तिं करोतीत्यादि यथायथमूह्यम्, एतच्चाग्रे व्यक्तम् ।

'अन्यतमोऽन्यतममपेक्ष्य जनयति' इत्यत्र जनन नापूर्वोत्पादनमसत्कार्यवादप्रसङ्गादपि तु तत्तद्रूपेण परिणमनमित्याशयेनाह—"जनन च परिणाम" इति,

कोसौ परिणामो यत्रान्योन्यमपेक्ष्य गुणा हेतवो भवन्तीत्याकाङ्क्षायामाह—"स च गुणानां सदृशरूप" इति, गुणाना साम्यावस्थारूप प्रधानाख्य स परिणाम इत्यर्थ । एतच्च 'प्रतिसर्गावस्थाया सत्त्व रजस्तमश्च सदृशपरिणामानि भवन्ति' इत्यादिनाऽग्रे व्यक्तम् ।

'अन्योन्याश्रयवृत्तय' इत्यनेन विसदृशे परिणामेऽन्यतमो गुणोऽन्यतममाश्रयत इत्यभिहितमत्र तु सदृशे परिणामेऽन्यतमो गुणोऽन्यतमं गुणमपेक्षत इत्युक्तमिति न पौनरुक्त्यम्—

१ 'कर्मादीनामपि सबन्धमात्रविवक्षाया षष्ठ्येव' इति शाब्दिकसङ्केतादिति भाव । २ अग्रे=सत्त्वतमसी स्वयमक्रियतया स्वस्वकार्य प्रत्यवसीदन्ती रजसोपष्टभ्येते' इत्यादिनाऽग्रिमकारिकाकौमुद्यामित्यर्थ । १६ इति कारिकाव्याख्यानारम्भ इत्यर्थ । ३ अन्यतमो गुणोऽन्यतमगुणमाश्रित्य प्रवर्तत इति पूर्वाभिहिताद् "अन्यतमो गुणोऽन्यतममपेक्ष्य परिणमते" इत्यभिधानस्य को भेद इत्याकाङ्क्षायामाह—"अन्योन्याश्रयवृत्तय इत्यनेन" इति, विसदृशे=असाधारणे प्रकाशादिरूपे कार्ये इत्यर्थ ।

णामः, स च गुणाना सदृशरूपः, अत एव न हेतुमत्त्वं, तत्त्वान्तरस्य हेतोरभावाद्, नाप्यनित्यत्व, तत्त्वान्तरे लयाभावाद्।

'अन्योन्यमिथुनवृत्तयः'=अन्योन्यसहचराः-अविनाभाववर्तिन इति यावत्, 'चः' समुच्चये,

भवति चात्रागमः—

---

ननु प्रधानस्य गुणाना सदृशरूपपरिणामत्वे तस्य[1] हेतुमत्त्व स्यात् तथाच 'हेतुमदनित्यम्'इत्यादिना यद् हेतुमत्त्व व्यक्तसाधर्म्यमभिहित तदव्यक्तेऽतिप्रसक्तमित्याशङ्कामपनेतुमाह—"अतएव" इति, यत एव गुणाना सदृशरूप परिणाम प्रधानमतएव न तस्य हेतुमत्वमित्यर्थ । तत्र हेतुमाह "तत्त्वान्तरस्य" इति, यत्र हि तत्त्वान्तर=विजातीयतत्त्व तत्त्वान्तरेण जन्यते तत्र हि विसदृश परिणामरूप तत्त्वान्तरं हेतुमदित्युच्यतेऽत्र तु गुणा एव प्रधानमिति न तत्त्वान्तरमव्यक्तमिति न हेतुमत्प्रधानमित्यर्थ ।

ननु सर्गकाले गुणक्षोभे जायमाने साम्यावस्थाया विलयेन प्रधानस्यानित्यत्व स्यादित्याशङ्कायामाह—"नाप्यनित्यत्वम्" इति, साम्यावस्थातो नातिरिक्त तत्त्वमवस्थावद् गुणत्रयमिति न तत्र लये तत्त्वान्तरलयव्यवहार इति भाव ।

'अन्यतमोऽन्यतम जनयति' इति क्वाचित्क पाठस्तु[2] न स्वान्त सन्तोषयति गुणाना नित्यत्वेनान्योन्य जन्यजनकभावाभावाद्,

सर्वस्य त्रिगुणात्मकत्वेन परस्पर मिलित्वा सर्वे सर्वजनका इति परमार्थ ।

(एते गुणा परस्परोपरक्तप्रविभागा[3] इतरेतरोपाश्रयेणोपार्जितमूर्तय ) इत्यादिना योगभाष्ये[4] व्यक्तमेतद्,

'अन्योन्यमिथुनवृत्तय, =स्त्रीपुरुषवत्परस्पर मिथुनीभूता., तदेवाह—"अन्योन्यसहचरा" इति, सहचरपदार्थमाह—"अविनाभाववर्तिन" इति,

'मिथुनवृत्तयश्च' इति चकार —अन्योन्याभिभवादीना धर्माणा[5] गुणेषु समुच्चय सूचयन् तेषा पाक्षिकत्वमाक्षिपतीत्याह—"च समुच्चय" इति,

एतत्सर्वम् "अन्योऽन्याभिभवाश्चैते विरुध्यन्ति परस्परम्, तथाऽन्योन्याश्रया. सर्वे न तिष्ठन्ति निराश्रया" १३ इत्यारभ्य 'यथा स्त्री पुरुषश्चैव मिथुन च परस्परम्। तथा गुणा समायान्ति युग्मभावं परस्परम्। रजसो मिथुन सत्त्वं सत्त्वस्य मिथुन रज । उभे ते सत्त्व रजसी तमसो मिथुने विदु" (४९।५०) इत्यन्तेन ग्रन्थेन देवीभागवते[6] प्रपञ्चितमिति तत्रैव गुणवृत्तविस्तरो निरीक्ष्य इत्याशयेनाह—"भवति चात्रागम" इति,

---

१ प्रधानस्य । २ 'अन्यतममपेक्ष्य' इत्यध्याहृतापेक्ष्येतिपदावटितपाठस्त्वित्यर्थ । ३ परस्परम् उपरक्त =ससृष्ट प्रविभाग =स्वीय स्वीयो भागो येषा ते इत्यर्थ , इतरेतरसाहाय्येनोत्पादिता महदाद्या मूर्तयो यैस्त इत्यर्थ । ४ पा० २ सू० १८। ५ तेषाम्=अन्योऽन्याभिभवादीना पाक्षिकत्व=कदाचिदन्योन्याभिभावकत्व, कदाचिच्चान्योन्याश्रयत्व, कदाचिच्चान्योन्यमिथुनत्वमित्येवविध पाक्षिकत्वं निराकरोतीत्यर्थ । ६ तृतीयस्कन्धेऽष्टमाध्याय इति शेष ।

"अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्र गामिनः ।
रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुन रजः ।
तमसश्चापि मिथुने ते सत्त्वरजसी उभे ।
उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते ।
नैषामादिः सम्प्रयोगो वियोगो वोपलभ्यते इति" ॥ १२ ॥

'प्रकाशप्रवृत्तिनियमार्था' इत्युक्तं, तत्र के त इत्थंभूताः कुतश्चेत्यत आह— "सत्त्वं लघु" इत्यादि,

**सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।**
**गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥ १३ ॥**

सत्त्वमेव लघु प्रकाशकमिष्टं साङ्ख्याचार्यैः,

---

अन्यान्यमिथुना=परस्परसहचरा, अत एव सर्वे गुणा सर्वत्रान्योन्य सम्मिलिता., तदेव स्पष्टयति—"रजस मिथुन सत्त्वम्" इति, मिथुन=सहचारीत्यर्थ ।

गुणानामनादित्वमाह "नैषामादि" इति, एषा गुणानाम् आदि=षड्भावविकारेषु[1] प्रथम उत्पत्तिरूपो विकारो नोपलभ्यते=न ज्ञायते नास्तीति यावद्, 'गुणास्तु न प्रत्यस्तमयन्ते नोपजायन्ते' इत्येवमुत्पत्तेर्निषिद्धत्वादित्यर्थ ।

एव क इमे परस्पर संयुक्ता जाता इत्येव सयोगोऽपि नोपलभ्यते, गुणानामनादित्वेन तत्सयोगस्याप्यनादित्वादित्यर्थ, एव सर्वदैवाऽन्योन्य सयुक्तत्वाद्वियोगोप्येषा नास्तीत्यर्थ ।

यत्तु 'एते गुणा सयोगविभागधर्माण' इति योगभाष्य[3] तत्तु 'पुरुषैः[4] सह संयोगविभागवन्त इत्यर्थक नत्वन्योन्य सयोगविभागवन्त इत्यर्थकमिति सर्वमवदातम् ॥ १२ ॥

'के त' इति, किं नामानस्ते[6] गुणा, कुतश्च प्रयोजनाद् त इत्थभूता=प्रकाशादिप्रयोजनजननायान्योऽन्याभिभवादिशीला प्रवर्तन्त इत्यर्थ ।

कैरिष्टमित्याकाङ्क्षां पूरयति—"साङ्ख्याचार्यै" इति—महर्षिकपिलादिभिरित्यर्थ[7] ।

तथाच सूत्र—"लघ्वादिधर्मै[8] साधर्म्यं वैधर्म्यं[9] च गुणानाम्" इति ।

---

१ जायते—अस्ति—वर्द्धते—विपरिणमते—अपक्षीयते—विनश्यति—इति यास्काचार्योक्तेष्वित्यर्थ । २ पा० २ सू० १९ इत्यत्रत्य योगभाष्यमिदम् । ३ २।१८। ४ अविवेकिना पुरुषेण सह गुणा सयुज्यन्ते विवेकी च तैर्वियुज्यत इत्यर्थ । ५ एषामादि सयोगो नेत्यन्वयेन यद्यपि गुणा परस्पर सयुक्तास्तथापि कदा सयुक्ता इत्येव न ज्ञायतेऽनादित्वात्सयोगस्येत्यर्थो वात्र बोध्य । ६ यद्वा किंस्वरूपास्त इत्यर्थ । ७ आदिना पञ्चशिखाचार्ये, तद्वचन च 'सत्त्वं नाम प्रसादलाघव' इत्यादिक पूर्वमुदाहृतमिति । ८ अ० १ सू० १२८। लघ्वादीति भावप्रधानो निर्देश, लघुत्वादिधर्मेण सर्वासा सत्त्वव्यक्तीना साधर्म्यं, वैधर्म्यं च रजस्तमोभ्याम्, एव चलत्वादिधर्मेण रजोव्यक्तीना गुरुत्वादिधर्मेण च तमोव्यक्तीना साधर्म्यम्, अत्र च पृथिवीव्यक्तीना पृथिवीत्वेनेव सत्त्वादिव्यक्तीनामेकजातीयतयैकत्व, गुणान्तरससर्गवैचित्र्येण च उत्कृष्ट सत्त्व मध्यम सत्त्व निकृष्ट सत्त्वमित्यादिरूपेण च सत्त्वादिव्यक्तीना नानात्व च बोध्य, सत्त्वादीना प्रत्येकमनेकव्यक्तिकत्व सिद्धवत्कृत्वैवात्र लघुत्वादीना साधर्म्याभिधानमेकव्यक्तिकत्वे समानाना धर्मरूपस्य साधर्म्यस्याभिधानमनुपपन्न हि स्यादिति । ९ वैधर्म्यस्य प्रागेव ( प्रीत्यप्रीतिविषादैरिति सूत्रे ) उक्तत्वादत्र वैधर्म्यं चेति पाठ प्रामादिक एवेति विज्ञानभिक्षु ।

तत्र कार्योद्गमने हेतुर्धर्मो लाघवं, गौरवप्रतिद्वन्द्वि यतोऽग्नेरूर्ध्वज्वलनं भवति, तदेव लाघवं कस्यचित् तिर्यग्गमने हेतुर्भवति, तथा वायोः, एवं करणाना वृत्तिपटुत्वे हेतुर्लाघवं, गुरुत्वे हि मन्दानि स्युः, इति सत्त्वस्य प्रकाशकत्वमुक्तम्,

---

किंलक्षण तत् लघुत्व यत्सत्त्वे वर्तत इत्याकाङ्क्षाया वस्त्वन्तर[1] तावत्तदुदाहर्तुं तन्निर्वक्ति[2] "तत्र कार्योद्गमन" इति, तत्र=लघुत्वप्रकाशयोर्मध्ये[3] कार्यस्य=वस्तुन उद्गमने=ऊर्द्धगमने यत्कारण तल्लाघवमित्यर्थ।

नतु गुरुत्वाभावेनैवोर्द्धगमने सिद्धेऽल लघुत्वरूपगुणान्तराश्रयेण, अतएवौलूक्यैर्लघुत्व[4] गुणेषु न गणितमित्याशङ्कायामाह–"गौरवप्रतिद्वन्द्वि" इति, 'गुरुत्व' जलभूम्यो[5] पतनकर्मकारणमप्रत्यक्ष पतनकर्मानुमेयम् इति। लक्षित यद् गुरुत्व तद्विरोधीत्यर्थ।

यथाऽऽधोगमनहेतुत्वेन गुरुत्वमभ्युपेयते तथोर्द्धगमनहेतुत्वेन लघुत्वमप्यभ्युपेयता न्यायसाम्याद्, अक्लृप्ताभावकारणत्वकल्पनापेक्षया क्लृप्तभावकारणत्वकल्पनाया एवौचित्यादिति भाव।

पतनाऽनुमेयगुरुत्ववल्लघुत्वमप्यूर्द्धगमनानुमेयमतीन्द्रियमेवेत्याशयेन लघुत्वाश्रयं दर्शयन्नुदाहरणमाह, "यतोऽग्ने" इति यस्माद्धर्मादग्नेरूर्ध्वज्वलन भवत्येवमतो यो गौरवप्रतिद्वन्द्वी कार्योद्गमने हेतुर्धर्मस्तल्लाघवमिति समुदायार्थ।

ननु यदि गुरुत्वाभावादन्यदूर्ध्वगमनहेतुत्वेन लघुत्व गुणान्तरमभ्युपेयते तर्हि लघुत्वादन्यत् तिर्यग्गमनहेतुत्वेनापि किञ्चिद् गुणान्तरमभ्युपेतव्य भवेद्, अन्यथा पवनगततिर्यग्गमनस्याकस्मिकत्वापत्तेरित्यत्राह[7] "तदेव लाघवम्" इति, न चैव लक्षणाननुगम[8], गौरवप्रतिद्वन्द्वीत्यनेन गुरुत्वजन्याधोगमनविभिन्नगमनहेतुत्व लघुत्वमित्यर्थस्य विवक्षितत्वेन दोषाभावाद्।

एव वस्त्वन्तरे लघुत्व प्रदर्श्य सत्त्ववृत्तिलघुत्वस्वरूपमाह "एवम्" इति, यथाऽग्न्याद्युद्गमने हेतुर्धर्मविशेषो लाघवम् एव=तथा करणानाम्=आहरणधारणप्रकाशनसाधनाना वक्ष्यमाणानां[9] त्रयोदशप्रकाराणामिन्द्रियाणा या वृत्तय–स्वस्वविषयग्रहणाय सन्निकर्षरूपव्यापारविशेषा तासां वृत्तीनां यत् पटुत्व–झटिति स्वविषयग्रहणौन्मुख्यरूपनैपुण्य तत्र हेतुभूतो यो धर्मस्तल्लाघव, तच्च सत्त्वधर्म इति सत्त्व लघ्वित्यर्थ।

---

१ वस्त्वन्तरे=सत्त्वगुणातिरिक्ते वह्न्यादौ। २ तद्=वस्त्वन्तरवृत्ति लघुत्व निर्वक्ति=लक्षयति। ३ सत्त्व लघु प्रकाशकमित्यनेन बोधितयोर्लाघवप्रकाशरूपधर्मयोरित्यर्थ। ४ औलूक्यै=कणादमुनिभिरित्यर्थ। ५ प्रशस्तपादभाष्यमिद, तत्र 'जलभूम्यो' इति गुरुत्वाश्रयकथन, 'पतनकर्मकारणम्' इति गुरुत्वकार्यकथनम्, 'अप्रत्यक्षम्' इति गुरुत्वस्वभावकथनम्, 'पतनकर्मानुमेयम्' इति गुरुत्वे प्रमाणोपन्यास इति बोध्यम्। ६ द्वितीयपतने वेगस्यापि कारणत्वादुक्तमाद्येति। ७ आकस्मिकत्वापत्ते=र्निर्हेतुकत्वापत्तेरित्यर्थ। ८ उद्गमनकारण लाघवमित्युक्ते पवनतिर्यग्गमनकारणे लाघवे लक्षणासङ्गति, तिर्यग्गमनकारण लाघवमित्युक्ते चाग्न्युद्गमनकारणे लाघवे लक्षणागमनमित्येव लक्षणाननुगम इत्यर्थ। ९ 'करण त्रयोदशविध तदाहरणधारणप्रकाशकरम्' ३२ इत्यार्याया वक्ष्यमाणानामित्यर्थ।

सत्त्वतमसी स्वयमक्रियतया स्वस्वकार्यप्रवृत्तिं प्रत्यवसीदन्ती रजसोपष्टभ्येते–अवसादात्प्रच्याव्य स्वकार्ये उत्साहप्रयत्नं कार्येते, तदिदमुक्तम् "उपष्टम्भकं रज" इति,

कस्माद् इत्यत उक्तं–"चलम्" इति, तदनेन रजसः प्रवृत्त्यर्थत्वं दर्शितम्।

रजस्तु चलतया परितस्त्रैगुण्यं चालयद्गुरुणाऽऽवृण्वता च तमसा तत्र

---

सात्त्विकेषु करणेषु विषयग्रहणरूपपटुत्वदर्शनेन तत्र सत्त्वधर्मो लघुत्वमस्तीत्यनुमयमिति भाव।

सत्त्वगुणस्य साक्षाद् व्यवहारगोचरताऽदर्शनात् सात्त्विकानि करणान्येव लघुत्वाश्रयत्वेनात्रोदाहृतानि न तु साक्षात्सत्त्वमुदाहृतमित्यपि बोध्यम्—

एतेन करणानि लघूनि पाटववत्त्वादित्यनुमानमत्र सूचितम्।

एतस्मिन्ननुमाने 'यानि न लघूनि पाटववन्ति तानि यथा तिमिरोपहतानि नयनादीनि तमसावृतानि वा घटादीनि' इति व्यतिरेकव्याप्तिं दर्शयति–"गुरुत्वे हि" इति, हि–यतः लघुत्व विरोधिनि गुरुत्वे सति तानि करणानि मन्दानि–स्वविषयप्रकाशनासमर्थानि स्युरित्यतो विषयप्रकाशनरूपपटुत्वदर्शनेन तत्र लघुत्वमस्तीति प्रतीयतामित्यर्थ ।

एतादृग्लघुत्वादेव सत्त्व प्रकाशकमित्युच्यत इत्याह " इति सत्त्वस्य " इति, इति=अत लघुत्वादिति यावद्।

रजस स्वभावमाचक्षाण 'उपष्टम्भकम्' इति व्याचष्टे–"सत्त्वतमसी" इति, स्वयमक्रियतया=स्वरूपेणाप्रवृत्तिशीलतया स्वस्वकार्यप्रवृत्तिं प्रति=प्रकाशादिरूपस्वस्वकार्ये स्वकीयप्रवृत्तिजननाय अवसीदन्ती=शिथिलीभूते अशक्ते सत्त्वतमसी रजसा=रजोगुणेन उपष्टभ्येते=स्वकार्यजनने प्रवर्त्येते तदिद=तस्मादिदमुक्तम्, उपष्टम्भक रज इतीत्यन्वय —

उपष्टभ्नाति=उपोद्बलयति–उत्तेजयति–वृद्ध यष्टिरिवोत्थापयति–प्रोत्साहयति स्वकार्ये प्रवर्तयतीत्युपष्टम्भकमित्याशयेन 'उपष्टभ्येते' इत्यस्यार्थमाह–"अवसादात्प्रच्याव्य" इति, शैथिल्यादध प्रपात्य–शैथिल्य निरस्येति यावद्,

कस्मात्पुन कारणाद् रज एवविधमिति पृच्छति, "कस्माद्" इति, यतो रजश्चल=सक्रियत्वेन प्रवृत्तिशीलमत उपष्टम्भकमित्यर्थः।

'गुरुवरणकमेव तम' इति व्याचक्षाणस्तम स्वभावमाह–"रजस्तु" इति, चलतया=प्रवृत्तिशीलत्वेन परित =सर्वत त्रैगुण्य=त्रिगुणात्मकमिन्द्रियादिक चालयत्=स्वकार्ये प्रवर्तयद् रज. तमसा=तमोगुणेन क्वचिदेव कार्ये प्रवर्त्यते प्रवृत्तिक्षम क्रियते यत इति=अत ततस्तत=तस्मात्तस्मात्कार्याद् व्यावर्त्य=रज प्रवृत्तिं रोधयित्वा वर्तमानं तमो नियामकमित्युच्यते तदिदमुक्त 'गुरुवरणकमेव तम इति, इत्यन्वय ,

तमसो नियमनकर्तृत्वे हेतुगर्भित विशेषण 'गुरुणा' इति, लघुत्वविरोधिस्थितिहेतुभूतो धर्मो

---

१ सात्त्विकाभिमानकार्येषु। २ लाघव सत्त्वधर्म इति प्रकृते लघुत्वाश्रयत्वेन सत्त्वमेवोदाहरणीय नतु तद्भिन्नानि करणानि, अन्यधर्मस्यान्यत्रोदाहरणदानस्यायुक्तत्वादित्याकाङ्क्षायामाह "सत्त्वगुणस्य" इति। ३ सत्त्वतमसी इति कर्मकारके। ४ रज इति कर्मकारकम्।

तत्र प्रवृत्तिप्रतिबन्धकेन क्वचिदेव प्रवर्त्यत इति ततस्ततो व्यावर्त्य तमो नियामकमुक्तं 'गुरु'

वरणकमेव तम इति,

एवकारः प्रत्येकं भिन्नक्रमः संबध्यते—सत्त्वमेव रज एव, तमएव, इति,

ननु परस्परविरोधशीला गुणाः सुन्दोपसुन्दवत्परस्परं ध्वंसन्ते इत्येव युक्तं प्रागेव तेषामेकक्रियाकर्तृताया इत्यत आह "प्रदीपवच्चार्थतो वृत्तिः" इति,

दृष्टमेतद्, यथा वर्तितैलेऽनलविरोधिनी अथ च मिलिते सहानलेन रूपप्रकाशलक्षणं कार्यं कुरुतः यथा वा—

गुरुत्वं, तद्वता, गुरुत्वादेव च आवृण्वता, अस्यैव विवरणं—'तत्र तत्र प्रवृत्तिप्रतिबन्धकेन इति,

अत्र च 'गुरु वरणकमेव' इति एवकारः सत्त्वमेव लघुत्वात्प्रकाशकं, रज एव च चलत्वादुपष्टम्भकं तम एव च गुरुत्वाद् वरणकम् इत्येवं भिन्नक्रमः प्रत्येकान्वयी च बोध्य इत्याशयेनाह "एवकार" इति,

ननु यद्येवं विभिन्नधर्माणो गुणास्तर्हि कथमन्योन्याश्रयवृत्तय इत्यादिना मिलितानामेकक्रियाकर्तृत्वाभिधानं परस्परविरुद्धानां शत्रूणामिवैकार्थकरणासम्भवादित्याशयेन शङ्कते— " नन्वेते " इति,

परस्परं ध्वंसन्ते=अन्योन्यमभिहता नश्यन्तीत्यर्थः, तत्र दृष्टान्तः—"सुन्दोपसुन्दवद्" इति, सुन्दोपसुन्दनामानौ द्वावसुरौ सोदरावास्तां तौ चाराधितादीश्वरात् स्वस्वेतरसकाशाद् वधाभावरूपं वरमलभेताम् । अथ चैका काचिदबला कामयमानाभ्यामन्योन्यं प्रवर्तिते रणेऽन्योन्याभिहतौ तौ नष्टावभूतामिति पौराणिकी कथाऽत्रानुसन्धेया ।

प्रागेव=पुरत एवेत्यर्थः, विरुद्धानामन्योन्यमेकत्रमेव तावदसम्भवि मिलित्वैकार्थानुष्ठानन्तु दूरतो निरस्तमिति भावः ।

कारिकांशमवतार्य समाधत्ते— "प्रदीपवच्चार्थतो वृत्ति" इति, वृत्ति=अन्योन्यानुवर्तनम्,

दृष्टमेतद्—एतद्=विरुद्धानामपि क्वचिन्मिलित्वैकार्थकारिता दृष्टेत्यर्थः, क्व दृष्टमित्यत्राह— " यथा " इति,

वर्ति=कार्पासादिनिर्मिता दशा तैलं च सार्षपादि त एते वह्निदाह्यत्वाद् अनलो विरोधी ययोरित्यनलविरोधिनी यद्यपि अथ च=तथापि अनलेन सह मिलिते एकाम्प्रकाशरूपां क्रियां कुरुत इत्यर्थः ।

एतच्च "प्रदीपश्च यथा कार्यं प्रकरोत्यर्थदर्शनम् ॥
वर्त्तिस्तैलं यथार्चिश्च विरुद्धाश्च परस्परम् ॥ २९ ॥

१ यत्र यस्य पाठस्तत्रान्वयमकृत्वाऽन्यत्रान्वयो भिन्नक्रमः । २ तयोर्दुर्दान्तयोर्हननायोपायान्तरमपश्यतेश्वरेण निर्मिता सा मायामय्यबलेत्यपि ज्ञेयम् । ३ 'प्रागेव' इति निपातसमुदायोऽतिशयार्थक इति वर्द्धमानोपाध्याय एतन्मते च, तेषामेकक्रियाकर्तृताऽतिशयेनासम्भविनीत्यर्थो ज्ञेयः । ४ देवीभागवते तृतीयस्कन्धे नवमाध्याये नारदं प्रति ब्रह्मवाक्यानीमानीति बोध्यम् ।

वातपित्तश्लेष्माणः परस्परविरोधिनः शरीरधारणलक्षणकार्यकारिण एवं सत्त्वरजस्तमांसि मिथो निरुद्धान्यप्यनुवर्त्स्यन्ति च स्वकार्यं करिष्यन्ति च,

अर्थतः=पुरुषार्थत इति यावद्, यथा वक्ष्यति 'पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणम्' इति, ( का० ३१ )

---

विरुद्धं हि तथा तैलमग्निना सह सङ्गतम् ॥
तैलं वर्तिविरोध्येव पावकोऽपि परस्परम् ॥ ३० ॥
एकत्रस्थाः पदार्थानां प्रकुर्वन्ति प्रदर्शनम्"
इत्यादिना ब्रह्मगीते व्यक्तम् ।

अस्तु वर्तिः अनलदीप्यत्वात्तद्विरोधिनी भवतु च तैलबिन्दुनिपातनेनाग्नेरपि मन्दीभावात्तैलमपि वह्निविरोधि तथापि वर्तितैलयोः परस्परं विरोधाभावान्न निखिलांशे समानमेतदुदाहरणमिति ये प्राहुस्तान् प्रति सर्वांशे परस्परविरोधित्वेन समानमुदाहरणान्तरमाह "यथा वा" इति ।

वातादीनां धातूनां परस्परविरोधित्वमायुर्वेदे प्रसिद्धं तथापि ते मिलित्वा शरीरस्य धारणं=पोषणं स्थापनं च कुर्वन्ति यथा एवं=तथा सत्त्वादीन्यपि अनुवर्त्स्यन्ति=अन्योन्यानुगुण्येन वर्तिष्यन्ते स्वस्वकार्यं करिष्यन्ति चेत्यर्थः ।

त्रित्वसङ्ख्यानादरणे तु यथा विरुद्धावपि धर्माधर्मौ मिलित्वा नरकलेवरमारभेते तथा सत्त्वादयोपीत्यप्युदाहरणं बोध्यम्,

वस्तुतस्तु–'रूपातिशया वृत्त्यतिशयाश्च परस्परेण विरुद्धयन्ते सामान्यानि त्वतिशयैः सह प्रवर्तन्ते' इति योगभाष्योक्तन्यायात् तुल्यबलानामेव विरोधो नातुल्यबलानामित्यभ्युपगमान्नात्र विरोधप्रसक्तिरिति,

अयम्भावः–दिव्यशरीरे सुखाद्यात्मके वा प्रत्यये जननीये सत्त्वं गुणः प्रधानं रजस्तमसी चाङ्गे, एवं नरकलेवरे दुःखाद्यात्मके वा प्रत्यये जनयितव्ये प्रधानं रजोऽङ्गे च सत्त्वतमसी, एवं तिर्यङ्निकाये मोहाद्यात्मके वा प्रत्यये जनयितव्ये प्रधानं तमोऽङ्गे च सत्त्वरजसी–इत्येवं गुणप्रधानभावेन मिलित्वैकार्थकरणान्नात्र काचिदापत्तिरिति,

यत्पूर्वमुक्तम् 'इत्थंभूताः कुत' इति तत्राह–"अर्थत" इति पौरुषेयभोगापवर्गसम्पादनरूपप्रयोजनबलेन गुणाः सम्भूय प्रवर्तन्त इत्यर्थः, एतच्चाग्रे व्यक्तमित्याह–"यथा वक्ष्यति" इति,

---

१ यथा सत्त्वादीनि त्रीण्येवं तैलादीनि वातादीनि चापि त्रीण्येवेत्युदाहरणे त्रित्वसङ्ख्यासाम्यमादृतं तदनादरणे तु धर्माधर्मावप्युदाहरणीयाविति भावः । २ 'पुण्येन पुण्यं लोकं नयति, पापेन पापम्, उभाभ्यामेव मनुष्यलोकम्, इति प्रश्नोपनिषदि श्रुतत्वादिति भावः । ३ धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याख्यान्यष्टौ बुद्धे रूपाणि, वृत्तयश्च सुखदुःखमोहरूपाः परिणामविशेषाः तेषामतिशयाः=उत्कर्षा एव विरुध्यन्ते यदा धर्म उत्कृष्टत्वेनोदारो भवति तदाऽधर्मो नोत्कृष्यते यदा च सुखोत्कर्षो भवति तदा च न दुःखमुत्कृष्टं भवतीत्येवं परस्परं प्रतिबध्यन्ते सामान्यानि अपकृष्टानि दुर्बलानि तु उत्कृष्टैः सह वर्तन्त इति भाष्यार्थः। यो० पा० २ सू० १८।

**अत्र च सुखदुःखमोहाः परस्परविरोधिनः स्वस्वानुरूपाणि सुखदुःखमोहात्मकान्येव निमित्तानि कल्पयन्ति, तेषां च परस्परमभिभाव्याभिभावकभावान्नानात्वं.**

---

ननु "त्रिगुणमविवेकि" इत्यादिना सर्वस्य त्रिगुणात्मकत्वाभिधानात्सर्वएव भावा सुख दु खमोहात्मका इत्यायातम्,

एतंच न घटते, न हि यद् यदा यस्य सुखात्मक तत्तदा तस्य दु खात्मक मोहात्मक चेत्यध्यक्षमीक्ष्यते, यदि सर्व एव भावा सुखदु खमोहस्वभावा भवेयुस्तर्हि सवषामविशेषेणैव सर्वेषु भावेषु सर्वात्मक विज्ञान स्यान्नतूपलभ्यमान प्रतिवस्तुव्यवस्थित तथा चाहुर्विवेचका –"यदि पुनरेत एव सुखादिस्वभावा भवेयुस्तत स्वरूपत्वाद् हेमन्तेऽपि चन्दन सुख स्याद्, न हि चन्दन कदाचिदचन्दन, तथा निदाघेऽपि कुङ्कुमपङ्क सुखो भवेद् नह्यसौ कदाचिद्, कुङ्कुमपङ्क इति एव कण्टक क्रमेलकस्य सुख इति मनुष्यादीनामपि प्राणभृता सुख स्याद् नह्यसौ काश्चित्प्रत्येव कण्टक इति, तस्मादसुखादिस्वभावा अपि चन्दनकुङ्कुमादयो जातिकालावस्थाद्यपेक्षया सुखदु खादिहेतवो न तु स्वय सुखादिस्वभावा इति रमणीयम्' इति, एव प्राप्ते प्रतिविधत्ते "अत्र च सुखदु खमोहा" इति, अत्र=गुणस्वभावनिरूपणप्रस्तावे च इद ध्येयमिति शेष,

परस्परविरोधिनो ये सुखदु खमोहास्ते सवत्राविशेषेण वर्तमाना अपि नाकस्मादुद्भवन्ति येन सर्वान् प्रत्यविशेषेण ते आगच्छेयुरपि तु स्वस्वोद्भवे निमित्तानि कल्पयन्ति=अपेक्षन्त इत्यन्वय, निमित्तान्यपि च न यानि कानिचिदपि तु-स्वस्वानुरूपाणि=स्वस्वप्रादुर्भावानुगुणानि सुखदु खमोहात्मकानीति,

तत्र सुख स्वोद्भवे धर्मापेक्ष सुखात्मक सत्त्वरूप निमित्तमपेक्षते, दु ख च स्वोद्भवेऽधर्मापेक्ष दु खात्मक रजोनिमित्तमपेक्षते, मोहश्च स्वप्रादुर्भावेऽधर्मापेक्ष मोहात्मक तमो निमित्तमपेक्षत इत्यर्थ ।

जातिकालादयोऽपि निमित्तसहकारिणो ज्ञेया,

ननु धर्मादयो निमित्तविशेषा अपि सर्वत्राविशिष्टा इति कथ व्यवस्था, तत्राह-"तेषां च" इति, तेषा च धर्मादिनिमित्ताना नाविशिष्टत्वमपि तु नानात्व तत्र हेतुमाह-"परस्परमभिभाव्याभिभावकभावाद्" इति,

---

१ एतच्च सुखदु खमोहात्मकत्वेन भावाना त्रैरूप्य चेत्यर्थ । २ यत्-चन्दनादिक, यदा=निदाघकालादौ । ३ घटे मृदन्वयवद् यदि सुखादिक सर्वभावान्वित भवेत् तर्हि घटे मृद्वत् सर्वैरेवाविशेषेणोपलभ्येत नचोपलभ्यत इति योग्यानुपलब्धिबाधित चेद सर्वस्य त्रैरूप्यमित्याशयेन शङ्का स्पष्टयति "यदि" इति । ४ सर्वात्मक सुखदु खमोहात्मकम् । ५ अनुकूल एव स्रक्चन्दनवनितादौ सुखात्मक प्रतिकूल एव च दन्दशूकवृश्चिककण्टकादौ दु खात्मक विज्ञानमित्येव नियतमित्यर्थ । ६ अ० २ पा० २ सू० १ इति ब्रह्मसूत्रभाष्ये भामतीकारा । ७ क्रमेलक =उष्ट्र । ८ प्रतिविधत्ते=समाधत्ते । ९ जातिरूपनिमित्तसहकारिणोऽभावाच्च न मनुष्यादीना कण्टक सुख निदाघकालरूपसहकारिणोऽभावाच्च न हेमन्ते चन्दन सुखात्मकमित्याद्यूह्यम् ।

तद् यथा—एकैव स्त्री रूपयौवनकुलसम्पन्ना स्वामिनं सुखाकरोति, तत्कस्य हेतोः, स्वामिनं प्रति तस्याः सुखरूपसमुद्भवात्, सैव स्त्री सपत्नीर्दुःखाकरोति. तत्

---

यदुत्कृष्ट सदितरनिरोधक भवति तन्निमित्तमभिभावक, यच्च नि कृष्टत्वेन स्वकार्यजननाशक्त भवति तन्निमित्तमभिभाव्यमित्युच्यते, एतदुक्त भवति—सर्वस्य प्रतिक्षणपरिणामित्वाद् यदा यस्य चित्ते धर्मो विपच्यमान उत्कृष्टो भवति तदा तस्य चित्ते तच्चित्तसन्निहितवस्तुनि च सत्त्वमुत्कट भूत्वा रजस्तमश्च तिरस्कृत्य त प्रति सुखात्मक प्रत्यय जनयति, यदा चाधर्म उत्कृष्यते तदा रजस्तमो वोत्कट भूत्वा दु खात्मक मोहात्मक वा प्रत्यय जनयति, इत्येव निमित्ताना कादाचित्कत्वान्न सर्वेषा सर्वत्र सर्वदाऽविशिष्टज्ञानत्वप्रसक्तिरिति ।

यद्वा (२) 'चित्त वर्तमाना ये सुखदु खमोहास्ते नाकस्मादुपजायन्तेऽपि तु सुखाद्यात्मकानि निमित्तान्यपेक्ष्योपजायन्ते, तथाच सुखाद्यात्मका विषया एव धर्मादिसापेक्षास्तन्निमित्तभूता इति कल्प्यन्ते—नहि विषयगतविशेष विना विषयसन्निधिमात्रेण सुखाद्यात्मिका चित्तवृत्तिरुदेतुमर्हति, अव्यवस्थापत्ते अतश्चित्तगतसुखादिनियामकत्वेन कल्प्यमानो विषयगतविशेष सुखाद्यात्मक एव कल्प्यते, कार्यानुरूपस्यैव कारणस्यौचित्याद्' इत्यर्थोऽत्र ज्ञेय ।

तथाचाहुर्व्यासदेवा "साङ्ख्यपक्षे पुनर्वस्तु त्रिगुण चल च गुणवृत्तमिति धर्मादिनिमित्तापेक्षं चित्तैरभिसम्बध्यते, निमित्तानुरूपस्य च प्रत्ययस्योत्पद्यमानस्य तेन तेनात्मना हेतुर्भवति" इति,

नचे यो यस्य स्वभाव स स्वस्वभावोद्भवेन निमित्त नापेक्षत इति साम्प्रत, तथा सति कुसूलनिहितधान्यबीजेनैव कृती कृषीवलोऽल तस्य क्षेत्रसस्कारकेदारनिर्माणधान्यवपनसलिलसेचनाद्युपयोगेनेति जोषमेवासीं,

सम्प्रति—"धर्मापेक्ष चित्तस्य वस्तुसाम्येऽपि सुखज्ञान भवति, अधर्मापेक्ष तत एव दु खज्ञानम्, अविद्यापेक्ष तत एव मूढज्ञानम्" इति योगभाष्यमनुसृत्य भावाना सुखाद्यात्मकत्वमुदाहरणद्वारा विशदयितुमाह—"तद् यथा" इति, यथैकमपि वस्तु सुखादिभेदभिन्नविज्ञानहेतुत्वेन सुखदु खमोहात्मकं प्रतीयते तथा तत्प्रदर्श्यत इत्यर्थ ।

---

१ फलोन्मुख सन्नित्यर्थ । २ 'अत्र च सुखदु खमोहा' इत्यादेर्ग्रन्थस्य सम्भवदर्थान्तरमाह—"यद्वा" इति, पूर्वस्मिन् व्याख्याने विषयगता सुखाद्या स्वस्वप्रादुर्भावे चित्तगतधर्माद्यपेक्ष विषयगतोत्कटसत्त्वादिक निमित्तमपेक्षन्त इति वर्णितम्, इदानीं च चित्तगता ये सुखाद्यास्ते स्वोद्भवे विषयस्य सुखाद्यात्मकत्वरूप निमित्तमपेक्षन्त इति वर्ण्यत इति विशेष । ३ यो० पा० ४ सू० १५० । ४ गुणवृत्त=गुणस्वभाव, प्रतिक्षणपरिणामशील वस्तुमात्रमिति यावद्, अत कदाचिदेव धर्मादिनिमित्तवशाच्चित्तेन वस्तु सबध्यते इति न सर्वदा सर्वात्मक ज्ञान, तथा धर्मादिनिमित्तानुरूप सुखाद्यात्मकप्रत्यय प्रति सुखाद्यात्मकत्वेनैव वस्तु हेतुर्भवति, इति सिद्ध वस्तुन सुखादिरूपत्वमिति भाव । ५ स्वभावस्य सर्वदानपायित्वान्न निमित्तापेक्षेति शङ्कामपनयति "नच" इति । ६ जोषम्=मौनम् । ७ आसु उपवेशने=आत्मने पदी तस्माल्लोट् । ८ यो० पा० ४ सू० १५ ।

कस्य हेतोः, ताः प्रति तस्या दुःखरूपसमुद्भवाद्, एवं पुरुषान्तरं ताम-विन्दमानं सैव मोहयति, तत् कस्य हेतोः, त प्रति तस्या मोहरूपसमुद्भवाद्, अनया च स्त्रिया सर्वे भावा व्याख्याताः।

तत्र यत्सुखहेतुस्तत्सुखात्मकं सत्त्वं, यद् दुःखहेतुस्तद् दुःखात्मकं रजः, यन्मोहहेतुस्तन्मोहात्मकं तम इति,

सुखप्रकाशलाघवानां त्वेकस्मिन् युगपदुद्भूतावविरोधः सहदर्शनात् तस्मा-न्सुखदुःखमोहैरिव विरोधिभिरविरोधिभिरेकैकगुणवृत्तिभिः सुखप्रकाशलाघ-

'सुखाकरोति'=आनुकूल्येनानन्दयति, "सुखप्रियादानुलोम्ये" इत्यनेन करोतियोगे डाचि सुखाकरोति, इति।

पृच्छति—"तत् कस्य हेतो"=यत्कामिन्या कान्त प्रति सुखजनकत्व तत्कस्मात्कारणादि-त्यर्थ, उत्तरमाह—"स्वामिन प्रति तस्या सुखरूपसमुद्भवाद्" कान्तचित्तोद्भूतधर्मरूपनिमि-त्तवशात्कान्त प्रति कान्ताया सुखात्मकसत्त्वगुणात्मकत्वेन प्रादुर्भावादित्यर्थ । एवमग्रेऽपि,

'दु खाकरोति'—प्रातिकूल्येन पीडयति, "दु खात्प्रातिलोम्ये" इति डाच्।

तामविन्दमानम्=चैत्रपत्नीमलभमान पुरुषान्तर=चैत्रादन्यं स्त्रैण मैत्र मोहयति=पुण्यवतो बत चैत्रस्य कलत्ररत्नमिद न तु मम मैत्रस्य मन्दभाग्यस्येत्येवं विषादयतीत्यर्थ ।

उक्तन्यायमन्यत्राप्यतिदिशति—"अनया च स्त्रिया" इति, एतत्कान्तोदाहरणेनान्येषामपि भावानां सुखाद्यात्मकत्व व्याख्यातं वेदितव्य, तद् यथा मेघा वृष्ट्या कृषीवलाना सुखं जनयन्ति, पान्थानाञ्च दु खं, विरहिणां च मोहम्, एव न्यायपरायणो राजा शिष्टानां सुखमुत्पादयति, दुष्टानां च दुःखं मोह चेति, एतच्च देवीभागवते "यथा काचिद् वरा नारी सर्वभूषणभूषिता। हावभावयुता कामं भर्तृप्रीतिकरी भवेद्" इत्यादिना व्यक्तमिति तत एव निरीक्ष्यम्।

नन्वेकः कामिनीरूपोऽर्थ कथ विभिन्नविज्ञानहेतुर्नह्यविलक्षणात्कारणात्कार्यभेदो युक्त इत्या-शङ्क्य पूर्वोक्तं निमित्तनानात्वं स्मारयति, "तत्र" इत्यादिना।

तत्र एतस्मिन्नुदाहरणे यत्कान्तचित्तवृत्तिसुखात्मकप्रत्यय प्रति निमित्त तद् धर्मापेक्षं कान्ता-कायगत सुखात्मकं सत्त्व ज्ञेयमित्यर्थ, एवमग्रेऽपि।

एवं तावद् विरुद्धाना युगपदेकत्रोद्भवे निमित्तनानात्वापेक्षाभिहिता, सम्प्रत्यविरुद्धानामेकै-कगुणधर्माणा युगपदुद्भवे निमित्तनानात्वानपेक्षामाह—"सुखप्रकाशलाघवानाम्" इत्यादिना, उन्नीयन्ते=कल्प्यन्ते—अपेक्ष्यन्ते, यत एकत्र सहवर्तनदर्शनात्सुखप्रकाशलाघवाना युगपदेकत्रोद्भवे न विरोधस्तस्माद् विरोधिभि सुखदु खमोहैरिवाविरोधिभि सुखप्रकाशलाघवैर्न निमित्तभेदा अपेक्ष्यन्तेऽपि तु सात्त्विकै सुखादिभिर्धर्मापेक्ष केवल सत्त्वमपेक्ष्यते, राजसैश्च दु खादिभि

१ ५।४।६३। आनुलोम्यम्=अनुकूलता । २ दु खरूपसमुद्भवाद्—इत्यादौ । ३ ५।४।६४ प्रातिलोम्य=प्रातिकूल्यम्। ४ व्यासक्त कामुकम्। ५ स्क० ३ अ० ९ । ६ अतिशयेन। ७ अत्र 'न निमित्तभेदा उन्नीयन्ते' इत्यस्यानुषङ्ग, एव 'मोहगुरुत्वावरणै, इत्यत्राप्यनुषङ्गो ज्ञेय।

वैर्न निमित्तभेदा उन्नीयन्ते, एवं दुःखोपष्टम्भकत्वप्रवर्तकत्वैः, एवं मोहगुरुत्वावरणैः. इति सिद्धं त्रैगुण्यमिति ॥ १३ ॥

स्यादेतद्, अनुभूयमानेषु पृथिव्यादिष्वनुभवसिद्धा भवन्त्वविवेकित्वादयः, ये पुनः सत्त्वादयो नानुभवपथमविरोहन्ति तेषा कुतस्त्यमविवेकित्वं विषयत्व सामान्यत्वमचेतनत्वं प्रसवधर्मित्वं च इत्यत आह—"अविवेक्यादेस्सिद्धिः"इति,

**अविवेक्यादेस्सिद्धिस्त्रैगुण्यात्तद्विपर्ययाभावात्।**
**कारणगुणात्मकत्वात्कार्यस्याऽव्यक्तमपि सिद्धम्॥ १४॥**

अविवेकित्वमविवेकि. यथा—"द्व्येकयोर्द्विवचनैकवचने" इत्यत्र द्वित्वैकत्वयोरिति, अन्यथा द्व्येकेष्विति स्यादिति,

कुतः पुनरविवेकित्वादेस्सिद्धिः, इत्यत आह—"त्रैगुण्याद्"

यद्यत्सुखदुःखमोहात्मकं तत्तदविवेकित्वादियोगि यथेदमनुभूयमानं व्यक्तम्, इति स्फुटत्वादन्वयो नोक्तः, व्यतिरेकमाह "तद्विपर्ययाभावाद्"= अविवेक्यादिविपर्यये पुरुषे त्रैगुण्याभावाद्,

---

केवलमधर्मापेक्ष रजोऽपेक्ष्यते, तामसैश्च केवलमविद्यापेक्ष तमोऽपेक्ष्यत इति समुदायार्थ । उपसहरति—"इति सिद्ध त्रैगुण्यम्" इति ॥ १३ ॥

एव सर्वेषा भावाना त्रैगुण्य प्रसाध्य तेन[1] हेतुनोद्देश्यान्तर साधयितुमार्यामवतारयति, "स्यादेतद्" इत्यादिना, अविवेकित्वादय ='त्रिगुणमविवेकि' इत्यनेनाभिहिता सहत्यकारित्वादयो धर्मविशेषा.।

सत्त्वादयइत्यत्र सत्त्वशब्देन सत्त्वादिगुणत्रयसाम्यावस्थारूप प्रधान ग्राह्यम्, आदिशब्देन च महदादयो ग्राह्या, नानुभवपथमविरोहन्ति नाध्यक्षमीक्ष्यन्त इत्यर्थ, 'कुतस्त्यम्'=कस्मात्प्रमाणादवगतमित्यर्थ,

आर्यायाम् 'अविवेकि' इतिपदं भावप्रधाननिर्देशेना[2]विवेकित्वार्थक, तत्र दृष्टान्तत्वेन पाणिनीयसूत्रमाह—"यथा द्व्येकयो" इति,

सूत्रेऽपि द्वित्वविशिष्टैकत्वविशिष्टपरतैव किन्न स्यात् तत्राह—"अन्यथा" इति।

अन्यथा=द्वित्वैकत्वपरत्वानङ्गीकारे, द्विशब्देन द्वित्वविशिष्टद्वयोर्ग्रहणे एकशब्देनैकत्वविशिष्टैकस्य ग्रहणे तयोर्द्वन्द्वे द्व्येकशब्दस्य बहुसङ्ख्याकत्वेन द्व्येकेष्विति बहुवचनान्तमेव निर्दिश्येत, तथा निर्देशाभावाच्च द्वित्वैकत्वपरताऽत्र प्रतीयत इत्यर्थ,

प्रधानमहदभिमानादीनि अविवेकित्वादिधर्मवन्ति त्रिगुणत्वाद् इति प्रयोगेऽन्वयव्याप्तिमाह—"यद्यत्सुखदु खमोहात्मकम्" इति।

---

१ तेन=त्रैगुण्येन, उद्देश्यान्तर=प्रधानादीनामविवेकित्वादिधर्मवत्त्वम्। २ यत्र धर्मिवाचक शब्दो धर्मपरत्वेनाभिप्रेयते तत्र भावप्रधाननिर्देश इत्यभिलप्यते।

अथवा—व्यक्ताव्यक्ते पक्षीकृत्यान्वयाभावेनावीत एव हेतुः त्रैगुण्याद् इति वक्तव्यः,

स्यादेतद्—अव्यक्तसिद्धौ सत्या तस्याविवेकित्वादयो धर्माः सिद्ध्यन्ति अव्यक्तमेव त्वद्यापि न सिध्यति, तत्कथमविवेकित्वादिसिद्धिरत आह—"कारणगुणात्मकत्वाद्" इति।

अयमभिसन्धिः—कार्यं हि कारणगुणात्मकं दृष्टं यथा तन्त्वादिगुणात्मकं पटादिकं, तथा महदादिलक्षणेनापि कार्येण सुखदुःखमोहरूपेण स्वकारणगतसुखदुःखमोहात्मना भवितव्य तथा च तत्कारणं सुखदुःखमोहात्मक प्रधानमव्यक्तं सिद्धं भवति ॥ १४ ॥

स्यादेतद्, व्यक्ताद् व्यक्तमुत्पद्यत इति कणभक्षाक्षचरणतनयाः, परमाणवो हि व्यक्तास्तैर्द्व्यणुकादिक्रमेण पृथिव्यादिलक्षणं कार्यं व्यक्तमारभ्यते,

---

अविवेकित्वादियोगि=अविवेकित्वादिधर्मवद्, उदाहरणमाह—"यथेदम्" इति, व्यक्त=देहगेहघटपटादिक स्थूल वस्तु, इति=इत्येवम् अन्वयसहचारस्य स्फुटत्वाद्=स्थूलविषयत्वेन स्वयमेवोहितु शक्यत्वेन स्पष्टत्वाद् अन्वयसहचार कारिकाकृता न मुखतोऽभिहितो यद्यपि तथापि स्वयमूह्य इत्यर्थं।

तस्य=अविवेकित्वादे विपर्यय=अभावो यत्रासौ तद्विपर्यय=आत्मा, तत्र त्रैगुण्याभावाद् यन्नाविवेकि तन्न त्रिगुण[1] यथाऽऽत्मतत्त्वमिति व्यतिरेकसहचार उक्त इत्याह "व्यतिरेकमाह" इति, अविवेक्यादिविपर्यये=अविवेकित्वादिधर्माभाववतीत्यर्थ.।

यदा स्थूलेषु भावेषु अविवेकित्वत्रिगुणत्वे सिद्धवत्कृत्वातीन्द्रिय प्रधानादिकमेव पक्षीक्रियते तदा त्रैगुण्याद् इति हेतुरन्वय्यपि सभवति यदा तु सकलमेव व्यक्ताव्यक्तरूप तत्त्व पक्षीक्रियते तदा पक्षातिरिक्तान्वयसहचारोदाहरणस्थलाभावेन व्यतिरेक्येव हेतुस्त्रैगुण्यादितीत्याशयेनाह—"अथवा" इति अवीत=व्यतिरेकसहचारवान्, अभिसन्धि=अभिप्राय।

कारणगतसुखदुःखमोहात्मना—स्वकारणगतसुखदुःखमोहरूपधर्मपूर्वकेण कार्यगतसुखादिना भवितव्यमित्यर्थ। एतच्च पूर्वं निरूपित, निरूपयिष्यते च ॥ १४ ॥

कणभक्षाक्षचरणतनया—कणादगौतममतानुयायिनोऽभ्युपगच्छन्तीत्यर्थ।

कीदृशाद् व्यक्ताद् कीदृग् व्यक्तमुत्पद्यते, तत्राह—"परमाणवो हि" इति सूक्ष्मात् खलु स्थूलस्योत्पत्तिर्दृश्यते, यथा तन्तुभ्य पटस्य तन्तूना चांशुभ्य एवमपकर्षक्रमेणापकर्षक्रमेणापकर्षकाष्ठापन्न कारणद्रव्यमतिसूक्ष्ममनवयवमवतिष्ठते, तच्च परमाणुरूप तत्र प्रथम तावददृष्टवत्क्षेत्रज्ञसंयोगात्परमाणौ कर्म जायते ततोऽसौ परमाण्वन्तरेण सयुज्य द्व्यणुकमारभते, द्व्यणुकानि च त्रीणि सम्भूय त्र्यणुकमुत्पादयन्ति ततश्चतुरणुकादिक्रमेण स्थूला पृथिव्यादयः, यथा सूक्ष्मद्रव्याणि

---

१ त्रिगुणमित्यस्य विवरणमिदम्।

पृथिव्यादिषु च कारणगुणक्रमेण रूपाद्युत्पत्तिः, तस्माद् व्यक्ताद् व्यक्तस्य तद्गुणानां चोत्पत्तेः कृतमदृष्टचरेणाव्यक्तेन, इत्यत आह—"भेदानां परिमाणाद्" इत्यादि—

**भेदानां परिमाणात्, समन्वयात्, शक्तितः, प्रवृत्तेश्च।**
**कारणकार्यविभागादविभागाद् वैश्वरूपस्य ॥ १५ ॥**
**कारणमस्त्यव्यक्तं, प्रवर्तते त्रिगुणतः, समुदयाच्च।**
**परिणामतः सलिलवत्, प्रतिप्रतिगुणाश्रयविशेषाद् ॥ १६ ॥**

भेदानां विशेषाणां महदादीनां भूम्यन्तानां कार्याणां कारणं 'मूलकारणम् अस्त्यव्यक्तं, कुतः, 'कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य' कारणे सत्कार्यमिति स्थितं, तथाच यथा कूर्मशरीरे सन्त्येवाङ्गानि निःसरन्ति विभ-

स्थूलद्रव्याण्यारभन्त एव कारणसमवायिनश्च गुणा कार्ये समानजातीय गुणान्तरमारभन्त इति हि तेषा प्रक्रिया, एवं च परिदृश्यमानरूपादिगुणवत्कार्यबलेन रूपादिमद् व्यक्त परमाणुद्रव्यमेव कारणमुपेय न तु रूपादिहीनमव्यक्तमित्यत्र फलित, तदेवाह—"कृतमदृष्टचरेण" इति, 'कृतम' इति अलमर्थकत्वेन प्रतिषेधार्थकमव्ययम् अदृष्टचरेण=अप्रमाणिकेन रूपादिहीनेन अव्यक्तेन=प्रधानेन अलम्=न किमपि कृत्यमित्यर्थ ।

भिद्यन्ते=परस्पर व्यावृत्ता प्रतीयन्ते इति भेदा कार्याणि महदादीनि, तेषा 'कारणमस्त्य व्यक्तम्' इत्युत्तरार्यापादेनान्वय इत्याशयेन व्याचष्टे "भेदानाम्" इति,

एतस्या प्रतिज्ञाया 'परिमाणाद्' इत्यादय पञ्च हेतव तत्र पाठक्रममुपेक्ष्याकाङ्क्षाक्रममनुरुध्य हेतुद्वयप्रयोगमाह—"कारणकार्यविभागाद् अविभागाद्वैश्वरूप्यस्य" इति,

उत्पत्तिकाले सत एव कार्यस्य कारणसकाशादाविर्भावाद् इति प्रथमहेत्वर्थ, विश्वरूपमेव वैश्वरूप्य चतुर्वर्णादित्वात्स्वार्थिक ष्यञ्, विश्वरूपस्य=कृत्स्नस्य कार्यस्य संहारकाले कारणेऽविभागात्=तिरोभावाद् इति द्वितीयहेत्वर्थ, एव च यदाविर्भवति तत्सूक्ष्मावस्थापूर्वकमेव भवति यच्च तिरोभवति तत्सूक्ष्मावस्थान्तमेव भवति यथा कूर्माङ्गानि, इति व्याप्तिबलेन "महदादिकं कार्यं स्वीयसूक्ष्मावस्थापूर्वकं भवितुमर्हति आविर्भावतिरोभाववत्त्वात्कूर्माङ्गवद् इत्यनुमानमत्र फलित, तथाचाद्यन्ते च यत्सूक्ष्मावस्थाश्रयतया सिद्ध्यति तदेव न प्रधानमिति सिद्धा कारणमस्त्यव्यक्तमिति प्रतिज्ञा।

एतदेव विशदयन् प्रथम हेतु विवृणोति—"कारणे सत्कार्यम्" इति स्थितम्=अवस्तात् सिद्धान्तितम्,

१ पूर्वं न दृष्टमित्यदृष्टचर, 'भूतपूर्वे चरट्' इति स्मरणात्, तदेवाह—"अप्रामाणिकेन" इति। २ एतस्या=कारणमस्त्यव्यक्तमित्याकारायाम्। ३ कारणकार्याविभागादिति हेत्वर्थ। ४ 'चतुर्वर्णादीना स्वार्थ उपसङ्ख्यानम्' इति वार्तिकेनेति शेष। ५ सर्गे सूक्ष्मावस्थापूर्वक संहारे च सूक्ष्मावस्थावसानमिति ध्येयम्। ६ स्वोपात्त प्रथम न तु कारिकागत परिमाणाद् इति। ७ ९ का० इति कारिकाविवरणे।

ज्यन्ते 'इदं कूर्मशरीरमेतान्यस्याङ्गानि' इति, एवं निविशमानानि तस्मिन्नव्यक्तीभवन्ति, एव कारणान्मृत्पिण्डाद् हेमपिण्डाद् वा कार्याणि घटमुकुटादीनि सन्त्येवाविर्भवन्ति विभज्यन्ते, सन्त्येव च पृथिव्यादीनि कारणात् तन्मात्रादाविर्भवन्ति विभज्यन्ते, सन्त्येव च तन्मात्राण्यहङ्कारात्कारणात्, सन्नेवाहङ्कारः कारणान्महतः, सन्नेव च महान् परमाव्यक्तात् । सोयं कारणात्परमाव्यक्तात्साक्षात्पारम्पर्येणान्वितस्य विश्वस्य कार्यस्य विभागः ।

प्रतिसर्गे तु मृत्पिण्ड सुवर्णपिण्डं वा घटमुकुटादयो विशन्तोऽव्यक्तीभवन्ति, तत्कारणरूपमेवानभिव्यक्त कार्यमपेक्ष्याव्यक्तं भवति, एवं पृथिव्यादयस्तन्मात्राणि विशन्तः स्वापेक्षया तन्मात्राण्यव्यक्तयन्ति, एवं तन्मात्राण्यहङ्कार विशन्त्यहङ्कारमव्यक्तयन्ति, एवमहङ्कारो महान्तमाविशन् महान्तमव्यक्तयति. महान् प्रकृतिं स्वकारणमाविशन् प्रकृतिमव्यक्तयति, प्रकृतेस्तु न क्वचिन्निवेश

---

निस्सरन्ति इति शत्रन्त प्रथमाबहुवचन, निविशमानानि इत्युत्तरपाठाद्विरोधाद्, विभज्यन्ते=आविर्भूय विभक्तत्वेन प्रतीयन्ते, तामेव प्रतीतिमाह–"इद कूर्मशरीरमेतानि चास्याङ्गानि" इति,

दृष्टान्त व्याख्याय दार्ष्टान्तिकान्याह–"एव कारणान्मृत्पिण्डाद्" इत्यादिना,

अहङ्कारात्कारणाद्–इत्यत्र 'आविर्भवन्ति' विभज्यन्त इत्यनुषङ्ग, एवमग्रेपि,

आद्य हेतुं व्याख्याय द्वितीयं व्याख्यातुमाह–"प्रतिसर्गे" इति, प्रतिसर्गे=सहारकाले तु मृत्पिण्डादिक विशन्तो घटादयोऽव्यक्तीभवन्ति=मृदाद्यात्मनावस्थायानभिव्यक्ता भवन्तीत्यर्थ,

ननु शब्दादिविहीनं किलैकमेवाव्यक्त यत्प्रधान नाम तत्कथमन्येषामव्यक्तत्वमत्रोच्यत इत्याशङ्क्यान्येषामापेक्षिकमव्यक्तत्वमाह–"तत्कारणरूपमेव" इति, यत सहारे स्वस्वकारणे तिरोभूत सत्कार्यमनभिव्यक्त भवत्यतस्तादृगनभिव्यक्त कार्यमपेक्ष्यैव तत्तत्कारणमव्यक्तमित्युच्यते नतु प्रधानवन्मुख्यमव्यक्तत्वमादायेत्यर्थ,

यद्यपि प्रधानातिरिक्तमवान्तरकारणजातं व्यक्तमेव तथापि तत्तत्कार्यीयसूक्ष्मावस्थाख्यानभिव्यक्ततारूपधर्मयोगान्निखिलमपि कारणरूपमव्यक्तमित्युपचर्यत इति भाव ।

कार्यकारणयोरभेदात्कार्यस्यानभिव्यक्तत्वमेव कारणस्याव्यक्तत्वमिति तत्त्वम् ।

'स्वापेक्षया तन्मात्राण्यव्यक्तयन्ति'=स्वीयानभिव्यक्ततावस्थापेक्षया तन्मात्राण्यव्यक्तानि कुर्वन्तीत्यर्थ ।

---

१ सन्नेवाहङ्कार कारणान्महत आविर्भवन् विभज्यते इत्येवमग्रेपि योजनीयमित्यर्थ । २ पूर्वं व्यक्ता सन्त एव पश्चादव्यक्त भवन्तीति बोधनाय 'अव्यक्ती' इति च्विप्रत्यय इत्यपि बोध्यम् । ३ घटादयोऽव्यक्तीभवन्ति इत्यनेन मृदाद्यात्मना घटादीनामव्यक्तत्व, तन्मात्राण्यव्यक्तयन्ति, अहङ्कारमव्यक्तयन्ति, महान्तमव्यक्तयन्ति–इति वक्ष्यमाण तन्मात्रादीनामव्यक्तत्व चेत्यर्थ ।

इति सा सर्वकार्याणामव्यक्तमेव, सोयमविभागः प्रकृतौ वैश्वरूप्यस्य नानारूपस्य कार्यस्य, 'स्वार्थिकः ष्यञ्' तस्मात् कारणे कार्यस्य सत एव विभागाविभागाभ्यामव्यक्तं कारणमस्ति, इतश्चाव्यक्तमस्ति, इत्याह—"शक्तितः प्रवृत्तेश्च" कारणशक्तितः कार्यं प्रवर्तत इति सिद्धम्, अशक्तात्कारणात्कार्यस्यानुत्पत्तेः, शक्तिश्च कारणगता न कार्यस्याव्यक्तत्वादन्या, न हि सत्कार्यपक्षे कार्यस्याव्यक्ततायाः अन्यस्या शक्तौ प्रमाणमस्ति,

अयमेव हि सिकताभ्यस्तिलानां तैलोपादानानां भेदो यदेतेष्वेव तैलमनागतावस्थं न सिकतास्विति ।

स्यादेतत्, शक्तितः प्रवृत्तिः कारणकार्यविभागाविभागौ च महत एव पर-

---

स्वीयानभिव्यक्तावस्थायोजने तन्मात्राणामव्यक्तत्व सपादयन्तीति, एवमग्रेऽपि,

'सर्वकार्याणामव्यक्तमेव'=सर्वेषा कार्याणामतीतानागतावस्थाया युक्तत्वेनाव्यक्तमेव नतु महदादिवत्कदाचिदव्यक्त कदाचिच्च व्यक्तं द्वयमव्यक्तमिति यावद् इत्यर्थ,

सर्वेषां कार्याणामव्यक्तपूर्वकत्वमव्यक्तान्तत्व च हेतुद्वयेन साधित निगमयति—"तस्माद्" इति, 'तद्धेद तर्ह्यव्याकृतमासीद्' 'अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत । अव्यक्तनिधनान्येव तत्र का परिदेवना' इत्यादय आगमा अप्यत्रातर्कानुकूलत्वेनानुसन्धेया,

'बुद्ध्यादिक शक्तिरूपसूक्ष्मावस्थापूर्वक भवितुमर्हति कार्यत्वाद् घटवद्' इत्यनुमानेन महदादे शक्तिपूर्वकत्व सिद्ध सत् निराश्रयशक्त्ययोगात् तस्या शक्तेराश्रयभूतमव्यक्तमादाय पर्यवस्यतीत्याशयेन प्रवृत्त हेत्वन्तर व्याचष्टे="कारणशक्तित" इति,

कारणगतशक्तित कार्यं प्रवर्तते=जायत इति सिद्ध, तत्र हेतु 'अशक्तात्कारणात्कार्यानुत्पत्ते' इति,

अस्तु शक्तियुक्तादेव कारणात्कार्यस्योत्पत्तिस्तावता कथं कार्याणामव्यक्तकारणकत्वमित्यत्राह—"शक्तिश्च" इति, कार्यस्यानागतावस्थाख्याव्यक्तताया अन्या काचिच्छक्तिर्नाम नास्तीत्यर्थ । तत्र हेतुमाह—"नहि" इति, हि-यत, आवेदितमेतदधस्तात् यथानागतावस्थातोऽतिरिक्ता न काचिच्छक्ति प्रामाणिकीति, तिलेष्वेव तैलोत्पादनशक्तिर्न वालुकास्वित्ययेव कार्योत्पत्तिनियामकत्वेन कल्प्यमाना शक्तिरपि तत्तत्कार्यीयानागतावस्थैवेत्याशयेनाह "अयमेव हि" इति, एतेषु=तिलेषु ।

ननूक्तहेतुत्रयेण कार्याणामव्यक्तपूर्वकत्वमव्यक्तान्तत्वं च यद्यपि सिद्ध तथापि नैतावता प्रधानकारणकत्वावधारणम्, महान्तमेवाव्यक्तमादाय तत्पूर्वकत्वसिद्ध्याऽर्थान्तरतापातसंभवादित्याशयेन शङ्कते—"स्यादेतद्" इति,

---

१ अहङ्कारमव्यक्तयन्ती इत्येवमादावित्यर्थ । २ शक्तित प्रवृत्ते इति हेतुमित्यर्थ । ३ 'शक्तस्य शक्यकरणाद्' इति कारिकांशविवरणे । ४ शक्तित प्रवृत्ते, कारणकार्यविभागाद्, इति हेतुद्वयेनाव्यक्तपूर्वकत्व साधितम्, अविभागाद्वैश्वरूप्यस्येति हेतुना चाव्यक्तान्तत्व साधितमित्यर्थ । ५ अभिमतासिद्धिरर्थान्तरता ।

**माऽव्यक्तत्वं साधयिष्यतः कृतं ततः परेणाव्यक्तेन, इत्यत आह—"परिमाणाद्" इति,**

**परिमितत्वाद्—अव्यापित्वादिति यावद्, विवादाध्यासिनो महदादिभेदा, अव्यक्तकारणवन्तः, परिमितत्वाद्, घटादिवद्,**

---

बुद्धेरपि परिच्छिन्नत्वेन कार्यत्वान्न महत परमाव्यक्तत्वमपि तु तत्कारणत्वेनाऽनुमितस्य प्रधानस्यैव तत्त्वमित्याशयेन समाधत्ते—"परिमाणाद्" इति, परिमाण=परिमिति, भावे ल्युट्, परिच्छेद इति यावद्, तदेवाह—"परिमितत्वाद्" इति।

ननु परिमितत्वमत्र किं देशपरिच्छिन्नत्वरूप विवक्षितमुत कालपरिच्छिन्नत्वरूपमाहोस्वित्स ङ्ख्येयतारूप वस्तुपरिच्छिन्नत्वात्मकमिति। न तावदाद्य कल्प, नभस सर्वदेशगतत्वेन तत्रैतादृशपरिमितत्वासत्त्वाद् हेतोर्भागासिद्धत्वापाताद्, नापि द्वितीय पक्षो विवक्षितु युक्त, पञ्चविंशतितत्त्वातिरिक्तकालानभ्युपगमेन स्वरूपासिद्धेर्दुर्वारत्वाद्, नापि तृतीय सभवति, सत्त्वादीना व्यक्तित्रयात्मकत्वेन परस्पर भिन्नत्वेन परिमितत्वापत्त्या व्यभिचारस्य दुर्निवारत्वादित्याशङ्कामपनेतु परिमितत्वाद् इत्यस्यार्थमाह—"अव्यापित्वाद्" इति, निखिल परिणामिनं न व्याप्नोतीत्यव्यापि तस्य भावस्तत्त्व, तस्मादित्यर्थ। एव च नभसस्तन्मात्राव्यापित्वेन न हेतोर्भागासिद्धत्व, नहि कार्यं कारण व्याप्नोत्यपि तु कारण कार्यमित्यभ्युपगमेन नभस स्वकारणशब्दतन्मात्राहङ्कारमहदव्यक्ताव्याप्तत्वेन निखिलपरिणाम्यनुवृत्तत्वरूपव्यापित्वाभावाद्।

नचैवमपि व्यभिचारो दुर्वार, नहि यथा सत्त्वादिभिर्निखिल कार्यमाविष्ट तथा परस्पर तानि व्याप्नुवन्ति, मिथः कार्यकारणभावाभावादिति शङ्कनीयम्, 'एते गुणा इतरेतराश्रयेणोपार्जितसुखदु खमोहप्रत्यया इति सर्वे सर्वरूपा भवन्ति' इति योगभाष्येण 'अन्योन्यमिथुना सर्वे' इत्यादिना च पूर्वंगुणाना परस्परव्याप्त्यभ्युपगमेन तेषा व्यापित्वाङ्गीकाराद्।

नच प्रलये गुणाना परस्परव्याप्त्यभावादव्यापकतेति शङ्क्यं, सत्कार्यवादाङ्गीकारेण तत्रापि परस्पर व्याप्तेरभ्युपगमाद्। नहि प्रलयेप्यव्याप्तिरूपो गुणानां सङ्कोचोभ्युपेयते किन्तर्हि व्याप-

---

१ तत्त्वम्=परमाव्यक्तत्वम्। २ महदादिकमव्यक्तकारणक परिमितत्वादिति प्रयोगे महदादिरूपपक्षैकदेश आकाशे परिमितत्वरूपहेतोरवर्तनाद् भागासिद्धत्वमित्यर्थ। ३ एतच्चोपरिष्टाद् (३३) इत्यार्याविवरणे व्यक्तम्। ४ हेतो स्वरूपानिष्पत्त्या पक्षे हेतोरेवाभाव इति भाव। ५ गुणानामेवाव्यक्तत्वेन तत्राव्यक्तकारणकत्वरूपसाध्यासत्त्वात् साध्याभाववति गुणत्रये परिमितत्वहेतोर्वृत्तित्वेन न परिमितत्वाव्यक्तकारणकत्वयोर्व्याप्यव्यापकभाव इति दुर्वारो व्यभिचार इति भाव। ६ तत्त्वम्=अव्यापित्वम्। ७ नभसोऽव्यापित्व विशदयति—"नहि" इत्यादिना। ८ तानि=सत्त्वरजस्तमासि। ९ पा० २ सू० १५। १० देवीभागवतेन। ११ पूर्वं=१२ इत्यार्याविवरणे। १२ 'प्रतिसर्गावस्थाया सत्त्व सत्त्वरूपतया रजो रजोरूपतया वर्तत' इत्यनुपदमेव वक्ष्यमाणत्वेन प्रलये परस्परव्याप्तेरभावादिति भाव। १३ तत्रापि=प्रलयेपि। १४ प्रलये व्याप्त्यभ्युपगमे सर्गारम्भे गुणाना गुणप्रधानभावेनावस्थानरूपा वैषम्यावस्था, प्रलये तु परस्परानाश्रितरूपेणावस्थानरूपा साम्यावस्थेति विशेष कथ सिध्येदित्याशयेन पृच्छति "किन्तर्हि" इति, अभिभवानभिभवकृतो विशेष इत्याशयेन समाधत्ते "व्यापकानामेव" इति।

घटादयो हि परिमिता मृदाद्यव्यक्तकारणका दृष्टा उक्तमेतद् यथा कार्यस्याव्यक्तावस्था कारणमेवेति यन्महतः कारणं तत्परमाव्यक्तं ततः परतराऽव्यक्तकल्पनाया प्रमाणाभावाद्,

---

कानामेव सता तेषामभिभव, यथा व्याप्त्या विद्यमानयोरेव घर्महिमयोर्हेमन्तग्रीष्मयोरभिभवो, ग्रीष्महेमन्तयोस्तु तयोरुद्भवस्तथा प्रलयेऽभिभव सृष्टौ तूद्भव इति नाव्यापिता गुणानाम्।

यद्वा निखिलपरिणाम्युत्पत्तियोग्यतावत्त्वैवात्र व्यापिता ज्ञेया,

एतेन 'सत्त्वरजस्तमास्यपि न परस्पर व्याप्नुवन्ति' नच तत्त्वान्तरपूर्वकत्वमेतेषामिति व्यभिचार इति भामत्यभिहितदोषस्य नात्र प्रसर इति ज्ञेयम्।

"परिमाणाद्" इति सूत्र व्याचक्षाणो विज्ञानभिक्षुस्तु (परिच्छिन्नत्वाद्=दैशिकभावप्रतियोगितावच्छेदकजातिमत्त्वादित्यर्थ, तेन गुणव्यक्तीना कियतीनां परिच्छिन्नत्वेऽपि तत्र न व्यभिचार) इत्येव व्यभिचारपरिहार चकार।

दृष्टान्ते साध्यसमन्वयमाह-"घटादयो हि" इति, मृदादे कथमव्यक्तत्वमित्याशङ्क्य पूर्वोक्त स्मारयति-"उक्तमेतद्" इति कार्यस्यानागतावस्थाख्यानभिव्यक्ततामपेक्ष्य तत्तत्कारणरूपमव्यक्तमित्युच्यत इति पूर्वमुक्तमिति न दृष्टान्ते साध्यवैकल्यमित्यर्थ। नापि पक्षधर्मताऽभाव, महदादीनामव्यापित्वस्य पूर्वमुक्तत्वादित्यपि बोध्यम्,

अनेनानुमानेन यथाहङ्कारादिकारणत्वेन महदादिरूपमव्यक्त सिद्ध्यति तथा महत्तत्त्वकारणत्वेनापि किंचिदव्यक्त सिद्ध तथाच यत् तत्कारणत्वेन सिद्ध तत्परमाव्यक्त प्रधानमित्याशयेन फलितमाह-"यन्महत कारणम्" इति,

एवच महतोऽव्यापित्वान्न तस्य परमाव्यक्तत्वमिति न तत्राव्यक्तत्वविश्रान्तिरित्यत्र फलितम्।

ननु प्रधानमपि यत्किञ्चिदव्यक्तकारणक भवितुमर्हति अव्यक्तत्वान्महदादिवदित्यनुमाने नान्यत्परतरमव्यक्त कुतो न कल्प्यत इत्याशङ्क्यास्यानुमानस्याव्यापित्वरूपोपाधिग्रस्तत्वेनाप्रमाणत्वादित्यभिप्रेत्य समाधत्ते "तत परतराऽव्यक्तकल्पनाया प्रमाणाभावाद्" इति।

नन्वनुमानस्य विशेषप्रत्यायनेऽशक्तत्वादनेनानुमानेन सिद्ध्यत्सद् यत्किञ्चिदव्यक्तरूप कारण ग्रहीव सिद्धयेदिति कथं प्रधानकारणतावधारणा, इत्याशङ्कामपनेतु हेत्वन्तरमवतारयति-

---

१ एव च योग्यताया नित्यत्वात् प्रलयेऽनुवृत्त्यभावेपि नाव्यापिता गुणानामिति। २ एतेन=गुणाना व्यापित्वेन। ३ अ० १ सू० १३० 'कार्यत्व महदादेर्घटादिवद्' इति पूर्वसूत्रोक्तेऽनुमानप्रयोगे हेतुप्रदर्शनपरमिद सूत्रमिति ज्ञेयम्। ४ पूर्वम्='हेतुमदनित्यमव्यापि' १० इतिकारिकयोक्तत्वादित्यर्थ। ५ महत्कारणत्वेन। ६ एव च कृत 'महत परेणाव्यक्तेन' इति, यत् पूर्वं शङ्कित तन्निर्दलितमिति बोध्यम्। ७ यत्राव्यक्तकारणकत्व महदादौ तत्राव्यापित्व, यत्र चाव्यक्तत्व प्रधाने न तत्राव्यापित्वमित्येव साध्यव्यापकत्वे सति साधनाव्यापकत्वादव्यापित्वस्योपाधित्व बोध्यम्। ८ 'अनुमान सामान्यविषयमेव' इत्यादिना योगभाष्ये (१।४९) व्यक्तमिदम्।

इतश्च—विवादाध्यासिता भेदा अव्यक्तकारणवन्तः, समन्वयाद्। भिन्नाना समानरूपता समन्वयः, सुखदुःखमोहसमन्विता हि बुद्ध्यादयोऽध्यवसायादिलक्षणाः प्रतीयन्ते, यानि च यद्रूपसमनुगतानि तानि तत्स्वभावाऽव्यक्तकारणकानि यथा मृद्धेमपिण्डसमनुगता घटमुकुटादयो मृद्धेमपिण्डाव्यक्तकारणकाः, इति कारणमस्त्यव्यक्तं भेदानामिति सिद्धम्।

"इतश्च" इति, वक्ष्यमाणहेतोरपीत्यर्थ, भेदा =महदादिविकारा, अव्यक्तकारणवन्त =सुखाद्यात्मकसामान्याव्यक्तवस्तुप्रकृतिका इत्यर्थ।

यदुक्तम् 'इतश्च' इति तदाह—"समन्वयाद्" इति, समन्वयपदार्थमाह 'भिन्नानाम्" इति, अध्यवसायादिलक्षणतत्तदसाधारणधर्मवत्त्वेनान्योन्य भिन्नाना बुद्ध्यादीना या सुखाद्यात्मसाधारणधर्मवत्त्वेनैकरूपता स समन्वय इत्यर्थ, एतदेव दर्शयन् हेतो पक्षधर्मतामाह—"सुखदु ख मोहसमन्विता हि" इति।

इह यद् येनान्वित तत्तदुपादानकमिति सामान्यव्याप्तिरवाश्रयणीया नतु यत्सुखाद्यन्वित तत्सुखाद्यन्वितवस्तूपादानकमिति विशेषव्याप्ति, घटादिरूपे दृष्टान्ते विशेषव्याप्त्यसम्भवादित्यभिप्रेत्य सामान्यमुखी व्याप्तिमाह—"यानि च" इति, यानि च घटादीनि यत्स्पर्शादिमन्मृत्सामान्यरूपसमन्वितानि तानि तत्स्पर्शादिस्वभावमृदात्मसामान्याव्यक्तोपादानकानीत्यर्थमभिप्रेत्योदाहरणमाह—"यथा मृद्धेमपिण्डसमनुगता घटमुकुटादय" इति।

नच 'यद् येन सामान्येनान्वित तद् तत्सामान्योपादानकम्' इति व्याप्तिर्न सार्वत्रिकी, जातिरूपसामान्यान्वितत्वेपि भावाना जात्युपादानकत्वादर्शनादस्या व्याप्तेर्व्यभिचारग्रस्तत्वाद् इति शङ्कनीयं, यद् येन द्रव्यसामान्येनानुगतं तद् तद्व्यक्तरूपद्रव्यसामान्योपादानकमिति व्याप्तेर्विवक्षितत्वाद्। नच 'एवमपि दृष्टान्ते एतादृशव्याप्तिसत्त्वेऽपि सुखादीनां गुणत्वेनाद्रव्यत्वान्महदादौ पक्षे व्याप्त्यभावस्तथाच कथ सुखाद्यन्वितत्वेन हेतुना सुखाद्यात्मकसामान्योपादानकत्वानुमानम्' इति वाच्य, गुणगुणिनोरभेदेन सुखाद्यात्मकसत्त्वादिद्रव्यसामान्यान्वितत्वेन हेतुना सुखाद्यात्मकसत्त्वादिद्रव्यसामान्योपादानकत्वानुमानस्याभीप्सितत्वेन दोषाभावाद्, लघुत्वादि प्रीत्यादिधर्मवत्त्वेन सत्त्वादीनां द्रव्यत्वाभ्युपगमेन तत्र गुणव्यवहारस्यौपचारिकत्वादिति।

एव सामान्यव्याप्त्याश्रयणेन निष्पन्नेऽपि समीहिते यदि कस्यचिद् विशेषव्याप्त्याश्रयणे सना-

१ तथाच समन्वयाद् इत्यस्य सुखाद्यात्मसामान्यान्वितत्वादित्यर्थ। २ "अद्रवन्मूर्तिमत्स्वाङ्ग प्राणिस्थम्' इत्युक्तत्वेनात्र सुखस्याप्राणिस्थत्वेन स्वाङ्गत्वाभावात् 'स्वाङ्गाच्चोपसर्जनाद सयोगोपधात् ङीष्" इति ङीषोऽप्राप्त्या सुमुखाशालेत्यादाविव टाबेवेत्याशयेनोक्त "सामान्यमुखाम्" इति, एतेन—सामान्यमुखी व्याप्ति फलमुखी चानवस्था इत्यादय प्रयोगा प्रामादिका एवेति बोध्यम्। ३ कल्पतरुकाराद्युक्तमाशङ्क्य निराकरोति—"नच" इत्यादिना। ४ दृष्टान्ते=घटादौ। ५ अत्र सर्वत्र धर्मधर्मिणोरभेदमादाय सुखाद्यात्मत्वाभिधान ज्ञेयम्। ६ सत्त्वादीना गुणत्वेन कथ द्रव्यत्वमित्यत्राह—"लघुत्वादि" इति। ७ कथ तर्हि सत्त्वादयो गुणा इति व्यवहारस्तत्राह 'तत्र' इति, तत्र=ससत्त्वादौ, राजोपकरणेऽमात्य इव पुरुषोपकरणे सत्त्वादौ गुणत्वव्यवहार औपचारिक इत्यर्थ।

दरस्तर्हि 'यत्सुखाद्यन्वितं तत्सुखाद्यात्मकाव्यक्तप्रकृतिपूर्वकम्' इतिविशेषव्याहाराश्रयणेनैव स तोषणीय, नच दृष्टान्त एतादृशव्याहारसम्भव इति शङ्क्य, घटो हि येनाप्यते तं प्रति सुखात्मक, यस्य चापह्रियते तं प्रति स दुःखरूप येन च न ज्ञायते किमिदं वस्त्विति तं प्रति च सम्मोहरूप इत्येवं घटस्य सुखाद्यन्वितत्वसम्भवात्, सत्कार्यवादाङ्गीकारेण व्यक्तघटस्य सुखाद्यन्विताव्यक्तघटपूर्वकत्वसत्त्वाच्च व्याप्तेरसम्भवाभावादितिदिक्। यत्तु अन्वयाद्यनुपपत्तेश्च, नहि बाह्याध्यात्मिकानां भेदानां सुखदुःखमोहात्मकतयान्वय उपपद्यते, सुखादीनां चान्तरत्वप्रतीतेः, इत्यादिना ग्रन्थेनात्रानुमाने समन्वयादिति हेतोरसिद्धत्वमापादितं शाङ्करभाष्ये तत्तु पूर्वमेव विस्तरेण सर्वेषां भावानां सुखाद्यात्मकत्वोपपादनेन समाहितमिति न पुनः समाधानीयम्।

अपि च सुखाद्यात्मकप्रत्ययं प्रति विषयाणां सुखाद्यात्मकत्वेनैव हेतुत्वस्यौचित्यात्, स्रक् सुखं, चन्दनं सुखमित्याद्यनुभवाच्च न विषयाणां सुखादिस्वभावानुपपत्तिरिति।

किञ्च–सुखादीनामान्तरत्वप्रतीतेः–इत्यनेन किं सुखादीनामात्मधर्मत्वेनान्तरत्वमभिप्रेतं किं वा बुद्धिधर्मत्वेन। न तावदाद्य कल्प, मतद्वयेप्यात्मनो निर्गुणत्वेन तद्धर्मत्वाभावात्, द्वितीयस्त्विष्ट एव सर्वस्य सुखादिमत्त्वेन बुद्धेरपि तत्त्वात्, तत्र सुखादिप्रतीतेरदोषात्।

किञ्च, "न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः। सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः" इति गीतया वस्तुजाते गुणत्रयान्वयाभिधानेन गुणधर्माणां सुखादीनामप्यन्वयस्यार्थादभिहितत्वात् कथमभिहितम्–'अन्वयाद्यनुपपत्तेश्च' इति, त एव प्रष्टव्या न मे बहुवाच्या मान्यास्त इति सर्वमवदात, तदेतत्सर्वमभिप्रेत्य निगमयति "इति कारणमस्त्यव्यक्तम्" इति, इति=इत्येवम्, उक्तहेतोर्वा।

अनेन चानुमानेन यत् सुखाद्यात्मकाव्यक्तं कारणं सिध्यति तत् तादृग्गुणत्रयवत्प्रधानमेव न ब्रह्म, तस्य निर्गुणत्वेन त्रिगुणत्वाभावादिति न ब्रह्मणोऽर्थान्तरतेत्यपि ज्ञेयम्।

स्यादेतद्, अप्रवृत्तिशीलस्य पुरुषवत् कारणत्वायोगात्प्रधानस्य प्रवृत्तिमत्त्वं वाच्य, तथा च तत् केन प्रकारेण प्रवर्तते, किं स्थितिसंस्कारेण प्रवर्तते किं वा गतिसंस्कारेण, आद्ये सर्वदैव

१ तत्रैतावान् विशेषः, दृष्टान्ते सुखाद्यात्मकाव्यक्तावस्थापन्ना मृत्तिका, पक्षे च तादृशाव्यक्तावस्थापन्नं प्रधानं सिध्यतीति। २ घटपटकटकादीनामपि सुखाद्यन्वितत्वमुन्नेयमिति भावः। ३ भावानां सुखाद्यन्वयानुपपत्त्या समन्वयादिति हेतुना प्रधानं सिध्यतीत्यर्थः, अन्वयानुपपत्तिमेवोपपादयति–"नहि" इत्यादिना। ४ अ० २ सू० १। ५ पूर्वम्=१३ इत्यार्याविवरणे। ६ पूर्वत्रानुक्तं समाधानान्तरमाह–"अपि च" इति। ७ वेदान्तिमते साङ्ख्यमते चेत्यर्थः। ८ तत्त्वात्=सुखाद्यात्मकत्वात्, तत्र=बुद्धौ। ९ अ० १८ श्लो० ४०। १० गुणत्रयसत्त्वे तद्धर्माणामप्यवश्यम्भावादिति भावः। ११ विज्ञानभिक्षुस्तु यस्यान्वयव्यतिरेकौ सुखादिना सह दृश्येते तस्यैव सुखाद्युपादानत्वं कल्प्यते, तस्य निमित्तत्वं परिकल्प्यान्यस्योपादानत्वकल्पने कारणद्वयकल्पनागौरवाद् इति युक्त्या विषयाणां सुखादिधर्मकत्वं प्राह। १२ तादृक्=सुखाद्यात्मकम्। १३ 'प्रधानं स्थित्यैव वर्तमानं विकाराकरणादप्रधानं स्यात्, तथा गत्यैव वर्तमानं विकारनित्यत्वादप्रधानं स्याद्' इति पञ्चशिखाचार्योक्तविकल्पमनुसृत्य पृच्छति–"किं स्थितिसंस्कारेण" इति, अन्योऽन्यमसम्मिलितानां गुणानां यः कार्यजननाननुगुणः साम्यपरिणामपरम्परावाही परिणामः स स्थितिसंस्कारः, विलक्षणतत्तत्कार्यजननोन्मुखो यः गुणानां वैषम्यपरिणतिपरम्परावाही परिणामः स गतिसंस्कार इति ध्येयम्।

अव्यक्तं साधयित्वास्य प्रवृत्तिप्रकारमाह—"प्रवर्तते त्रिगुणत" इति, प्रतिसर्गावस्थाया सत्त्वं रजस्तमश्च सदृशपरिणामानि भवन्ति, परिणामस्वभावा हि गुणा नाऽपरिणम्य क्षणमप्यवतिष्ठन्ते, तस्मात्सत्त्वं सत्त्वरूपतया, रजो रजोरूपतया, तमस्तमोरूपतया प्रतिसर्गावस्थायामपि प्रवर्तते, तदिदमुक्तं "त्रिगुणत" इति,

---

स्थितिमत्त्वेन विकाराजननात् प्रधीयते=जन्यते विकारजातमनेनेति प्रधानपदव्युत्पत्तिनिमित्तकप्रधानव्यवहारालाभेनाप्रधानमेव तद् भवेन्न प्रधान, द्वितीये सर्वदेव कार्यजनने व्यापृतत्वान्न कदाचित्कार्यं संहरेदिति विकाराणा सदातनत्वमापद्येत, प्रधीयते=निधीयते—लीयते विकारजात यस्मिन्निति व्युत्पत्तिनिमित्तकप्रधानव्यवहारश्च लुप्येत, इत्याकाङ्क्षाया प्रधानप्रवृत्तेरनैकान्तिकत्व व्यवस्थापयितुं प्रवृत्त कारिकांशमवतारयति—"अस्य प्रवृत्तिप्रकारमाह—प्रवर्तते त्रिगुणत" इति ।

अत्रेद बोध्यं—"साम्यवैषम्याभ्या कार्यद्वयम्" इति साङ्ख्यसूत्राद् "उभयथा चास्य प्रवृत्ति. प्रधानव्यवहार लभते नान्यथा" इति पञ्चशिखाचार्यवाक्याच्च, प्रधानस्य प्रवृत्तिद्वयमभ्युपेयते एका तावत् सत्त्वरजस्तमसामन्योन्यगुणप्रधानभावानपेक्षा साम्येन स्वरूपमात्रेणावस्थानरूपा सदृशपरिणामपरम्परावाहिनी या किल प्रलयकालिकी, अपरा च सत्त्वरजस्तमसा परस्पराङ्गाङ्गित्वप्रयुक्तासाम्यावस्थानात्प्रच्युतिरूपा विसदृशपरिणतिपरम्परावाहिनी, इय खलु सर्गकालिकी, तत्र 'त्रिगुणत' इत्यनेनाद्या प्रवृत्तिरुक्ता, 'समुदयाच्च' इत्यनेन द्वितीया प्रवृत्तिरभिहिता, तत्राद्या प्रवृत्तिं व्याख्यातु त्रिगुणत इति व्याचष्टे—"प्रतिसर्गावस्थायाम्" इति, प्रलयावस्थायामित्यर्थ,

अत्र च न सर्गारम्भ इव विलक्षणतत्तन्महदहङ्कारादिरूपेण परिणामशीलानि गुणानि सन्त्यपि तु सदृशपरिणामानीत्युक्त स्पष्टयति—'सत्त्व सत्त्वरूपतया" इत्यादिना, लघुत्वादिरूपस्वानुरूपपरिणामेनैव तत्र सत्त्व वर्तते न केनचिदन्येन गुणेन सह सयुज्य विलक्षणतत्तत्कार्यरूपेण परिणमत इत्यर्थ, एवमग्रेऽपि । किंप्रयोजनोऽय परिणाम इत्यत्राह—"परिणामस्वभावा हि" इति, हि=यत परिणामस्वभावा अत अपरिणम्य=परिणाममप्राप्य परिणतिशीलतामपहाय क्षणमपि गुणा नावतिष्ठन्त इत्यर्थ ।

---

१ सर्वविकारजनकत्वरूप यन्मूलकारणस्य प्रधानत्व तन्न सभवेदित्यर्थ । २ विकाराणा सदातनत्वेनाविनाशित्वे च नाविनाशिन सतो भावस्यात्मवदुत्पत्तिरपीति केषा मूल प्रधान येन प्रधानमेव मूलप्रकृतिरित्युच्यत इत्यपि ज्ञेयम् । ३ अनैकान्तिकत्वम्=स्थितिसस्कारेणैव प्रधान प्रवर्तते न गत्या, गतिसस्कारेणैव वा प्रवर्तते न स्थित्या, इत्यनयो पक्षयोरन्यतरपक्षावधारणरूप नियमाभावमित्यर्थ, कदाचित् स्थित्या वर्तते कदाचिच्च गत्या प्रवर्तत इत्येवमनियम बोधयितुमिति यावत् । ४ अ० ६ सू० ४२। सर्गप्रलयरूप यत्कार्यद्वय तद् गुणाना साम्यवैषम्याभ्या भवति, साम्यावस्थात. प्रलय, वैषम्यावस्थातश्च सर्ग इत्यर्थ । ५ उभयथा=स्थित्या गत्या च अस्य=प्रधानस्य प्रवृत्तिराश्रीयते, अनया रीत्यैव प्रधान प्रधानव्यवहार लभते, अन्यथा=एकतरपक्षाभ्युपगमे तु न प्रधानव्यवहार लभेतेत्यर्थ । ६ अत्र=प्रलये चेत्यर्थ । ७ णिजर्थासभवेन परिणम्य इति वा पाठ्यम्, स्वार्थिकणिजन्तत्वेन वाऽय पाठो नेय ।

प्रवृत्त्यन्तरमाह—"समुदयाच्च" इति, समेत्योदयः समुदयः—समवायः, समुदयश्च गुणाना न गुणप्रधानभावमन्तरेण संभवति, न च गुणप्रधानभावो वैषम्यं विना, न च वैषम्यमुपमर्द्योपमर्दकभावाद् ऋते, इति महदादिभावेन प्रवृत्तिर्द्वितीया ।

स्यादेतत्, कथमेकरूपाणा गुणानामनेकरूपा प्रवृत्तिः, इत्यत आह 'परिणामतः सलिलवद्" इति । यथा हि वारिदविमुक्तमुदकमेकरसमपि,

न हि स्वभाव प्रयोजनमपेक्षत इति भाव ।

सहकारिणोऽदृष्टादेरभावाद् विकाराजननेन प्रलयसंरक्षणमेव वा प्रयोजनं बोध्यम् ।

तदेतदाद्या प्रवृत्ति , कुत , तत्राह—' त्रिगुणत" इति, परम्परामिलितगुणत्रयादित्यर्थ ।

समुदयपदार्थमाह—"समेत्योदय" इति, अन्योन्य मिलित्वाविर्भाव इत्यर्थ ; समुदयपर्यायमाह—' समवाय" इति, समवायश्चात्र परस्परसमिश्रण न तु तार्किकाभिमत सब धविशेष , "न समवायोऽस्ति प्रमाणाभावाद्" इति साङ्ख्यसूत्रादिति बोध्यम् ।

अयं च गुणाना समवाय परस्परविरुद्धानां समबलानां च न सभवतीति गुणप्रधानभावेन समवायो वाच्यः, गुणप्रधानभावश्च वैषम्यं=न्यूनाधिक्य विना न सभवतीति वैषम्यमप्यव श्याभ्युपेय, वैषम्यमपि उपमर्द्योपमर्दकभावाद्=अभिभाव्याभिभावकभावाद् ऋते=विनाऽसभवीति सोऽप्यवश्याश्रयणीय , तथा चादृष्टवशात्पूर्वं गुणेषु क्षोभो जायते, ततश्च कश्चिद् गुण उद्भूत सन्नभिभावको भवति, कश्चिच्चानुद्भूत सन्नभिभाव्यो भवति, ततश्च साम्यावस्थानात्प्रच्युतिरूप वैषम्यमुपजायते, ततश्च परस्पर गुणप्रधानभावेन मिलित्वा महदादिरूपेण परिणामो भवति, इत्येवंविधा या प्रवृत्ति सा द्वितीयेति समुदायार्थ ।

शङ्कते—" कथमेकरूपाणाम्" इति, यद्यपि गुणप्रधानभावमापन्नानां गुणाना सत्त्वप्रधानमेकं रूप, रज प्रधान चापर, तम प्रधान चेतरद्, इत्येवमनेकरूपत्वमस्ति तथाप्येकमेव किंचिद गुणद्वयोपसर्जनकैकगुणप्रधान रूपमित्यवबुद्धयेयमाशङ्का ज्ञेया ।

यद्वा मानवे ऐकैकस्मात् तत्तद्गुणप्रधानरूपादनेकरूप परिणाम उक्त , तथा चैकस्मात् सत्त्वप्रधानादिरूपात्कथमनेकविध, परिणाम इत्याशयेन चेयमाशङ्का नेया ।

१ अ० ५ सू० ९९ । यथा च समवायोऽप्रामाणिकस्तथा २।२।१३ इत्यत्र भाष्ये व्यक्त । २ "गुणक्षोभे जायमाने महान् प्रादुर्बभूव ह" इत्युक्ते पूर्वं गुणक्षोभो भवतीत्यर्थ । ३ रज स्तमउपसर्जन सत्त्व, सत्त्वतमउपसर्जन रजो वा, सत्त्वरजउपसर्जन तमो वा, इत्येवमेकमेव किञ्चिद् रूप मत्वेत्यर्थ । ४ इयम्=कथमेकरूपाणामित्यादिका । ५ मानवे=मनुप्रोक्ते धर्मशासने १२ अध्याये ४२ इत्यारभ्य ५० इत्यन्तेषु श्लोकेष्वित्यर्थ । तत्र हि—ब्रह्मा मरीच्यादयश्च प्रजापतय उत्तमा सात्त्विका , पितर साध्याश्च देवाद्याश्च मध्यमा सात्त्विका , नक्षत्राणि दैत्या विप्राद्याश्चाधमा सात्त्विका, इत्येवमेकस्मात्सत्त्वगुणप्रधानरूपादनेकविध परिणाम उक्त , एव गन्धर्वगुह्यकयक्षादय उत्तमा राजसा , क्षत्रियादयश्च मध्यमा राजसा , नटमल्लादयश्चाधमा राजसा , एव राक्षसपिशाचादयश्चोत्तमास्तामसा , हस्तितुरङ्गसिंहादयश्च मध्यमास्तामसा , कीट सर्पमत्स्यस्थावरादयश्चाधमास्तामसा इत्याद्यपि ज्ञेयम् ।

तत्तद्भूविकारानासाद्य नारिकेलतालतालीबिल्वचिरबिल्वतिन्दुकाऽऽमलकप्राचीनामलककपित्थादिफलरसतया परिणमद् मधुराम्ललवणतिक्तकषायकटुतया विकल्प्यत एवमेकैकगुणसमुद्भवात् प्रधानगुणानाश्रित्याप्रधानगुणाः परिणामभेदान् प्रवर्तयन्ति, तदिदमुक्तं–"प्रतिप्रतिगुणाश्रयविशेषाद्" एकैकगुणाश्रयेण यो विशेषस्तस्मादित्यर्थः ॥ १५ ॥ १६ ॥

ये तु तौष्टिका अव्यक्तं वा महान्तं वाहङ्कारं वेन्द्रियाणि वा भूतानि वात्मानमभिमन्यमानास्तानेवोपासते, तान् प्रत्याह–"सङ्घातपरार्थत्वाद्" इत्यादि।

---

'तत्तद्भूविकारानासाद्य'=पार्थिवपरिणामान् तत्तन्नारिकेलादिफलानि प्राप्य, तदेवाह 'नारिकेल" इत्यादिना, विकल्प्यते=विभिन्नत्वेनानुभूयते प्राणिभिरित्यर्थ।

यद्यपि सत्त्वप्रधान गुणरूपमेकमेव तथाप्यप्रधानतत्तद्गुणतारतम्येन प्रधानरूपस्यानेकरूपस्यानेकरूपतारतया परिणामभेदोपपत्तिरित्यभिप्रेत्याह–" एवमेकैकगुणसमुद्भवाद् " इति

'प्रतिप्रतिगुण' इति वीप्सार्थमाह–" एकैकगुणाश्रयेण " इति।

पूर्वं तत्तद्गुणप्रधानत्वेन रूपत्रय, पुनश्चैकैकस्य तमोलेशोपरक्तरजउपसर्जनसत्त्वप्रधानरजोलेशसवलिततमउपसर्जनसत्त्वप्रधानत्वादिरूपेणानेकरूपत्वम्, इत्येवमेकैकगुणाश्रयेण यो विशेष=अनेकरूपत्व तस्मात् परिणामत=अनेकरूपेण परिणामाद् अनेकरूपा प्रवृत्ति सभवतीत्यर्थ ॥ १६ ॥ १६ ॥

किमर्था चेयं प्रवृत्तिरस्य, न च पुरुषार्था, पुरुषे प्रमाणाभावादिति प्राप्ते पुरुषे प्रमाणप्रदर्शनपरामार्यामवतारयति–" ये तु तौष्टिका " इति।

तुष्टि=प्रकृत्यादिषु लयमात्रेणैव कृतकृत्यतारूपा तृप्ति, सैव प्रयोजन येषा ते तौष्टिका 'बाह्याविषयोपरमात्पञ्च' इति वक्ष्यमाणबाह्यतुष्टिमन्त इत्यर्थ., ये किल प्रकृतिमहदहङ्कार तन्मात्रभूतेन्द्रियाणामन्यतममात्मत्वेनाभिमन्यमानास्तदुपासनया तदुपासनवासितमानसासन्त पिण्डपातानन्तर तेष्वेवाव्यक्तादिषु लयमेष्यन्ति, याश्चाधिकृत्य 'दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तका' इत्यादिक वायवीये पठ्यते, ते योगिविशेषास्तौष्टिका इत्युच्यन्ते तदेवाह–"अव्यक्त वा" इत्यादि।

यथा 'भेदाना परिमाणाद्' इत्यार्यया पञ्चभिर्हेतुभिर्व्यक्तातिरिक्तमव्यक्त साधित तथाऽन-

---

१ 'प्रधानगुणा परिणामभेदान् प्रवर्तयन्ति' इत्येव क्वचित्पठ्यते। २ ५।१।१०४ इत्यत तदस्येत्यधिकारे ५।१।१०८ इत्यनष्ठञ्यनुवर्तमाने च 'प्रयोजनम्' इति सूत्रेण ठञि तौष्टिक इति साधुरित्याशयेन विगृह्णाति–"सैव प्रयोजनम्" इति। ३ ५० इत्यार्याया वक्ष्यमाणा या पञ्च बाह्यास्तुष्टयस्तद्वन्त इत्यर्थ, तत्र नवाना तुष्टीनामुक्तत्वेप्याद्यानामाध्यात्मिकीना चतसृणा नात्र ग्रहण तासामात्मानात्मविवेकपूर्वकत्वादेषां चेन्द्रियादिचिन्तकानामात्मानात्मविवेकविधुरत्वादित्यभिप्रेत्योक्त 'बाह्य' इति। ४ आदिना ४४ इत्यार्याविवरणे वक्ष्यमाण–"भौतिकास्तु शत पूर्णम्" इत्यादिक ग्राह्यम्। वायवीये=वायुपुराणे।

**सङ्घातपरार्थत्वाद्, त्रिगुणादिविपर्ययादधिष्ठानात्।**
**पुरुषोऽस्ति भोक्तृभावात्, कैवल्यार्थं प्रवृत्तेश्च ॥ १७ ॥**

पुरुषोऽस्ति अव्यक्तादेर्व्यतिरिक्तः, कुतः, सङ्घातपरार्थत्वाद्, अव्यक्त-महदहङ्कारादयः परार्थाः,

सङ्घातत्वाच्छयनासनाभ्यङ्गादिवत्, सुखदुःखमोहात्मकतया अव्यक्तादयः सर्वे सङ्घाताः,

---

यार्यया पञ्चभिर्हेतुभिरव्यक्ताद्यतिरिक्त पुरुष साधयत इत्यभिप्रेत्य साधनीय विषयमुपन्यस्यति–"पुरुषोऽस्ति" इति।

तत्राहमहमिति प्रतीतिसिद्ध धर्मिण्यात्मनि विप्रतिपत्तेरसम्भवात्, तस्याऽव्यक्तादिव्यतिरिक्तत्वाऽव्यतिरिक्तत्व एव विप्रतिपत्तिरित्याशयेन पुरुष विशिनष्टि–'अव्यक्तादेर्व्यतिरिक्त" इति

तत्राद्य हेतुमवतार्य तद्विवक्षितमनुमानप्रयोगमाह–"अव्यक्तमहदहङ्कारादय" इति परार्था = अव्यक्ताद्यतिरिक्तचेतनार्था इत्यर्थ।

तत्र हेतुमाह–"सङ्घातत्वाद्" इति, सहन्यन्ते=मिश्रीभवन्त्यनेके विशेषा यत्रासौ सङ्घात तस्य भावस्तत्त्व, तस्माद्, अनेकात्मकत्वादिति यावत्।

तूलिकोपधानप्रच्छादनवसनादिना शयनादीनामनेकात्मकत्वेऽपि प्रकृत्यादेरनेकात्मकत्वाभावात्कथ सघातत्वमित्याकाङ्क्षायामव्यक्तादे सघातत्व दर्शयन् हेतो पक्षधर्मतामाह–"सुखदु ख मोहात्मकतया" इति।

सङ्घाता.=सहननवन्त, सहनन चात्रानेकैर्विशेषै सवलन–समिश्रणम्।

"सहतपरार्थत्वात्पुरुषस्य" इति सूत्रे विज्ञानभिक्षुस्तु "सहननमारम्भकसयोग, स चावयवावयव्यभेदात्प्रकृतितत्कार्यसाधारण" इत्याह—

पातञ्जलसूत्रे योगभाष्ये च 'सहत्यकारित्वाद्' इत्ययं हेतुरुपन्यस्त, तस्य चेतरसाहित्ये नार्थक्रियाकारित्वादित्यर्थो ज्ञेय, तत्र गुणानामन्योन्य मिथुनीभूय कार्यकरणात्सहत्यकारित्व महदादेश्च क्लेशकर्मवासनाभिर्विषयेन्द्रियादिभिश्च सहत्य प्रकृत्यापूर चापेक्ष्य कार्यकरणात्संहत्य-कारित्वमिति ध्येयम्, न चाऽव्यक्तादिक सहत्यापि करिष्यति स्वार्थं च भविष्यतीति विपक्षे बाधकतर्काभावादप्रयोजकोऽय हेतुरिति साम्प्रत, स्वात्मनि वृत्तिविरोधेन स्वस्य स्वार्थत्वासभवाद्, एतच्च 'न दुःखचित्त सुखार्थम्' इत्यादिना योगभाष्ये व्यक्तम्।

---

१ सघातपरार्थत्वादित्यनेन विवक्षितमित्यर्थ। २ अनेन सङ्घातपदमधिकरणघञन्तमिति दर्शितम्। ३ १ सू० ६६। गुणानामन्योन्य सयुज्यारम्भकत्वेनाव्यक्त आरम्भकसयोगसत्त्वेपि महदादौ तदभावात्कथ सहननवत्त्वम्, अत उक्तम् "अवयवावयव्यभेदात्"=प्रकृतितत्कार्ययोस्तादात्म्यात्। ४ 'तदसङ्ख्येयवासनाभिश्चित्तमपि परार्थं सहत्यकारित्वाद्' ४।२४ इति सूत्रे। ५ "परार्थं बुद्धि सहत्यकारित्वाद्" इति योगभाष्ये च २। २०। ६ एतच्च १० इत्यार्याया 'परतन्त्रम्' इत्यस्य विवरणे व्यक्तम्। ७ स्वस्मिन् स्वव्यापारासम्भवादित्यर्थ, तथा च विपक्ष-बाधकतर्कसत्त्वान्नाप्रयोजकोऽय हेतुरिति ज्ञेयम्। ८ सुखाद्याकारेण परिणत चित्त स्वसुखार्थं नेत्यर्थ। ९ ४–२४।

स्यादेतत्, शयनासनादयः सङ्घाताः संहतशरीरार्थाः दृष्टाः न त्वात्मानमव्यक्ताद्यतिरिक्तं प्रति परार्थाः, तस्मात् सङ्घातान्तरमेव परं गमयेयुर्न त्वसंहतमात्मानम्, इत्यत आह "त्रिगुणादिविपर्ययाद्" इति,

अयमभिप्रायः—सङ्घातान्तरार्थत्वे हि तस्यापि सङ्घातत्वात् तेनापि सङ्घातान्तरार्थेन भवितव्यम्, एवं तेनतेनेत्यनवस्था स्याद्, न च व्यवस्थायां सत्यामनवस्था युक्ता, कल्पनागौरवप्रसङ्गाद्, न च प्रमाणवत्त्वेन कल्पनागौरवमपि मृष्यत इति युक्तं, संहतत्वस्य पारार्थ्यमात्रेणान्वयाद्, दृष्टान्तदृष्टस-

---

दृष्टान्तबलेनार्थान्तरतामाशङ्कते—"शयनासनादय" इति दृष्टान्तत्वेनोपात्ता शयनादय इत्यर्थ, गमयेयु =अनुमापयेयुरित्यर्थ ।

अर्थान्तरतावारणाय द्वितीय हेतुमवतारयति—"त्रिगुणादिविपर्ययाद्" इति, त्रिगुणादि इति आदिना अविवेकित्वादिकं पूर्वोक्त ग्राह्यं, त्रिगुणादेर्विपर्यय =अभावो यत्रासौ त्रिगुणादिविपर्यय , तस्माद्—अत्रिगुणादिमत्त्वादिति यावत् ।

तथा च—आत्माऽसंहत,, अत्रिगुणादिमत्त्वाद्, यन्नासंहत तन्नात्रिगुणादिमद् यथा महदादिकम् इत्यत्र फलितम्, एतदेव विशदयितुमाह—"अयमभिप्राय" इति ।

गत्यन्तराभावादनवस्थाप्यास्थेया, इत्यत्राह "न च व्यवस्थाया सत्याम्" इति, सङ्घातत्वहेतो पारार्थ्यमात्रसाधन उपक्षीणत्वेन सङ्घातान्तरार्थत्वसाधने विशेषतो व्यापाराभावेनासंहतपरार्थत्वसिद्धिरूपाया व्यवस्थायां सभवन्त्यामनवस्थाकल्पना न युक्तेत्यर्थ, अयुक्तत्वे हेतु "कल्पनागौरवप्रसङ्गाद्"=पारार्थ्यमात्रसाधनापेक्षया संहतपारार्थ्यसाधनस्य गौरवग्रस्तत्वादित्यर्थ ।

दृष्टान्ते सङ्घातत्वस्य सङ्घातान्तरार्थत्वेन व्याप्तत्वदर्शनात् प्रामाणिक संहतपारार्थ्यकल्पनमित्याशङ्क्य निरस्यति "न च प्रमाणवत्त्वेन" इति ।

न च तथा सति[1] दृष्टान्तदृष्टसङ्घातान्तरार्थत्वरूपधर्मालाभेन दृष्टान्ते साध्यवैकल्यसत्त्वान्नेदमनुमानमुदीयादिति साम्प्रत, तथा सति[2] निखिलानुमानानुत्थानप्रसङ्गादित्याह "दृष्टान्तदृष्ट" इति ।

एतच्च "परार्थाश्चक्षुरादय सङ्घातत्वाच्छयनासनादिवदिति, अथ मन्यसे सत्यं सङ्घाता परार्था भवन्ति ते तु सङ्घातान्तरार्था यथा शयनादय" इत्यारभ्य "यदि विवक्षितार्थव्यतिरेकेणानुमानस्याविवक्षितमपि[3] विषयो नन्वेतस्या[4] कल्पनाया सर्वमनुमान व्याहन्येत, कथमिति, यदिष्टमनुमानत्वेन[5] तदपि नानुमान प्राप्नोति, यथा शब्दानित्यत्वे कृतकत्वं, किं कारणं, यथेह कृतकत्वमनित्यत्वेनाविनाभूतमनित्यत्वं साधयत्येव तु खशून्यानात्मकत्वमपि साधयति, तु खशून्यानात्मकत्ववदश्रोत्रग्राह्यत्वमपि साधयिष्यति, ततश्च न श्रोत्रग्राह्य शब्द-

---

१ तथा सति=सङ्घातान्तरार्थत्व विहाय परार्थत्वमात्रस्य साध्यत्वेऽङ्गीकृते सतीत्यर्थ । २ तथा सति=दृष्टान्तदृष्टसर्वधर्मानुरोधे सति । ३ विवक्षितपदम् अभिप्रेतपरम् । ४ ननु=तर्हि ५ यदनुमितिकरणत्वेन साध्यसाधक साधनमिष्ट तदप्यनुमानम् ।

वैधर्म्यानुरोधेन त्वनुमानमिच्छतः सर्वानुमानोच्छेदप्रसङ्ग इत्युपपादितं न्यायवार्तिकतात्पर्यटीकायामस्माभिः, तस्मादनवस्थाभियास्यासङ्घातत्वमिच्छताऽत्रिगुणत्वमविवेकित्वमविषयत्वमसामान्यत्वं चेतनत्वमप्रसवधर्मित्वं चाभ्युपेयं, त्रिगुणादयो हि धर्माः संहतत्वेन व्याप्ताः तत्संहतत्वमस्मिन् परे व्यावर्तमानं

कृतकत्वाद् घटवदिति, अथा[१]ऽनुमानेन बाध्यतेऽय प्रतिज्ञार्थ इत्यतो न हेतुः, नन्वयमपि सङ्घातान्तरार्थाश्चक्षुरादय इत्यागमेनानुमानेन च बाध्यते, यत्रापि भवान् सङ्घातान्तर प्रतिपद्यते तत्राप्यनिवृत्त सङ्घातत्वमिति तेनापि सङ्घातान्तरार्थं भवितव्यमिति, एव चानवस्था, न चैनां शक्त कश्चित् प्रतिपादयितुम्, इति यत एषा निवर्तते तदसहतम्'' इत्यन्तेन ग्रन्थेन न्यायवार्तिके[२]।''तस्माद् यथाऽनित्यः शब्द उत्पत्तिमत्त्वाद् घटवदिति प्रयुक्ते कश्चित् साध्यदृष्टान्तयोर्धर्मवैचित्र्यात्प्रत्यवतिष्ठेत-यदि घटसाधर्म्यादुत्पत्तिमत्त्वादनित्यः शब्दो हन्त तस्मादेव रूपादिमता तेन भाव्य, न चेदय घटसाधर्म्येण रूपादिमानेवमनित्योऽपि मा भूद्, एव च प्रत्यवतिष्ठमान उत्कर्षसमजातिवादी[४] पराजीयते, एवमेववै[५]वोत्कर्षसमजातिवादितया पराजेतव्य साधर्म्यमात्रेणाप्रयोजकेन प्रत्यवस्थानात्, तस्य च सर्वानुमानेषु सुलभतया सर्वानुमानोच्छेदापादकत्वाद्'' इत्यादिना तात्पर्यटीकाया[३] च व्यक्तमिति तत्रैव कणेहत्यालोच्यमित्यभिप्रेत्याह ''इत्युपपादित न्यायवार्तिकतात्पर्यटीकायाम्'' इति,

एव स्थिते त्रिगुणादिविपर्ययादिति हेतुं योजयितुं निर्गलितार्थमाह ''तस्माद्'' इति,

यत परस्यासहतत्वानभ्युपगमेऽनवस्थालक्षणोऽनिष्टापादनरूपः प्रसङ्गो दुर्वारस्तस्मादित्यर्थः,

असहतत्व कामयमानेनाकामितमत्रिगुणत्वादिक किमित्युपेय, तत्राह-''त्रिगुणत्वादयो हि धर्मा'' इति, येये त्रिगुणत्वादिमन्तस्तेते सहता यथा महदादय इत्येवं त्रिगुणत्वादय सहतत्वेन व्याप्ता दृष्टा इत्यर्थ, तत किं, तत्राह-''तत्सहतत्वम्'' इति, तद्=व्यापकम् (अ) सहतत्वम् अस्मिन्=परार्था इति साध्यैकदेशभूतपरशब्दार्थे आत्मनि व्यावर्तमान=निवर्तमान सद् स्वव्याप्यभूत त्रिगुणत्वादिक निवर्तयति, व्यापकासत्त्वे व्याप्यासत्त्वस्य नियतत्वादित्यर्थ, तत्र

१ अथ=यदि अनुमानेन=शब्दस्य श्रोत्राग्राह्यत्वे बधिरेणापि तद्ग्रहणप्रसङ्ग इति तर्केण श्रोत्राग्राह्यत्वरूप प्रतिज्ञार्थो बाध्यते ननु=नहि सङ्घातान्तरार्था इत्ययमप्यर्थोऽनुमानेन=अनवस्थालक्षणानिष्टापादनरूपेण तर्केण बाध्यत इत्यर्थ, तदेवाह-''यत्रापि'' इति। २ न्यायदर्शनीयतृतीयाध्यायीयाद्याह्निकभूमिकायामिति शेष । ३ तुरीयाध्यायीयाद्याह्निकीयैकविंशतिसूत्रीयभाष्यवार्तिकव्याख्यास्थलीयोय ग्रन्थ, पारमेश्वर ज्ञान नित्यमिति प्रकृत्य ''न च शरीरादिसहभावेन ज्ञानस्य तत्रतत्रोपलब्धे शरीरादीना ज्ञान व्याप्यमिति युक्त, स्वाभाविकसबन्धशालिता हि व्याप्यता, सा चोपाधिविरहे भवति, अस्ति च शरीरादिसहभावे ज्ञानस्योपाधि कार्यत्व कार्यं ज्ञान स्वकारण शरीरादि नातिवर्तते नित्य तु तदतिवर्तमानमपि साहित्योपलम्भ न विरुणद्धि'' इति ग्रन्थात्समनन्तरोय ग्रन्थ इत्यपि बोध्यम्। ४ एतादृशप्रत्यवस्थानमेवोत्कर्षसमजातिरूप निग्रहस्थानमिति न्यायदर्शने व्यक्तम् । ५ एव वक्तु शीलमस्येत्येववादी उक्तप्रकारकनिग्रहस्थानवादीत्यर्थ ।

त्रैगुण्यादि व्यावर्तयति, ब्राह्मणत्वमिव व्यावर्तमानं कठत्वादिकं, तस्मादाचार्येण 'त्रिगुणादिविपर्ययाद्' इति वदताऽसंहतः परो विवक्षितः, स चात्मेति सिद्धम्।

इतश्च परः पुरुषोऽस्ति "अधिष्ठानात्"=त्रिगुणात्मकानामधिष्ठीयमानत्वाद्, यद्यत्सुखदुःखमोहात्मकं तत्सर्वं परेणाधिष्ठीयमानं दृष्टं, यथा रथादि यन्त्रादिभिः, सुखदुःखमोहात्मकं चेदं बुद्ध्यादि, तस्मादेतदपि परेणाधिष्ठातव्यं, स च परस्त्रैगुण्यादन्य आत्मेति,

---

दृष्टान्त –"ब्राह्मणत्वमिव" इति, यजुर्वेदीयकठशाखाध्ययनकर्तृब्राह्मणनिष्ठो धर्मविशेष कठत्वम्, इव=यथा क्षत्रियादौ ब्राह्मणत्व निवर्तमान सत् तद्व्याप्य कठत्व निवर्तयति तद्वदित्यर्थ,

एव च–परोऽसंहतोऽत्रिगुणत्वादिमत्वादिति पूर्वोक्तमनुमानमत्र फलितमित्याशयेनोपसंहरति "तस्माद्" इति, आचार्येण=साङ्ख्यकारिकाकृतेश्वरकृष्णेनेत्यर्थं,

'अधिष्ठानाद्' इति तृतीयहेतोरर्थमाह–"त्रिगुणात्मकानाम्" इति, सुखाद्यात्मकाना महदादीनामन्येन केनचित्प्रेर्यमाणत्वादित्यर्थ,

तथा च 'महदादिक केनचित्परेण चेतनेनाधिष्ठीयमान भवितुमर्हति सुखाद्यात्मकत्वात्, संहतत्वाद् वा' इति प्रयोगोऽत्र दर्शित, अत्र व्याप्तिमाह="यद्यद्" इति, उदाहरणमाह "यथा रथादि" इति, यन्ता=सूत –अश्वचालकः सारथिरिति यावद्, उपनयमाह–"सुखदुःखमोहात्मकं चेदम्" इति, निगमनमाह–"तस्माद्" इति,

न च महदादिष्वन्यतम एव कश्चिदधिष्ठाता भवत्विति साम्प्रतं, स्वस्य स्वाधिष्ठानायोगादित्यभिप्रेत्याह–' त्रैगुण्यादन्य आत्मा" इति,

न चात्मनो निर्गुणत्वेन निष्क्रियत्वात्कथमधिष्ठातृत्व, प्रवर्तनव्यापारवत एव सारथ्यादेरधिष्ठातृत्वदर्शनादिति शङ्क्यं, निर्व्यापारस्याप्ययस्कान्तमणेरिव सन्निधिमात्रेणाधिष्ठातृत्वोपपत्तेर्व्यापारवत एव प्रयोजकत्वमिति नियमानाश्रयणात्, तथा च सूत्रं "तत्सन्निधानादधिष्ठातृत्वं मणिवद्" इति,

अचलतोऽपि नृपतिवद्वा सत्तामात्रेण प्रयोजकत्व, तथा चाहु कुमारिलस्वामिन –"न च सर्वत्र तुल्यत्व स्यात्प्रयोजककर्मणो, चलनेन ह्यसिं योद्धा प्रयुङ्क्ते च्छेदनं प्रति, ८५ । सेनापतिस्तु वाचैव भृत्यानां विनियोजक, राजा सन्निधिमात्रेण विनियुङ्क्ते कदाचन, ८६ । तस्मादचलतोऽपि स्याच्चलने कर्तृतात्मनं" इति,

एतेनै 'प्रवृत्ते रचनायाश्चानुपपत्तेर्नाचेतन चेतनाधिष्ठानविहीनं प्रधान कारणम्' इत्यादय आक्षेपा प्रतिक्षिप्ता इति वेदनीयम्, 'पुरुषाधिष्ठित प्रधान प्रवर्तते' इति षष्ठितन्त्र उक्तत्वेनाक्षेपस्यैवानुत्थानमित्यपि ध्येयम्, अधिकमेतद्भूमिकातोऽवसेयम्,

---

१ अ० १ सू० ९६ । २ पञ्चमसूत्र आत्मवाद इति शेष । ३ एतेन=आत्मनोऽधिष्ठातृत्वसंभवोपपादनेन। ४ अ० २ सू० १।२ इत्यत्र शङ्कराचार्यादीनामेवविधा उक्तय । ५ वार्षगण्याचार्यप्रणीत इति शेष , गौडपादभाष्य इदमुपन्यस्त षष्टितन्त्रवाक्यमिति ज्ञेयम् ।

इतश्चास्ति पुरुषः 'भोक्तृभावाद्' भोक्तृभावेन भोग्ये सुखदुःखे उपलक्षयति, भोग्ये हि सुखदुःखे अनुकूलप्रतिकूलवेदनीये प्रत्यात्ममनुभूयेते, तेनानयोरनुकूलनीयेन प्रतिकूलनीयेन च केनचिदप्यन्येन भवितव्यं, न चानुकूलनीयाः प्रतिकूलनीया वा बुद्ध्यादयः, तेषा सुखदुःखात्मकत्वेन स्वात्मनि वृत्तिविरोधात्, तस्माद् योऽसुखाद्यात्मा सोऽनुकूलनीयः प्रतिकूलनीयो वा, स चात्मेति,

अन्ये त्वाहुः—भोग्याः=दृश्या बुद्ध्यादयः, न च द्रष्टारमन्तरेण दृश्यता युक्ता तेषा, तस्मादस्ति द्रष्टा दृश्यबुध्द्याद्यतिरिक्तः, स चात्मेति,

भोक्तृभावाद्=द्रष्टृभावाद्, दृश्यत्वेन द्रष्टुरनुमानादित्यर्थः,

दृश्यत्वं च बुद्ध्यादिनां सुखाद्यात्मकतया पृथिव्यादिवदनुमितम् ,

इतश्चास्ति पुरुष इत्याह "कैवल्यार्थं प्रवृत्तेश्च" शास्त्राणा महर्षीणा च

---

'भोक्तृभावाद्'=भोक्तृत्वाद्, अनेन हेतुना विवक्षितमर्थमाह "भोक्तृभावेन भोग्ये" इति, उपलक्षणत्वे सति यदायातं तदाह "भोग्ये हि" इति,

भवतु प्रत्यात्म तयोरनुभवः किमेतावता, तत्राह "तेनानयो" इति,

तथा च 'सुखाद्यात्मकं बुद्ध्यादिक स्वातिरिक्तेन केनचिद् भोक्त्राऽनुभवनीय भोग्यत्वादोदनादिवद्' इत्यनुमानमत्र सूचितम् ।

न च बुद्ध्यादीनामेव भोक्तृत्वसंभवात् स्वातिरिक्तेनेति रिक्तमिति[1] वाच्यम्, एकस्य कर्मकर्तृभावविरोधेन स्वस्य स्वेन भोग्यत्वासंभवादित्याशयेनाह "न चानुकूलनीया" इत्यादि, 'स्वात्मनि वृत्तिविरोधाद्' न ह्यसिधारात्मान छिनत्ति वह्निर्वात्मान दहतीति भाव ।

असङ्गस्यात्मनो भोक्तृत्वमसम्भवीति मन्यमानानामन्येषा व्याख्यानमाह—"अन्ये त्वाहु" इति, 'तस्मादस्ति द्रष्टा' इति । नन्वयमर्थ कथ लब्ध , तत्राह "भोक्तृभावाद्=द्रष्टृभावाद्" इति, ।

'अनुमानाद्'=बुद्ध्यादयो द्रष्टृपूर्वका दृश्यत्वाद् घटादिवदित्यनुमानादित्यर्थः ।

पक्षधर्मतामाह—"दृश्यत्व च" इति ।

असङ्गस्य परमार्थतो दर्शनकर्तृत्वासभवाद् बुद्ध्युपाधिकमेव द्रष्टृत्वमात्मन इति मन्तव्यम् , एतच्च "द्रष्टा दृशिमात्र शुद्धोऽपि प्रत्ययानुपश्य" इति सूत्रे[2] योगभाष्ये व्यक्तम् , एवं च द्रष्टृत्ववद् भोक्तृत्वस्यापि सम्भवादाद्यव्याख्यानमपि समीचीनमेवेति ध्येयम् ।

केषा प्रवृत्तेरित्याकाङ्क्षा पूरयति—"शास्त्राणाम्" इति ।

अस्माक किल लोचनानि बाह्यमेव सन्निहितमालोचयन्तीति लौकिकलोचना वय, महर्षीणां[3] तु लोचनानि सयमप्रभावाद् व्यवहित सूक्ष्ममप्यालोचयन्तीति ते दिव्यलोचना इत्युच्यन्त इति ।

---

१ अनर्थकम् । २ पा० २ सू० २० । ३ तृतीये पादे ३६ इति योगसूत्रे व्यक्तमेतद् ।

दिव्यलोचनाना, कैवल्यं चात्यन्तिकदुःखत्रयप्रशमलक्षणं न बुद्धयादीना संभवति, ते हि दुःखाद्यात्मकाः कथं हि स्वभावाद् वियोजयितु शक्यन्ते, तदतिरिक्तस्य त्वतदात्मनस्ततो वियोगः शक्यसम्पादः, तस्मात्कैवल्यार्थं प्रवृत्तेरागमाना महाधिया चास्ति बुद्धयादिव्यतिरिक्त आत्मेति सिद्धम् ॥१७॥

तदेवं पुरुषास्तित्वं प्रतिपाद्य स कि सर्वशरीरेष्वेकः किमनेकः प्रतिक्षेत्रमिति संशये तस्य प्रतिक्षेत्रमनेकत्वमुपपादयति–"जन्ममरणकरणानाम्" इत्यादिना,

**जन्ममरणकरणानां प्रतिनियमाद्, अयुगपत्प्रवृत्तेश्च ।**
**पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ १८ ॥**

पुरुषबहुत्वं सिद्धं कस्माद्, जन्ममरणकरणाना प्रतिनियमाद्,

निकायविशिष्टाभिरपूर्वाभिर्देहेन्द्रियमनोऽहङ्कारबुद्धिवेदनाभिः पुरुषस्याभिसंबन्धो जन्म, न तु पुरुषस्य परिणामः, तस्यापरिणामित्वात्, तेषामेव

---

कथ न बुद्ध्यादय एव केवलिन इत्याशङ्क्य केवल्यलक्षणाख्यानमुखेन तेषा कैवल्यवैकल्यमाह= "कैवल्य च" इति, असम्भवे हेतु –"ते हि" इति, हि=यत,

आत्मनि सभवमाह–"तदतिरिक्तस्य" इति, अत्र हेतुगर्भित विशेषणमाह–"अतदात्मन" इति, अदुःखाद्यात्मन इत्यर्थ, तत =दुःखादे शक्तिविषय सम्पादन यस्याऽसौ शक्यसम्पाद, सम्पादयितु शक्य इति यावद् ॥ १७ ॥ आत्मनो जनिविकारप्रयुक्तपरिणामित्वाभावायोद्द्योतकराचार्योक्त जन्मपदार्थमाह–"निकायविशिष्टाभि" इति, 'निकाय =देवमनुष्यतिर्यगादीनामनौत्तराधर्येणावस्थित सङ्घात, तद्विशिष्टाभिरित्यर्थ' इति तात्पर्यटीकायाम्मिश्रा, एव च 'सङ्घे चानौत्तराधर्ये' इति सूत्रेण निकायपदनिष्पत्तिरिति दर्शितम् ।

यद्यपि महाभाष्यादिव्याख्यानात्प्राणिना समूह एवात्र सूत्रे सङ्घपदेन गृह्यते न समूहमात्रम्, अत एव ब्राह्मणनिकाय इतिवन्न प्रमाणनिकाय इति प्रयुज्यतेऽपि तु प्रमाणनिचय इति तथापि प्राणिसबन्धित्वेन कथचिदत्रापि प्राणिसमूह सभाव्य निकायपदप्रयोगोपपत्तिर्ज्ञेया, वेदना= सुखाद्यनुभव, स्फूर्त्याख्या चेतना वा ।

ननु देवदत्तो जात इति व्यवहारदर्शनान्मुख्यमेव घटादेरिवात्मनो जन्म न जायमानदेहादिसबन्धरूप भाक्तमित्यत्राह "न तु पुरुषस्य परिणाम" इति, घटादेरिव मुख्य उत्पत्तिरूप परिणाम पुरुषस्य न चेत्यर्थ, अपरिणामित्वान्नात्मनो मुख्य जन्मेति यावद् ।

---

१ प्रतिशरीरम् । २ कैवल्यभाज । ३ अत्र=आत्मनो बुद्ध्यादिभिन्नत्वे । ४ ३।३।४२ उत्तरे चाधरे चोत्तराधरास्तेषा भाव औत्तराधर्यं, तद्भिन्ने प्राणिसमूहे वाच्ये चिनोतेर्घञ् चस्य च क इत्यर्थ । शूकरशावका हि स्तनपानार्थमुत्तराधरभावेन शेरत इति तादृशसमूहे शूकरनिचय इत्येव भवति न घञिति बोधनाय "अनौत्तराधर्य" इति ।

च देहादीनामुपात्तानां परित्यागो मरण, न त्वात्मनो विनाशः, तस्य कूटस्थनित्यत्वात्, करणानि=बुद्ध्यादीनि त्रयोदश, तेषां जन्ममरणकरणानां प्रतिनियमः=व्यवस्था, सा खल्वियं सर्वशरीरेष्वेकस्मिन् पुरुषे नोपपद्यते, तदा खल्वेकस्मिन् पुरुषे जायमाने सर्वे जायेरन्, म्रियमाणे च म्रियेरन्, अन्धादौ चैकस्मिन् सर्व एवान्धादयः, विचित्ते चैकस्मिन् सर्व एव

---

मरण तु यद्यपि 'मृङ् प्राणत्याग' इति स्मरणात्प्राणोपलक्षितदेहादीना त्यागरूप मुख्यमेवात्मनि सम्भवति तथापि घटादेरिव विनाशरूप मरणमत्र मा कश्चिद् ग्रहीदित्याशयेनाह "न तु विनाश" इति।

'न जायते म्रियते वा विपश्चिद्' 'अजो नित्य शाश्वतोऽय पुराण' इत्यादि श्रुत्यात्मनो जन्मादिपरिणामशून्यत्वेन कूटस्थनित्यत्वाम्नानादात्मनो मुरूये जन्मनिधने इत्यर्थ ।

मा नाम भूत् जातो मृत इति व्यवहारान्तराणा [२]व्यामोह इत्यनुकम्पावती बृहदारण्यकश्रुतिरपि 'स वा अय पुरुषो जायमान शरीरमभिसपद्यमान, स उत्क्रामन् म्रियमाण' इत्येव स्वयमेव शरीरादिना [३]संयुज्यमानत्वमेवात्मनो जायमानत्वं, शरीरादुत्क्रमणमेव चात्मनो म्रियमाणत्वमिति निरा[४]ह।

एवं च देवदत्तो जात इत्यादिव्यवहारो भाक्त इत्यत्र फलितम्। एतच्च 'चराचरव्यपा[५]श्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वाद्' इत्यादिब्रह्मसूत्रे भाष्ये व्यक्तम्।

'व्यवस्था'=वैयधिकरण्येनावस्थानम्, इय=व्यवस्था, एकस्मिन् पुरुषे, अभ्युपगते सतीति शेष,

कथ नोपपद्यत इति पृष्टोऽनुपपत्तिं स्पष्टयति "तदा खलु" इति, तदा आत्मैक्ये, पुरुषबहुत्वासत्त्वे वा सति, तथा च जन्मादिव्यवस्थानुपपद्यमाना सत्यात्मभेदमापादयतीत्यत्र सूचितम्।

इ[६]द चार्थापत्तिदर्शनमात्मैक्यवादिन वेदान्तिन प्रति, स्वमते तु 'जन्मादिव्यवस्था वस्तुभेदनिबन्धना व्यवस्थात्वात् स[७]म्मतवद्' इत्यनुमान मनसि निधाय त[८]त्र 'तदा खल्वेकस्मिन् पुरुष' इत्यादिना विपक्षबाधकस्त[९]र्क उच्यत इति ध्येयम्।

आत्मैक्ये जननिधनव्यवस्थानुपपत्तिमभिधाय करणव्यवस्थानुपपत्तिमाह "अन्धादौ च" इति, अन्धत्व=दर्शनशक्तिविहीनत्वम्, आदिना बाधिर्यादिक ग्राह्य, य[१०]द्यप्येतदिन्द्रियधर्मस्तथापि करणाश्रयसङ्घाताभिमानिनि पुरुष उपचर्यत इति ज्ञेयम्।

---

१ काठके १।२।१५। २ आत्मनि जायमानम्रियमाणत्वभ्रान्तिर्व्यामोह। ३ ।४।३।८। ४ निराह=निर्वक्ति, 'जायमान' इत्यस्य शरीरमभिसपद्यमान इति स्वयमेव निर्वचन करोति, 'म्रियमाण' इत्यस्य च 'उत्क्रामन्' इति निर्वचन करोतीत्यर्थ। ५ स्थावरजङ्गमशरीरविषयो जन्ममरणव्यपदेशो मुख्य, आत्मनि तु भाक्त=औपाधिकजन्मादिविषयत्वेन गौण, उपाधिजन्मनाशे सत्येवात्मनि जन्मनाशव्यवहारस्य भावित्वादित्यर्थ। ६ सिद्धान्तेऽर्थापत्तेरनङ्गीकारात्कथमर्थापत्त्या व्यवस्था, तत्राह "इद च" इति। ७ प्रसिद्धघटादिषु जन्मनाशव्यवस्थाया घटभेदनिबन्धनत्वदर्शनादित्यर्थ। ८ तत्र=अनुमाने। ९ व्यवस्थात्वमस्तु वस्तुभेदनिबन्धनत्व च मा भूदित्याकारकस्य विपक्षस्य बाधकस्तर्क। १० एतद्=अन्धत्वादिकम्।

विचित्ताः स्युरित्यव्यवस्था स्यात्, प्रतिक्षेत्रं तु पुरुषभेदे भवति व्यवस्था, न चैकस्यापि पुरुषस्य देहोपाधानभेदाद् व्यवस्था इति युक्तं, पाणिस्तनाद्युपाधिभेदेनापि जन्ममरणादिव्यवस्थाप्रसङ्गात्, न हि पाणौ वृक्णे, जाते वा स्तनादौ महत्यवयवे युवतिर्मृता, जाता वा भवतीति, इतश्च प्रतिक्षेत्रं पुरु-

---

विचित्ते=विगतम्-उपरत वृत्तिरहित चित्त यस्य तस्मिन् सुषुप्ते, योगयुक्ते वेत्यर्थ, एव बन्धमोक्षे व्यवस्थाया अनुपपत्तिरपि बोध्या। स्वमते व्यवस्थामाह "प्रतिक्षेत्रम्" इति, यावन्त सङ्घातास्तावन्त एव तदधिष्ठातार इति मन्मते तु नाव्यवस्थेति भाव।

ननु यथाकाशस्यैकत्वेऽपि घटाद्युपाधिभेदेनौपाधिक भेदमादाय व्यवस्थाऽऽस्थीयते तथात्रापि देहोपाधिक भेदमास्थाय व्यवस्थाऽऽस्थीयतां किं गौरवग्रस्तेन पारमार्थिकेन भेदेन, तथा चाहु -'यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते। न सर्वे सप्रयुज्यन्ते तथा जीवा सुखादिभि' इति, इत्याशङ्कां निरस्यति "न चैकस्यापि" इति, उपाधानम्=उपाधि।

तथा सति देहवद् हस्तस्तनादीनां देहावयवानामप्युपाधित्वेन भेदकत्व स्यात्, तथा च देहावयवोद्भवविरोधाभ्यामपि पुरुषस्य जन्ममरणादिव्यवहार स्यादित्यभिप्रेत्याशुक्तत्वे हेतुमाह- "पाणिस्तनादि" इति,

प्रसङ्गस्येष्टत्वमाशङ्क्य व्यवहारविरोधेन परिहरति "न हि पाणौ" इति,

वृक्णे=छिन्ने, युवति =युवत्वाश्रितसङ्घातवती स्त्री, 'भवति' इत्यनेन चात्र स्वगोचरो व्यवहार, स्वविषयक वा ज्ञानमुपलक्षणीयम्, एव च हस्ते पतिते युवतिर्मृतेति, स्तनादौ च जाते युवतिर्जातेति च न केनापि व्यवह्रियते, नापि ज्ञायत इत्यर्थोऽत्र फलित।

यद्यपि स्तनादौ जाते बाल्य विहाय युवत्व प्राप्त सङ्घातस्तथापि तदवच्छेदेन तदधिष्ठात्र्या न जातत्वव्यवहार, सैवेयमबलेति प्रत्यभिज्ञानाद्, भवन्मते तु कायोपाधिजन्मना तदवच्छेदेनात्मनि जातत्वव्यवहारवत् कायावयवजन्मनाप्यात्मनि जातत्वव्यवहार स्याद्, उपाधित्वाविशेषात्, स च बाधित इति नौपाधिकभेदकल्पनया निस्तार इति भाव।

एतेन परिमाणभेदाद् द्रव्यभेदमनुमिमाना ये तार्किका अवयवापचयेऽसमवायिकारणसयोगनाशादवयविनो विनाशोऽवयवोपचये च पूर्वावयविन्यवयवान्तरनिवेशासम्भवादपूर्वावयव्युत्पत्ति-

---

१ तथा चैकस्मिन् सुषुप्ते योगयुक्ते वा सर्व एव सुषुप्ता योगिनो वा भवेयुरित्यर्थोऽत्र ज्ञेयः। २ 'य एतद्विदुरमृतास्ते भवन्त्यथेतरे दु खमेवोपयन्ति' इति श्रुताया इति शेष। ३ एकस्मिन् घटाकाशे नीयमाने धूमादिना सवलिते वा न सर्वे नीयमाना धूमादिसवलिता वा भवन्ति इति व्यवस्था इत्यर्थ। ४ औपाधिकभेदमादायार्थापत्तेरन्यथाप्युपपत्ति, अनुमानं च सिद्धसाधनमिति शङ्काकृतम्। ५ अद्वैतप्रकरणे गौडपादाचार्या। ६ देहस्योपाधित्वेन जन्मादिव्यवस्थापकत्वे सतीत्यर्थ, देहस्यैवोपाधित्व नावयवानामित्यत्र नियामकाभावादित्याशय। ७ ननु स्तने जाते भवत्येव युवतिर्जातेति-कथमुच्यते न हि जाता भवतीति, इत्याशङ्कायामाह "भवतीत्यनेन" इति, स्वगोचर =भवनविषयक। ८ उद्धार इत्यर्थ। ९ एतेन=स्तने जाते युवत्या जातत्वव्यवहाराभावदर्शनेन।

रित्येव सावयवानामनुक्षणमुत्पादनिरोधावभ्युपयन्तस्तेऽपि गलहैस्तिता जाता इति वेदितव्य, तैथा सति स्तनाद्यवयवे जातेऽपूर्वा या एव युवत्या भवन्मते जातत्वेन सैवेयमिति प्रत्यभिज्ञानानुपपत्ते, सादृश्यदोषदूषितत्वेन भ्रान्तिरियमित्यङ्गीकारे तु भैदन्त एव दत्तविष्टर सुस्थिरो भवेदित्यल तेन विरोधेनेत्यास्ता तावद् ।

ननु न देहावयवानामुपाधित्वमाश्रीयतेऽतिप्रसङ्गापादकत्वादपि तु देहस्यैव, यदाहु 'आरोपे सति निमित्तौनुसरण न तु निमित्तमस्तीत्यारोप' इति, इति चेद्, एवमपि न निस्तार, एकस्मिन् घटे भग्ने तद्घटमुक्तस्याप्याकाशप्रदेशस्य घटान्तरेण पुनर्योगाद् घटाकाशत्वापत्तिरिवैकोपाधिना विमुक्तस्याप्यात्मन पुनरुपाध्यन्तरेण सबन्धाद् बद्धत्वव्यवहारापत्त्या बद्धमुक्तव्यवस्थानुपपत्तेस्तादवस्थ्यात् । साङ्ख्यसूत्रकारास्तु "जन्मादिव्यवस्थात. पुरुषबहुत्वम्" इति स्वमतमभिधाय, पुनरुपाधिभेदमादाय व्यवस्थायामाशङ्कितायाम् "उपाधिभेदेप्येकस्य नानायोग आकाशस्येव घटादिभि" "उपाधिर्भिद्यते न तु तद्वान्" इत्येव समादधिरे ।

स्यादेतद् 'एको देव सर्वभूतेषु गूढ' इत्याद्यैकात्म्यप्रतिपादनश्रुतीनामेवं सति का गतिरिति चेद्, अत्राहुर्मिश्रा–एकत्वश्रुतीना च प्रमाणान्तरविरोधात्कथंचिद् देशकालविभागाभावेन भक्त्याप्युपपत्तेरिति ।

---

१ गले हस्त सजातो येषा ते तथाविधा, तदस्य सजात तारकादिभ्य इतच् इत्यनेन सूत्रेणेतच् । २ तथा सति=परिणामभेदेन द्रव्यभेदाभ्युपगमे सति । ३ भदन्त =बौद्ध, दत्तविष्टर = समर्पितासन, अनेन भदन्तो न तार्किकप्रतिपक्ष्यपि तु तार्किकसयूथ्य इति सूचित, तदेवाह "अल तेन विरोधेन" इति, भदन्तेन सह भवता विरोधो न युक्तस्तन्मतस्याङ्गीकृतत्वादित्यर्थ, एतदुक्त भवति–यत् सत् तत् क्षणिकमिति भदन्तेनोक्ते, प्रत्यभिज्ञाबलात्स्थायित्वमिति तार्किकेणोत्तरिते, पुनश्च सैवेय दीपकलिकेतिवत् सादृश्यदोषदूषितत्वेन प्रत्यभिज्ञाया भ्रान्तित्वमित्येव भदन्तेनाभिहिते किं ते उत्तर, त्वयापि प्रत्यभिज्ञाया भ्रान्तित्वाङ्गीकारादिति । ४ अव्यवस्थाया प्रसक्ताया तद्वारणायोपाधिरूप किंचिन्निमित्तमनुसरणीय न तूपाधिरस्तीत्याश्रित्याव्यवस्थापादनीयेतिभाव । ५ अ १ सू १४९। ६ अ १सू १५०। 'उपाधिभेदेप्येकस्यापि पुरुषस्य नानायोगोऽस्त्येव यथैकस्यैवाकाशस्य घटकुड्यादिनानायोग, अवच्छेदकभेदेनेकस्यात्मन एव विविधजन्ममरणाद्यापत्ति कायव्यूहादाविवेति न सभवति व्यवस्था–एक पुरुषो जायते नापर इत्यादिरित्यर्थ, न ह्यवच्छेदकभेदेन कपिसयोगतदभाववत्येकस्मिन्नेव वृक्षे व्यवस्था घटते=एको वृक्ष कपिसयोग्यन्यश्च नेति' इति सूत्रार्थ इति विज्ञानभिक्षु । ७ अ १ सू १५१। ननु चैतन्यैक्येऽपि तत्तदुपाधिविशिष्टस्यातिरिक्ततामभ्युपगम्य व्यवस्थोपपादनीया, तत्राह–उपाधिर्भिद्यते=उपाधिरेव नाना, न तु तद्वान्=उपाधिविशिष्टोऽपि नानाभ्युपेयो विशिष्टस्यातिरिक्तत्वे नानात्मताया एव शास्त्रान्तरेऽभ्युपगमापत्तेरित्यर्थ, न हि छत्रादिमाँश्चैत्र केवलचैत्राद् भिन्नो भवतीति भाव । किञ्च बन्धभागिनो विशिष्टत्वे विशेषणवियोगेन विशिष्टनाशान्न मोक्षोपपत्तिरित्यपि बोध्यम् । ८ २।२२। इत्यत्र योगभाष्यव्याख्यायामिति शेष । ९ 'अजो ह्येको जुषमाणोऽनुशेते जहात्येना भुक्तभोगामजोऽन्य' इति बद्धमुक्तजीवभेदप्रतिपादकश्रुतिविरोधाद्, जन्ममरणादिव्यवस्थादर्शनरूपप्रत्यक्षप्रमाणविरोधाच्चेत्यर्थ, आत्मना व्यापकत्वेन सर्व एव आत्मान सर्वत्र सन्निहिता इति विभिन्नदेशत्वाभावेन विभागाप्रतीते, भक्त्या=गौणत्वेनैकत्वव्यवहार इत्यर्थ ।

षभेद इत्याह "अयुगपत्प्रवृत्तेश्च" प्रवृत्तिश्च प्रयत्नलक्षणा यद्यप्यन्तःकरणवर्तिनी तथापि पुरुष उपचर्यते, तथा च तस्मिन्नेकत्र शरीरे प्रयतमाने स एव सर्वशरीरेष्वेक इति सर्वत्र प्रयतेत, ततश्च सर्वाण्येव शरीराणि युगपच्चालयेद्, नानात्वे तु नायं दोष इति,

इतश्च पुरुषभेद इत्याह='त्रैगुण्यविपर्ययाच्चैव' एवकारो भिन्नक्रमः सिद्धम् इत्यस्यानन्तरं द्रष्टव्यः, सिद्धमेव नासिद्ध, त्रयो गुणास्त्रैगुण्य, तस्य विपर्ययः= अन्यथात्वं–केचित् खलु सत्त्वनिकायाः सत्त्वबहुला यथोर्द्ध्वस्रोतसः, केचिद्

---

अवैधर्म्यलक्षणाभेदप्रतिपादनपरत्व तासा श्रुतीनामिति विज्ञानभिक्षु[1] ।

सूत्रकारस्तु "नाद्वैतश्रुतिविरोधो जातिपरत्वाद्[2]" इत्येव वर्णयामास, अत्रत्य तत्त्वमेतद्भूमिकातोऽवसेयम् ।

शरीराणि प्रतिशरीर विभिन्नपुरुषाधिष्ठेयानि अयुगपत्प्रवृत्तिमत्त्वाद् रथादिवद्, इत्याशयेन प्रवृत्तं हेत्वन्तरमवतार्य व्याचष्टे "प्रवृत्तिश्च" इति, तत्र चलनात्मक प्रवृत्तिरूप व्यापार शरीरधर्म, चालनात्मक प्रवर्तनारूप. प्रयत्नश्च चेतनधर्म, तथा च प्रवृत्तेरयौगपद्यदर्शनेन प्रवर्तनारूपप्रयत्नस्यानैक्य प्रयत्नायौगपद्येन च तदाश्रयचेतनभेद इत्यर्थोऽत्राभिप्रेन, तत्र प्रयत्नरूपपरिणामस्य बुद्धिधर्मत्वेनापरिणाम्यात्मधर्मत्वाभावात्कथमन्यधर्मायौगपद्येनात्मभेदानुमानमित्याशङ्कामनूद्यापनुदति "यद्यपि" इत्यादिना ।

'पुरुष उपचर्यते'=उपचारेण व्यवह्रियते, कुतश्चिन्निमित्तादतस्मिंस्तद्व्यवहार उपचार, उपचारनिमित्तश्च स्वस्वामिभावसंबन्ध "यथा विजय पराजयो वा योद्धृषु वर्तमान स्वामिनि 'राज्ञि' व्यपदिश्यते" इत्यादिना योगभाष्ये[3]ऽभिहित, अग्रे च व्यक्त ।

जले कम्पमाने तत्प्रतिबिम्बितचन्द्रकम्पनमिव प्रयतमानाया बुद्धौ तत्प्रतिबिम्बितचेतनोऽपि प्रयतत इवेति यावद,

आत्मैक्येऽयुगपत्प्रवृत्त्यभाव दर्शयन् विपक्षे[4] बाधकमाह "तथा च" इति, तथा च=आत्मैकत्वे च तस्मिन्=आत्मनि एकत्र शरीरे=एकशरीरावच्छेदेन, प्रयतमाने=प्रयत्नं कुर्वाणे सति सर्वत्र=सर्वशरीरावच्छेदेन प्रयतेत=प्रयत्न कुर्वीत, तत्र हेतु 'स एव सर्वशरीरेष्वेक' इति, इति= इति हेतो, चालयेत्=प्रवर्तयेत्,

सिद्धमेव पुरुषबहुत्वमिति शेष, यद्वा एतैर्हेतुभि पुरुषबहुत्वमेव सिद्धं भवति नात्मैक्यमित्यर्थो ज्ञेय ।

'अन्यथात्व'–सात्त्विकादिप्रभेदेनोत्तममध्यमाधमभावरूप प्राणिवैचित्र्यमित्यर्थ, तदेवाह– "केचित्खलु" इति, सत्त्वनिकाया=प्राणिसमूहा, ऊर्द्ध्वस्रोतस=देवादय ।

---

१ ब्रह्ममीमासाभाष्ये विज्ञानामृते प्रथमाध्यायीयद्वितीयसूत्रे । २।२२। इत्यादिसूत्रे योगवार्तिके, अ १ सू १५१ इत्यादिसूत्रे साङ्ख्यप्रवचनभाष्ये चेति बोध्यम् । २ अ १ सू १५४। जातिपरत्वात्=चित्सामान्यमादायैकरूपत्वे तात्पर्यादित्यर्थ । ३ २।१८। अग्रे=६२ इति कारिकाविवरणे । ४ विपक्षे=अयुगपत्प्रवृत्तिमत्त्वमस्तु पुरुषबहुत्व च मा भूदित्येवविधे विपक्ष इत्यर्थ ।

रजोबहुलाः यथा मनुष्याः, केचित्तमोबहुला यथा तिर्यग्योनयः, सोयमीदृशस्त्रैगुण्यविपर्ययः=अन्यथाभावः तेषु सत्त्वनिकायेषु न भवेद् यद्येकः पुरुषः स्याद्, भेदे त्वयमदोष इति ॥ १८ ॥

एव पुरुषबहुत्वं प्रसाध्य विवेकज्ञानोपयोगितया तस्य धर्मानाह—"तस्माच्च विपर्यासाद्" इति

**तस्माच्च विपर्यासात्, सिद्धं साक्षित्वमस्य पुरुषस्य ।**
**कैवल्यं माध्यस्थ्यं, द्रष्टृत्वमकर्तृभावश्च ॥ १९ ॥**

'तस्माच्च' इति च-शब्दः पुरुषस्य बहुत्वेन सह धर्मान्तराणि समुच्चिनोति, विपर्यासादस्माद्—इत्युक्ते त्रैगुण्यविपर्ययाद्—इत्यनन्तरोक्तं संबध्येत, अतस्तन्निरासाय तस्माद्—इत्युक्तम्, अनन्तरोक्तं हि सन्निधानादिदमो विषयो,

---

यद्येक पुरुष स्यात् तर्हि तेषुतेषु सत्वनिकायेष्वन्यथाभावो=वैलक्षण्यं न भवेदित्यन्वय आत्मैक्य उच्चावचप्राणभृत्प्रपञ्चो न भवेदपि त्वेकविध एव स्यादिति भाव, भेदे=पुरुषबहुत्वे तु अयम्=उत्तममध्यमाधमभावः अदोष =दोषविधुरः—सङ्गत इति यावद् ॥ १८ ॥

धर्मान्तराणि=एतदार्योपनिबद्धानि साक्षित्वादीनि ।

'अस्माद्' इत्यनभिधाय 'तस्माद्' इत्यभिहितवत कारिकाकृतस्तात्पर्यमाह "विपर्यासादस्माद्" इति, 'तन्निरासाय'=समनन्तराभिहितस्यासम्बन्धाय, बुद्धिस्थव्यवहिताभिमतपरामर्शाय च तस्मादित्युक्तमित्यर्थ ।

कथमेतदवगम्यते, तत्राह "अनन्तरोक्त हि" इति, "इदमस्तु सन्निकृष्टे, समीपतरवर्तिन्ये तदो रूपम्, अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयाद्" इत्यभियुक्तोक्तेः, सन्निधानात्=सन्निकृष्टत्वरूपार्थबलाद् अनन्तरोक्त वस्तु इदमो विषय =इदशब्दोपस्थाप्य, विप्रकृष्टं=व्यवहित च तद =तच्छब्दस्य प्रतिपाद्यमिति सङ्केत इति अतः दूरस्थ त्रिगुणमित्याद्यत्र परामृश्यत इत्यर्थ ।

अत्रेदं बोध्यम्—अनयार्यया ह्याचार्येण पूर्वाभिहितव्यक्ताव्यक्तधर्मजातत्रिगुणत्वादिविपरीतात्रिगुणत्वादिधर्मवत्त्वेन हेतुना पुरुषस्य कैवल्यसाक्षित्वादिरूपधर्मवत्त्वमिति सिसाधयिषितं, तद् यदि 'अस्माद्' इति पदमत्रोपादीयेत तेन च समनन्तरोक्त 'त्रैगुण्यविपर्ययाद्' इति परामृश्येत तर्हि त्रिगुणत्वविपरीतेनात्रिगुणत्वहेतुना केवल सुखादिशून्यतारूपकैवल्यधर्मवत्त्वमेव पुरुषस्य सिद्धयेत न साक्षित्वादिधर्मवत्त्व, तत्प्रयोजकचेतनत्वादेरत्रालाभाद्, अत उपात्तनिखिलधर्माणा

---

१ एतद्='अस्माद्' इत्युपादानेऽनन्तरोक्तमेव सबध्येतेत्येतदित्यर्थ । २ दूरस्थम्=११ इत्यार्यास्थमित्यर्थ । ३ एतदपि यदा परामृष्टत्रैगुण्यविपर्ययादिति पदेन सहात्रत्यविपर्यासादिति पद 'त्रैगुण्यविपर्ययरूपाद्विपर्यासाद्' इत्येवमन्वीयार्थं क्रियेत तदा लभ्येत, यदि तु त्रैगुण्यविपर्ययात्सकाशाद् यो विपर्यासस्तस्मादित्येवमन्वीयेत तदा तु विपरीतमेवापद्येतेत्यपि ज्ञेयम् । ४ साक्षित्वादिसाधकचेतनत्वादेर्हेतोरलाभादित्यर्थं ।

विप्रकृष्टं च तद् इति विप्रकृष्टं 'त्रिगुणमविवेकि' इत्यादि संबध्यते, तस्मात्= त्रिगुणादेः यो विपर्यासः स पुरुषस्यात्रिगुणत्वं विवेकित्वमविषयत्वमसाधारणत्वं चेतनत्वमप्रसवधर्मित्वं च।

तत्र चेतनत्वेनाविषयत्वेन च साक्षित्वद्रष्टृत्वे दर्शिते, चेतनो हि द्रष्टा भवति नाचेतनः, साक्षी च दर्शितविषयो भवति, यस्मै प्रदर्श्यते विषयः स साक्षी, यथा हि लोकेऽर्थिप्रत्यर्थिनौ विवादविषयं साक्षिणे दर्शयत एवं प्रकृतिरपि स्वचरितं विषय पुरुषाय दर्शयतीति पुरुषः साक्षी, न चाचेतनो विषयो वा शक्यो विषयं दर्शयितुमिति चैतन्यादविषयत्वाच्च भवति साक्षी, अत एव द्रष्टापि भवति,

---

सहेतुकत्वलाभाय 'तस्माद्' इत्युपादाय तेन च व्यवहित 'त्रिगुणमविवेकि' इत्यादि परामृश्य तस्मात्=त्रिगुणादेर्विपरीतादत्रिगुणत्वादेर्हेतो पुरुषस्य साक्षित्वादिक सिद्धमित्यर्थोऽत्र सपादनीय, एतदेवाह—"तस्मात्–त्रिगुणादेर्यो विपर्यास" इति, कीदृक् सै इत्यत्राह "स पुरुषस्यात्रिगुणत्वम्' इत्यादि।

'अप्रसवधर्मित्व च' तस्माद् विपर्यासात्पुरुषस्य साक्षित्वादिक सिद्धमित्यर्थ,

यस्माद्विपर्यासाद् यत् सिद्ध तद्विभज्य दर्शयति "तत्र" इति, दर्शितो विषयो यस्मादसौ दर्शितविषय, तदेवाह "यस्मै प्रदर्श्यत" इति,

एतदेव दृष्टान्तेन स्पष्टयति "यथा हि लोके" इति, अर्थ्यत इत्यर्थ=साध्य सोऽस्यास्तीत्यर्थी=वादी, तत्प्रतिपक्ष० प्रत्यर्थी=प्रतिवादीत्यर्थ,

'एव प्रकृतिरपि'=बुद्धिरूपेण परिणता प्रकृतिरपि स्वचरित=स्वोपगृहीत विषयजात स्वस्मिन् प्रतिबिम्बिताय स्वस्वामिने पुरुषाय समर्पयतीत्यर्थ,

तदुक्त विष्णुपुराणे "गृहीतानिन्द्रियैरर्थानात्मने य प्रयच्छति, अन्त करणरूपाय तस्मै विश्वात्मने नम" इति, घटादाविवाचेतने महदादौ साक्षित्वादेरसम्भवमाह—"न चाचेतन" इति,

"भवति साक्षी" इति, अत्रेदं बोध्य 'साक्षाद् द्रष्टरि सञ्ज्ञायाम्' इति पाणिनिस्मरणात् "साक्षात्सबन्धात्साक्षित्वम्" इति साङ्ख्यसूत्राच्च बुद्धेरेव साक्षी पुरुषस्तया सहाव्यवहितसबन्धाद् न त्वन्येषा, तैस्सह साक्षात्सबन्धाभावादिति,

कथन्तर्ह्यन्येषा भानम्, अत्राह "अत एव" इति, साक्षित्वादेवान्येषां द्रष्टापि भवतीत्यर्थ,

इन्द्रियप्रणालिकया बुद्धौ तत्तदाकारेण परिणतायां पुरुषेण दृश्यायां सत्यां तदारूढा पदार्था अपि दृश्या भवन्तीति तेषा द्रष्टा पुरुष, यदाहुः—"द्रष्टा दृशिमात्र शुद्धोऽपि प्रत्ययानुपश्य"

---

१ अनेन हेतुना साक्षित्वमनेन च हेतुनाऽकर्तृत्वमित्यादिलाभायेत्यर्थ। २ त्रिगुणत्वादे सकाशादित्यर्थ। ३ स=विपर्यास। ४ अर्थिप्रत्यर्थिभ्यामिति शेष। ५ चरितम्= क्रीडित, चेष्टित, चरित्रमित्यर्थ। ६ ।५।२।९१। साक्षाद् इत्यव्ययाद् द्रष्टर्यर्थे इनिप्रत्यय इत्यर्थ। ७ अ १ सू १६१। ८ योगसूत्रकारा इति शेष। ९ २।२०। शुद्धोऽपि=अपरिणाम्यपि दृशिमात्र=चिन्मात्र पुरुष प्रत्ययानुपश्य=बुद्धिवृत्तिमनुपश्यन् सन् द्रष्टा भवतीत्यर्थ।

अत्रैगुण्याच्चास्य कैवल्यम्, आत्यन्तिको दुःखत्रयाभावः कैवल्यं, तच्च तस्य स्वाभाविकादेवात्रैगुण्यात्=सुखदुःखमोहरहितत्वात् सिद्धम्, अत एवात्रैगुण्यान्माध्यस्थ्य, सुखी हि सुखेन तृप्यन् दुःखी हि दुःख द्विषन् मध्यस्थो न भवति तदुभयरहितस्तु 'मध्यस्थ' इति, 'उदासीन' इति चाख्यायते, विवेकित्वाद्, अप्रसवधर्मित्वाच्चाकर्तेति सिद्धम् ॥ १९ ॥

स्यादेतत्, प्रमाणेन कर्तव्यमर्थमवगम्य चेतनोऽहं चिकीर्षन् करोमि इति कृतिचैतन्ययोः सामानाधिकरण्यमनुभवसिद्धं, तदेतस्मिन्मते नावकल्पते—चेतनस्याकर्तृत्वाद् कर्तुश्चाचैतन्याद्, इत्यत आह—"तस्मात्तत्सयोगाद्" इत्यादि—

**तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।**
**गुणकर्तृत्वेऽपि तथा कर्तेव भवत्युदासीनः ॥ २० ॥**

---

"द्रष्टा बुद्धे प्रतिसवेदी पुरुष" इति चेति भाव, तच्च=कैवल्य च, तस्य=पुरुषस्य, स्वाभाविकादेव=तात्त्विकादेव, एतच्चोपरिष्टात्स्पष्टम्[3]।

माध्यस्थ्य=ताटस्थ्येन वर्तमानत्व—सुखादिशून्यत्वेन रागद्वेषराहित्यमिति यावद्, एतदेव विपर्ययप्रदर्शनेन द्रढयति—"सुखी हि" इति, तृप्यन्=तृप्तिं लभमान, सुखे रागं कुर्वाण इति यावत्, तदुभयरहित=रागद्वेषरहित इत्यर्थ,

'उदासीन इति' यद्यपि विवदमानयोरुभयोरपि पक्षपाती हितैषी वा मध्यस्थः, विवदमानयोरुभयोरप्युपेक्षक उदासीन इत्येव तयोर्भेद., अत एव 'सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु' इत्यादौ तयोर्भेदेनोपादान, तथापि "श्रुत्वा युद्धोद्यम राम कुरूणा सह पाण्डवै । तीर्थाभिषेक व्याजेन मध्यस्थ प्रययौ किल' इत्यादावुदासीनेऽपि मध्यस्थपदप्रयोगदर्शनेन रागद्वेषराहित्यमात्र साम्यमादाय तयोरभेदो निर्वाह्य ।

विवेकित्वाद्=महदादिवत्सम्भूयकारित्वाभावादप्रसवधर्मित्वाद्=अपरिणामित्वेनाजनकत्वादकर्तेति सिद्धमित्यर्थ ॥ १९ ॥

'जानाम्यह करोमीदमहम्' इति प्रत्यये द्रष्टृत्वकर्तृत्वयोरेकाधिकरणत्वेनोपलम्भाद् 'अकर्तृभावश्च' इत्यभिधानमसमीचीनमिति शङ्कते—"स्यादेतद्" इत्यादिना,

अवगम्य=ज्ञात्वा, अनेन ज्ञानं दर्शित, 'चिकीर्षन्' इतीच्छा दर्शिता, 'करोमि' इति च कृतिः उक्ता, 'चेतनोहम्' इत्यनेन च तेषामाश्रयोऽभिहित, तथा च ज्ञानेच्छाकृतीनामेकाधिकरणत्वमनुभवसिद्धमित्यत्रायातम्।

---

१ सवेदिन्या बुद्धे प्रतिरूप, अर्थाकाराया बुद्धौ सत्या तत्प्रतिबिम्बितत्वेन तदनुकारीति- योगभाष्यार्थ । २ बुद्धे साक्षात्प्रकाशक पुरुषोऽन्येषान्तु बुद्धिवृत्तिव्यवधानेन प्रकाशक इति तत्त्वम्। ३ उपरिष्टाद्='तस्मान्न बध्यते' ६२ इत्यत्रेत्यर्थ । ४ 'साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते' इति गीताया उत्तरार्द्धम्, अ० ६। श्लो० ९। ५ भा स्क १० अ ७८। ६ तीर्थयात्रा गतवानित्यर्थ । ७ 'द्रष्टृत्वमकर्तृभावश्च' इत्यनेन यदात्मनो द्रष्टृत्वे सत्यकर्तृत्वमुक्त तदसङ्गतमित्यर्थ ।

यतश्चैतन्यकर्तृत्वे भिन्नाधिकरणे युक्तितः सिद्धे स्तः तस्माद् भ्रान्तिरियमित्यर्थः,

भ्रान्तिबीजं तत्संयोगः=तत्सन्निधानम्,

लिङ्गं=महदादिसूक्ष्मपर्यन्तं वक्ष्यति, अतिरोहितार्थमन्यद् ॥ २० ॥

'तत्सयोगाद्' इत्युक्तं, न च भिन्नयोः संयोगोऽपेक्षा विना, न चेयमुप-

---

अस्त्वेव तत किं, तत्राह–"तद्" इति, तद्=एकाधिकरणत्वम्, अस्मिन् मते=बुद्ध्यादिक कर्तृ चेतनश्च पुरुषोऽकर्तेति मते, न अवकल्पते=युज्यते, तत्र हेतु –'चेतनस्य'=पुरुषस्याकर्तृत्वात्, कर्तु=बुद्ध्यादेश्चाचेतनत्वादिति 'तस्माद्' इत्यनेनापेक्षित पूरयति–"यत" इति, चैतन्य=प्रकाशकत्व तच्चात्मधर्म, कर्तृत्व=कृतिमत्त्व तच्च बुद्धिधर्म, इत्येव भिन्नाधिकरणे युक्तित=त्रिगुणत्वात्परिणामित्वाद् बुद्धे कर्तृत्वं, निर्गुणत्वादपरिणामित्वात्पुरुषस्याकर्तृत्व द्रष्टृत्वादिक च, इत्यादिपूर्वाभिहितयुक्तित सिद्धे=साधिते=भवत तस्माद् भ्रान्ति="दृग्दर्शनशक्त्योरेकात्मतेवास्मिता" इति लक्षितास्मिताख्याविवेककृता इय=सामानाधिकरण्यप्रतीतिरित्यर्थ।

किंनिमित्ता पुनरियं भ्रान्ति, अत्राह–"भ्रान्तिबीज तत्सयोग" इति, चेतनस्यासङ्गत्वात्कथ सयोग इत्यत्राह–"तत्सन्निधानम्" इति,

तथा च साङ्ख्यसूत्रम्–"उपरागात्कर्तृत्व चित्सान्निध्याद्" इति,

एव च लिङ्ग=बुद्ध्यादिकमचेतनमपि तत्सयोगात्=चेतनसन्निधानात् चेतनावत्=चेतनमिव भवति, अतो जानामीति प्रत्यय उपपन्न, तथा गुणकर्तृत्वेऽपि=बुद्ध्यादिरूपेण परिणताना गुणाना कृतिमत्त्वेऽपि तथा=बुद्ध्युपरागात्–तत्प्रतिबिम्बितत्वाद् उदासीनोऽपि पुरुष कर्तेव भवति, तेन करोमीत्युपपन्न, इत्यार्यार्थोऽत्र फलित।

यद्यपि जानामीति प्रत्ययस्यात्माधिकरणत्व, करोमीति प्रत्ययस्य च बुद्ध्यधिकरणत्व युक्त तथापि धर्मिणोर्विवेकाग्रहात् तद्धर्मयोरपि साङ्कर्यात्कृतिचैतन्ययोस्सामानाधिकरण्य भातीति तत्त्वम्,

अतिरोहितार्थं=स्पष्टार्थम् ॥ २० ॥

'भिन्नयो'=चेतनाचेतनयोरात्मप्रधानयो, अपेक्षा=परस्पराकाङ्क्षाम्, अन्योन्यानुरागो वाऽपेक्षा, इयम्=अपेक्षा, यत एवम् इति=अत अपेक्षाहेतुमुपकारमाहेति–यद्यपि "तस्य हेतु

---

१ एव कृतिचेतनत्वयोरेकाधिकरणत्वम्। २ दृक्शक्ति पुरुष, दर्शनशक्ति=बुद्धि तयोर्द्रष्टृदृश्ययोरविद्यापादिता यैकरूपतेव सास्मितेति योगसूत्रार्थ। पा० २ सू० ६। ३ ४–इत्यार्ययेति शेष, 'भ्रान्तिबीजम्' इति पाठात्पूर्वमय पाठो यद्यप्युपलभ्यते तथापि योग्यत्वाद्विपरिवर्तित, मा भूदत्र प्रत्यन्तरायो, न ह्येषा श्रुतिरिति। ४ अ० १ सू० १६४ अत्र यथायोग्यमन्वय, पुरुषस्य यत्कर्तृत्व तद् बुद्ध्युपरागाद्, बुद्धेश्च या चित्ता सा पुरुषसान्निध्यादित्यर्थ। ५ धर्मिणो=बुद्धिपुरुषयो। ६ धर्मयो=कृतिचैतन्ययो। ७ यथाऽन्ययसो परस्पर सयोगविशेषात्परस्परधर्मारोपस्तथा बुद्धिपुरुषयोरपीति भाव। ८ २।२४। तस्य=बुद्धिपुरुषसयोगस्य।

कार्योपकारकभावं विना, इत्यपेक्षाहेतुमुपकारमाह—"पुरुषस्य दर्शनार्थम्" इत्यादि—

पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥ २१ ॥

'प्रधानस्य' इति कर्मणि षष्ठी, प्रधानस्य सर्वकारणस्य यद् दर्शनं पुरुषेण तदर्थं, तदनेन भोग्यता प्रधानस्य दर्शिता, ततश्च भोग्यं प्रधानं भोक्तारमन्तरेण न संभवतीति युक्ताऽस्य भोक्त्रपेक्षा ।

पुरुषस्यापेक्षा दर्शयति—'पुरुषस्य कैवल्यार्थं'—तथाहि—प्रधानेन सम्भिन्नः

---

रविद्या'' इति योगसूत्रेणानादिविपर्ययज्ञानवासनैव सयोगनिदानमभिहित तथाप्यवान्तरं सयोग प्रयोजक परस्परोपकारमाहेत्यर्थ ।

उभयो=पुरुषस्य प्रधानस्य च य. संयोग स दर्शनार्थं कैवल्यार्थं च=प्रधानेन स्वदर्शनार्थं=सुखाद्यात्मकस्वस्वरूपानुभवरूपभोगार्थं पुरुषोऽपेक्ष्यते, पुरुषेण च स्वकैवल्यार्थं=कैवल्यकारणविवेकज्ञानरूपप्रकृतिपरिणामार्थ प्रधानमपेक्ष्यते, तत्र दृष्टान्त—'पङ्ग्वन्धवद्' यथा गतिशक्तिविहीनेन पङ्गुनाऽभीष्टदेशप्राप्तये गतिशक्तिमानन्धोऽपेक्ष्यते दर्शनशक्तिहीनेन चान्धेन मार्गप्रदर्शनार्थं दर्शनशक्तिमान् पङ्गुरपेक्ष्यते तथेति कारिकार्थ ।

अमुमेवार्थं विभज्यान्वयाख्यानेन दर्शयति—"प्रधानस्येति कर्मणि षष्ठी" इति, 'उभयप्राप्तौ कर्मणि' इति सूत्रेणेत्यर्थ ।

किङ्क्रियापेक्षयेद कर्म इत्याकाङ्क्षाया व्यवहितामपि दर्शनक्रिया योग्यतया सबध्नाति—"प्रधानस्य—यद् दर्शनम्" इति,

कर्तृकर्मणो सत्त्व एव कर्मणि षष्ठीप्रवृत्ते. कर्तृपदमध्याहरमाणः केन दर्शनमित्याकाङ्क्षित पूरयति—"पुरुषेण" इति, तदर्थं=स्वानुभवार्थं प्रधानेन पुरुषोऽपेक्ष्यत इत्यर्थः, तदेवाह—"तदनेन" इति, तेनानेन पुरुषकर्तृकदर्शनकर्मविषयत्वकथनेनेत्यर्थ,

अस्य=प्रधानस्य भोक्त्रपेक्षायुक्तेति—सुखाद्यनुभवो हि भोग, न च सुखाद्यात्मक प्रधान स्वमनुभवितुमल स्वात्मनि क्रियाविरोधादचेतनत्वाच्चात स्वानुभवार्थं युक्तास्य चेतनापेक्षा 'चिदवसानो भोग' इति सूत्रादित्यर्थ,

'पुरुषस्यापेक्षाम्'पुरुषेण किमर्थं प्रधानमपेक्ष्यत इत्याकाङ्क्षाया पुरुषस्य प्रधानापेक्षा दर्शयतीत्यर्थ,

प्रधानेन सभिन्न=प्रधानादात्मनो विविक्ततामबुध्यमान,

---

१ अत्र पङ्गूपमो निष्क्रिय पुरुष, अन्धोपम चाचेतन प्रधानमिति बोध्यम्, यथाऽन्धस्कन्धारूढेन पङ्गुनाऽन्धो मार्गे प्रवर्त्यते तथा प्रकृत्यारूढेन पुरुषेण प्रधान सर्गे प्रवर्त्यते यथा चाऽन्धेन पङ्गु स्वाभीष्टस्थान प्राप्यते तथा प्रधानेन पुरुष कैवल्य प्राप्यते इत्यर्थोऽप्यत्र बोध्य ।
२ अ० १ सू० १०४। चिति=पुरुषे अवसान=पर्यवसान-निष्ठा यस्य स चिदवसानो भोगो भवतीत्यर्थ ।

पुरुषस्तद्गतं दुःखत्रयं स्वात्मन्यभिमन्यमानः कैवल्यं प्रार्थयते, तच्च सत्त्वपुरुषान्यताख्यातिनिबन्धनं, न च सत्त्वपुरुषान्यताख्यातिः प्रधानमन्तरेणेति कैवल्यार्थं पुरुषः प्रधानमपेक्षते,

अनादित्वाच्च संयोगपरम्पराया भोगाय संयुक्तोऽपि कैवल्याय पुनः संयुज्यत इति युक्तम् ।

ननु भवत्वनयोः संयोगो, महदादिसर्गस्तु कुत, इत्यत आह–"तत्कृतः सर्गः"–संयोगो हि न महदादिसर्गमन्तरेण भोगाय कैवल्याय च पर्याप्त इति संयोग एव भोगापवर्गार्थं सर्गं करोतीत्यर्थः ॥ २१ ॥

सर्गक्रममाह–"प्रकृतेर्महान्" इत्यादिना–

प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः ।
तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ॥ २२ ॥

प्रकृतिः=अव्यक्तं, महदहङ्कारौ वक्ष्यमाणलक्षणौ, एकादशेन्द्रियाणि वक्ष्यमाणानि, तन्मात्राणि च पञ्च, सोय षोडशसङ्ख्यापरिमितो गणः षोडशकः,

---

तच्च=कैवल्य च, सत्त्वपुरुषान्यताख्यातिनिबन्धन=प्रकृत्यवधिकपुरुषान्यताप्रकारकज्ञाननिदानमित्यर्थ ,

'प्रधानमन्तरेण' बुद्धिरूपेण परिणतप्रधानस्यैव परिणामो विवेकज्ञानमिति प्रधानं विना न संभवतीत्यर्थ ।

ननु भोगाय चेत् सयुक्त पुरुष किमिति कैवल्याय पुन सयुज्यते, तत्राह–'अनादित्वाद्' इति, अविच्छिन्नत्वादित्यर्थ ,

अनयो =प्रधानपुरुषयो , तत्कृत =द्रष्टृदृश्यसयोगकृत सर्ग =भोगापवर्गद्वारभूतो महदादिससार , तदुक्त "द्रष्टृदृश्ययो सयोगो हेयहेतु " इति ॥ २१ ॥

'प्रकृतेर्महान्' इत्यत्र जायत इति शेष ।

'षोडशक' इति पदं व्याख्यातु तदवान्तरसङ्ख्यामाह–"एकादशेन्द्रियाणि" इति, तन्मात्राणि=शब्दतन्मात्रादिपदप्रतिपाद्यानि शब्दादिगुणकान्याकाशादीनि सूक्ष्मद्रव्याणि पञ्चेत्यर्थ, एतच्चाधस्तादावेदितमुपपादयिष्यते च ।

षोडश परिमाणमस्येत्यर्थे कनि षोडशक इति साधुरित्यभिप्रेत्याह–"सोय षोडशसङ्ख्यापरिमित" इति, सोय षोडशक तस्माद्=अहङ्काराज्जायत इत्यर्थ ।

---

१ २३, २४ इत्यनयोरार्ययोरित्यर्थ । २ सत्त्व=प्रधानम् । ३ जडाया परिणामिन्या प्रकृते सकाशाद्भिन्नोऽह चेतनोऽपरिणामीत्याकारकज्ञानमेव निदान=मुख्य कारण यस्यैवविधमित्यर्थ । ४ यो० पा०२। सू० १७। हेयहेतु =ससारकारणमित्यर्थ । ५ २६, २७–इत्यनयोरार्ययोर्वक्ष्यमाणानि । ६ १५ इति कारिकाव्याख्याने, ३८ इति कारिकायामुपपादयिष्यते चेत्यर्थ । ७ 'सङ्ख्याया अतिशदन्ताया कन्' इति प्रस्तावे 'तदस्य परिमाणम्' (५।१।५७) इत्यनेन कन्प्रत्यय इत्यर्थ ।

तस्मादपि षोडशकाद् अपकृष्टेभ्यः पञ्चभ्यस्तन्मात्रेभ्यः पञ्च भूतानि आकाशादीनि ।

तत्र शब्दतन्मात्रादाकाशं शब्दगुणं, शब्दतन्मात्रसहितात्स्पर्शतन्मात्राद्वायुः शब्दस्पर्शगुणः, शब्दस्पर्शतन्मात्रसहिताद् रूपतन्मात्रात् तेजः शब्दस्पर्शरूपगुण, शब्दस्पर्शरूपतन्मात्रसहिताद् रसतन्मात्रादापः शब्दस्पर्शरूपरसगुणाः, शब्दस्पर्शरूपरसतन्मात्रसहिताद् गन्धतन्मात्राच्छब्दस्पर्शरूपरसगन्धगुणा पृथिवी जायत इत्यर्थः ।। २२ ।।

---

यत्तु गुण[1]पर्वसूत्रे योगभाष्ये तन्मात्राणा महत्तत्त्वकार्यत्वमुक्त तत्तु महत्तत्त्वावेशेनैवाहङ्कारस्य कार्योत्पादक्षमत्वाद् महत्तत्त्वमेवाहङ्कारद्वारा तन्मात्रकारणमित्यभिप्रायेण न तु साक्षादेव महत्तत्त्व तन्मात्रकारणमिति मत्वा, "सूक्ष्मविषयत्वं चालिङ्गपर्यवसा[2]नम्" इति सूत्रे स्वयमेवं[3] तन्मात्राणामहङ्कारकार्यत्वाभिधानाद् "अक्षरान्महद् महतो वै अहङ्कारस्तस्मादेवाहङ्कारात्पञ्च तन्मात्रा[4]णि" "प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्कारात्पञ्च तन्मा[5]त्राणि" इति श्रुतिसूत्रयो स्पष्टमहङ्कारकारणकत्वस्य तन्मात्राणामाम्नानाच्चेति ।

एवं चागमपराहतत्वाद् तन्मात्राणि बुद्धिकारणकानि अविशेषत्वादहङ्कारवद् इत्यनुमान न मा[6]नमिति ध्येयम् ।

'षोडशकाद्' इत्यस्य 'पञ्चभ्य' इत्यनेन सामानाधिकरण्येनान्वयासम्भवादपेक्षित पदं पूरयति–"अपकृष्टेभ्य" इति, षोडशकान्निष्कृष्टेभ्य –षोडशकमध्यात्पृथक्कृतेभ्य इत्य[7]र्थ., कस्मात् तन्मात्रात्किंभूतं जातमित्यत्राह–"तत्र शब्दतन्मात्रादाकाशम्" इति,

अत्र "एकद्वित्रिचतुष्पञ्चल[8]क्षणा शब्दादय" इति योगभाष्यात्–सूक्ष्माकाशाख्यशब्दतन्मात्र शब्दमात्रधर्मकं, सूक्ष्मवाय्वाख्यस्पर्शतन्मात्र च शब्दस्पर्शधर्मक, सूक्ष्मतेजोऽभिधेयरूपतन्मात्र च शब्दस्पर्शरूपधर्मक, सूक्ष्मजलाख्यरसतन्मात्र च शब्दस्पर्शरूपरसधर्मक, सूक्ष्मपृथिव्याख्यगन्धतन्मात्र च शब्दस्पर्शरूपरसगन्धधर्मकमित्यवसेयम् । एव च शब्दतन्मात्राद्=शब्दगुणकात्सूक्ष्मादाकाशात् शब्दगुणक स्थूलमाकाश जायते, शब्दतन्मात्रसहितात्स्पर्शतन्मात्राद्=शब्दस्पर्शगुणकात्सूक्ष्माद् वायो शब्दस्पर्शगुणक स्थूलो वायुर्जायते इत्यादिरर्थोऽत्राभिप्रेतो बोध्य २२।

---

१ पा० २ सू० १९ । २ पा० १ सू० ४५ । ३ योगभाष्यकारैरित्यर्थ । ४ गो० ता० उ० ५३ । ५ अ० १ सू० ६१ । ६ 'मेरुः पाषाणमय पर्वतत्वाद् विन्ध्यवद्' इत्यनुमानस्य यथा मेरु काञ्चनमय इत्यागमबाधितत्वादमानत्व तद्वदित्यर्थ , इदञ्चानुमान गुणपर्वसूत्रभाष्यव्याख्याया मिश्रैरूहितमिति ज्ञेयम् । ७ षोडशकादिति ल्यब्लोपे पञ्चमीत्याश्रित्य षोडशक प्राप्य स्थितेभ्य पञ्चभ्य इत्यर्थं इति साङ्ख्यचन्द्रिकाकार । ८ लक्ष्यतेऽनेनेति लक्षण धर्म , तन्मात्राणा द्रव्यत्वलाभाय लक्षणपद, तथा चोत्तरोत्तरतन्मात्रेषु पूर्वपूर्वतन्मात्राण। हेतुत्वाच्छब्दतन्मात्र शब्दमात्रधर्मक तत्कार्यतया स्पर्शतन्मात्र शब्दस्पर्शोभयधर्मकम्, एवक्रमेणैकैकधर्मवृद्धिरित्यर्थ इति योगवार्तिककार –पा० २ सू० १९ ।

अव्यक्तं सामान्यतो लक्षितं "तद्विपरीतम्" इत्यनेन, विशेषतश्च "सत्त्वं लघु प्रकाशकम्" इत्यादिना, व्यक्तमपि सामान्यतो लक्षितं "हेतुमद्" इत्यादिना, सम्प्रति विवेकज्ञानोपयोगितया व्यक्तविशेष बुद्धिं लक्षयति—"अध्यवसाय" इति—

**अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम्।**
**सात्त्विकमेतद् रूपं, तामसमस्माद् विपर्यस्तम्॥ २३॥**

"अध्यवसायो बुद्धिः" क्रियाक्रियावतोरभेदविवक्षया, सर्वो व्यवहर्ता आलोच्य मत्त्वाहमत्राधिकृत इत्यभिमत्य कर्तव्यमेतन्मयेत्यध्यवस्यति, ततश्च प्रवर्तते इति लोकप्रसिद्धं, तत्र योऽयं कर्तव्यमिति विनिश्चयश्चितिसन्निधानादापन्नचैतन्याया बुद्धेः सोऽध्यवसायो बुद्धेरसाधारणो व्यापारः, तदभेदा बुद्धिः, स च बुद्धेर्लक्षणं—समानासमानजातीयव्यवच्छेदकत्वात्,

तदेवं बुद्धिं लक्षयित्वा विवेकज्ञानोपयोगिनस्तस्याधर्मान् सात्त्विकतामसानाह—'धर्मो ज्ञानं विराग ऐश्वर्यं सात्त्विकमेतद् रूपं, तामसमस्माद्विपर्यस्तम्' इति।

धर्मोऽभ्युदयनिःश्रेयसहेतुः, तत्र यागदानाद्यनुष्ठानजनितो धर्मोऽभ्युद-

---

'अध्यवसायो बुद्धि' इति। ननु गन्ध पृथिवीति वा लक्षणमिद न ह्यध्यवसाय एव बुद्धिरपि त्वध्यवसायवती, तत्राह—"क्रियाक्रियावतो" इति, व्यापारव्यापारिणो—धर्मधर्मिणोरिति यावद्, इन्द्रियान्तरव्यापारेभ्यो विविच्य बुद्धेर्व्यापार निरूपयितु प्रवृत्तौ तावद् व्यापाराणां क्रममाह—"सर्वो व्यवहर्ता" इति।

हानोपादानादिव्यवहारकर्ताऽखिलो नर पूर्वम् आलोच्य=ज्ञानेन्द्रियव्यापारैर्वस्तु गोचरीकृत्य पुनश्च मत्वा=इदमेव नैव वेति मनसा गुणदोषौ विचार्य पुन शक्तोऽह खल्वेतन्निष्पादन इत्येवम् अभिमत्य=अहङ्कारव्यापारगोचरीकृत्य कर्तव्यमिदमिति अध्यवस्यति=निश्चिनोति, ततश्च= एवमालोचनमननाभिमानावधारणादनन्तर च प्रवर्तत इत्यर्थ।

कथ जडाया बुद्धेर्निश्चय इत्यत्राह—"चितिसन्निधानाद्" इति,

'तदभेदा'=तस्मादध्यवसायरूपाद् व्यापारादभेदो यस्यास्सा तदभेदा धर्मधर्मिणोस्तादात्म्यात् 'स च'=निश्चयाख्यव्यापारश्च समानजातीयेभ्यो मनआदीन्द्रियान्तरेभ्योऽसमानजातीयेभ्यश्च पञ्चतन्मात्रादिभ्यो बुद्धेर्व्यावर्तकत्वात् लक्षण बुद्धेरित्यर्थ,

"यतोऽभ्युदयनि श्रेयससिद्धि स धर्म" इति काणादसूत्रमनुसृत्य धर्मस्य लक्षणमाह—"धर्म" इति, तत्र स्वाराज्यसाम्राज्याद्यैश्वर्यविशेषोऽभ्युदय, निश्चित श्रेय कल्याणं च नि श्रेयस=कैवल्यम्,

---

१ का० १०। २ का० १३। ३ का० १०। ४ इदम्=अध्यवसायो बुद्धिरिति लक्षणवाक्यम्। ५ यद्वाऽनियतविषयत्वेन सर्वविषयत्वेन वा समानजातीयौ मनोऽहङ्कारौ, नियतैकैकविषयत्वेनासमानजातीयाश्चक्षुरादय इत्यर्थोऽत्र ज्ञेय। ६ अ० १ आ० १ सू० २।

यहेतुः, अष्टाङ्गयोगानुष्ठानजनितश्च निःश्रेयसहेतुः, गुणपुरुषान्यताख्यातिर्ज्ञानं, विरागः=वैराग्यं–रागाभावः,

तस्य यतमानसञ्ज्ञा, व्यतिरेकसञ्ज्ञा, एकेन्द्रियसञ्ज्ञा, वशीकारसञ्ज्ञा, इति चतस्रः सञ्ज्ञाः।

रागादयः कषायाश्चित्तवर्तिनस्तैरिन्द्रियाणि यथास्वं विषयेषु प्रवर्त्त्यन्ते तन्माऽत्र प्रवर्तिषत विषयेष्विन्द्रियाणीति तत्परिपाचनायारम्भः प्रयत्नो यतमानसञ्ज्ञा,

परिपाचने चानुष्ठीयमाने केचित्कषायाः पक्काः, पक्ष्यन्ते च केचित्, तत्रैवं पूर्वापरीभावे सति पक्ष्यमाणेभ्यः कषायेभ्यः पक्कानां व्यतिरेकेणावधारणं व्यतिरेकसञ्ज्ञा।

इन्द्रियप्रवर्तनासमर्थतया पक्कानामौत्सुक्यमात्रेण मनसि व्यवस्थानमेकेन्द्रि-

---

जनितश्च=यमनियमादिजनितोऽशुक्लाकृष्णाख्यो धर्मविशेषश्चेत्यर्थ,

वैराग्यस्य तान्त्रिकीस्सञ्ज्ञा आह–"तस्य" इति, वैराग्यस्येत्यर्थ,

तत्राद्या सञ्ज्ञा लक्षयति–"रागादय कषाया" इति, कषाया=मला, माञ्जिष्ठादिकषाय वच्चित्तरञ्जकत्वाद् रागादय कषाया इत्युपचर्यन्ते, चित्तगता ये रागादयो मलास्तै यथास्वं= स्वेषुस्वेषु विषयेष्विन्द्रियाणि प्रवर्त्यन्ते "प्रवर्तनालक्षणा दोषा" इत्युक्ते, तद्–यथा स्यात् तथा अत्र विषयेष्विन्द्रियाणि मा प्रवर्तिषत=प्रवृत्तानि मा कारिषत तै, रागादय इन्द्रियाणि मा प्रवर्तयन्त्विति यावद्, इति=इत्यालोच्य तत्परिपाचनाय=रागादिमलक्षालनाय य मैत्र्यादिभावनानुष्ठानरूपो यत्न स यतमानसञ्ज्ञेत्यर्थ।

केचित्तु–'अत्र जगति किं सार किमसार वेति गुरुशास्त्राभ्या ज्ञास्यामीत्युद्योगो यतमानसञ्ज्ञा वैराग्यम्' इत्याहु,

द्वितीया सञ्ज्ञामाह–"परिपाचने" इति, रागादिमलप्रक्षालनाय मैत्र्यादिभावनायामनुष्ठीयमानाया सत्यां केचिन्मला पक्का=उपशान्ता भवन्ति, केचिच्च पक्ष्यन्ते=निवर्तिष्यन्ते, तत्रैव सति एत उपशमिता, एते च उपशमयितव्या इति चिकित्सकवद् यद्विवेचन, विवेचनोत्तर चावशिष्टानामुपशमाय यत्नानुष्ठान तद् व्यतिरेकवैराग्यमित्यर्थ।

तृतीयामाह–"इन्द्रिय" इति, पक्काना=तनूकृताना रागादीना बाह्यविषयेष्विन्द्रियाणां प्रवर्तनेऽसमर्थतया यद्=उत्कण्ठामात्रेण तृष्णारूपेण मनस्यवस्थान तदेकेन्द्रियवैराग्यमित्यर्थ।

---

१ पा० ४ सू० ७ इति योगसूत्र निरीक्ष्यम्। २ यथास्वम् इति वीप्सायामव्ययीभाव इत्याशयेनाह–"स्वेषुस्वेषु" इति, स्वकीयस्वकीयविषयेष्वित्यर्थ। ३ अ० १ आ० १ सू० १८। प्रवर्तना=प्रवृत्तिहेतुत्वमेव लक्षण येषा ते दोषा=रागादय इति न्यायसूत्रार्थ। ४ तै=रागादिकषायैरित्यर्थ। ५ पा० १ सू० ३३ इति योगसूत्र द्रष्टव्यम्। ६ केचिद्=अ० ६ श्लो० ३५ इत्यत्र गीताटीकाया मधुसूदनसरस्वतीस्वामिन।

यसञ्ज्ञा, औत्सुक्यमात्रस्यापि निवृत्तिः उपस्थितेष्वपि दृष्टानुश्रविकविषयेषु या सञ्ज्ञात्रयात्पराचीना सा वशीकारसञ्ज्ञा, यामत्रभवान् पतञ्जलिर्वर्णयाञ्चकार—"दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसञ्ज्ञा वैराग्यम्" इति, सोऽयं बुद्धिधर्मो विराग इति ।

ऐश्वर्यमपि बुद्धिधर्मः, यतोऽणिमादिप्रादुर्भावः। तत्राणिमा=अणुभावः, यतः शिलामपि प्रविशति, लघिमा=लघुभावः, यतः सूर्यमरीचीनालम्ब्य सूर्यलोकं याति, महिमा=महतो भावः, यतो महान् संभवति, प्राप्तिः=अङ्गुल्यग्रेण स्पृशति चन्द्रमसम्, प्राकाम्यम्=इच्छानभिघातः, यतो भूमावुन्मज्जति, निमज्जति च, यथोदके, वशित्वं=भूतभौतिकं वशीभवत्यवश्यम्, ईशित्वम्=भूतभौतिकानां प्रभवव्यूहव्ययानामीष्टे, यत्र कामावसायित्वं=सत्यसङ्कल्पता, यथास्य सङ्कल्पो

तुरीयां सञ्ज्ञामाह—"औत्सुक्यमात्रस्यापि" इति—दृष्टा =स्रक्चन्दनस्त्रियोऽन्नपानादयो विषया, आनुश्रविका =वेदादधिगताः स्वर्गादयो विषया, तेषूपस्थितेष्वपि या औत्सुक्यमात्रस्यापि=तृष्णाया अपि निवृत्तिस्तेषूपेक्षा बुद्धि सा सञ्ज्ञात्रयात् पराचीना=पश्चाद् भाविनी वशीकारसञ्ज्ञेत्यर्थ ।

तुरीयाया सञ्ज्ञायां योगसूत्र प्रमाणयति—"यामत्रभवान् पतञ्जलि" इति, 'अत्रभवान्' इति पूजार्थ प्रयोग, तथैव सङ्केताद्, लौकिकालौकिकविषयजाते विगततृष्णस्य योगिचित्तस्य याऽनाभोगात्मिका स्थिति सा वशीकारसञ्ज्ञावैराग्यम् इति योगसूत्रार्थ ।

यत =यस्माद्, धर्माद्, अणिमादि—इत्यादिपदग्राह्याण्यैश्वर्याणि सङ्कलयन् सन्नणिमादिपदार्थमाह—"तत्राणिमा" इति, अणुभाव =गुरुतरकलेवरोऽप्यणुर्भवतीत्यर्थ 'महान्'—तनुपरिमाणोऽपि नगनागनगरादिप्रमाणो भवतीत्यर्थ, प्राप्ति =सर्वेषां भावानां सन्निधानम्, अत एव भूमिष्ठोऽपि चन्द्रमसं स्पृशति ।

इच्छानभिघात =नास्य योगिन स्वरूपं काठिन्यादिभिर्भूम्यादिधर्मैरभिहन्यतेऽत एव जलमिव भूमिमुद्भिद्योत्तिष्ठति जल इव च भूमौ निमज्जति=प्रविशतीति ।

अवश्यम्=इतरेषामवश्यमपि भूतभौतिकमस्य वशीभवतीत्यर्थ 'भूतभौतिकेषु[3] वशी भवत्यवश्यश्चान्येषाम्' इति पाठो वाऽत्र बोध्य, योगभाष्ये तथादर्शनाद्,

प्रभवव्यूहव्ययानाम्=प्रभव =उत्पाद, व्यूह =यथावदवस्थापनं, व्यय =नाश तेषामीष्टे= तन्मात्रादिद्वारा तेषां भूतानामुत्पादादौ समर्थो भवतीत्यर्थ ।

यत्र कामावसायित्वशब्दस्तान्त्रिक्या परिभाषया सत्यसङ्कल्पत्वार्थक, यद् यदर्थतया सङ्कल्पयति तत् तस्मै प्रयोजनाय कल्पते विषमप्यमृतकार्ये सङ्कल्प्य भोजयन् जीवयतीत्यर्थ ।

१ हेमचन्द्रकोशे तथाभिधानादित्यर्थ । २ पा० १ सू० १६। ३ भूतानि=पृथिव्यादीनि भौतिकानि=गोघटादीनि तेषु वशी=स्वतन्त्रो भवति, तेषान्त्ववश्य, तेन यानि यथावस्थापयति तानि तथावतिष्ठन्त इत्यर्थ । ४ पा० ३ सू० ४५।

भवति भूतेषु तथैव भूतानि भवन्ति, अन्येषा मनुष्याणां निश्चेतव्यमनुविधीयन्ते, योगिनस्तु निश्चेतव्याः पदार्था निश्चयम्, इति चत्वारः साित्त्वका बुद्धिधर्माः।

तामसास्तु तद्विपरीता बुद्धिधर्माः=अधर्माज्ञानावैराग्यानैश्वर्याभिधानाश्चत्वार इत्यर्थः ॥ २३ ॥

अहङ्कारस्य लक्षणमाह-"अभिमानोऽहङ्कार" इति,

**अभिमानोऽहङ्कारः, तस्माद् द्विविधः प्रवर्तते सर्गः ।**
**एकादशकश्च गणः, तन्मात्रपञ्चकश्चैव ॥ २४ ॥**

अभिमानोऽहङ्कारः=यत् खल्वालोचितं मतं च तत्राहमधिकृतः-शक्तः खल्वहमत्र-मदर्था एवामी विषयाः-मत्तो नान्योऽत्राधिकृतः कश्चिदस्ति-अतोऽहमस्मि इति योऽभिमानः सोऽसाधारणव्यापारोऽहङ्कारः, तमुपजीव्य हि बुद्धिरध्यवस्यति-'कर्तव्यमेतन्मया' इति

तस्य कार्यभेदमाह-"तस्माद् द्विविधः प्रवर्तते-सर्गः" प्रकारद्वयमाह-"एकादशकश्च गणः"=इन्द्रियाख्यः, "तन्मात्रपञ्चकश्चैव" द्विविध एव सर्गोऽहङ्कारान्न त्वन्य इत्येवकारेणावधारयति ॥ २४ ॥

---

कथमेतद्, इत्यत्राह"अन्येषाम्" इति, अयोगिनां निश्चया=ज्ञानानि निश्चेतव्य=ज्ञेय पदार्थम् अनुविधीयन्ते=अनुसृतानि भवन्ति-यादृश ज्ञेय तादृगेव ज्ञान, तादृगेव तेन कार्यमिति यावद्, योगिनस्तु निश्चेतव्या=ज्ञेया पदार्था. निश्चयमनुविधीयन्ते=ज्ञानानुसारिणो भवन्ति, यथा ज्ञातु कर्तुं वेच्छन्ति तथैव ज्ञेय भवतीत्यर्थ ।

तद्विपरीता धर्मादिविपरीता, तानेवाह"अधर्माज्ञानावै" इत्यादिना, तत्राधर्मो ब्रह्मवधादिजन्यो नरकादिदु खहेतु, अज्ञान चानित्याशुचिदु खानात्मसु, नित्याशुचित्वदु खात्मत्वनित्यशुचिसुखात्मत्वरूप विपर्ययज्ञानम्, अवैराग्य च विषयभोगतृष्णा, अनैश्वर्यं च प्रतिहतेच्छत्वमित्यर्थ ॥ २३ ॥

यद्=वस्तु, कृत्य वा आलोचित=बाह्येन्द्रियैरीक्षित, मत च मनसा तत्र=तस्मिन् कृत्येऽहमधिकृत अस्यैव विवरण "शक्त" इत्यादिकम् ।

"अतोऽहमस्मि"=अत्राहमधिकृतोऽस्मीत्यर्थ ।

"असाधारणव्यापार[3]" इति, व्यापारव्यापारिणोरभेदविवक्षया, तमुपजीव्य अहङ्कारमाश्रित्य ।

अहमिति प्रत्यय क्रियतेऽनेनेत्यहङ्कार "अहङ्करोतीत्यहङ्कार कुम्भकारवद्" इति विज्ञानभिक्षु, स्पष्टार्थमन्यद् ॥ २४ ॥

---

१ एतद्=पदार्थस्वभाववैपरीत्यम् । २ पा० २ सू० ५ इत्यत्रत्य योगभाष्य निरीक्ष्यम् । ३ 'असाधारणव्यापारत्वाद्' इत्यपि क्वाचित्क पाठ । ४ करणे घञिति भाव, अमरटीकाया भरतस्तु अहमित्यव्यय, तस्य करणम्, अहमिति किरत्यत्रेति वाहङ्कार, करोते किरतेर्वा घञ् ।

स्यादेतद्—अहङ्कारादेकरूपात्कारणात्कथ जडप्रकाशकौ गणौ विलक्षणौ भवतः, इत्यत आह—"सात्त्विक" इत्यादि,

सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्काराद्।
भूतादेस्तन्मात्रः, स तामसस्तैजसादुभयम् ॥ २५ ॥

प्रकाशलाघवाभ्यामेकादशक इन्द्रियगणः सात्त्विको वैकृतात्=सात्त्विकादहङ्कारात्प्रवर्तते, भूतादेस्तु=अहङ्कारात्तामसात्तु तन्मात्रो गणः प्रवर्तते, कस्माद् यतः स[1] तामसः.

एतदुक्तं भवति, यद्यप्येकोऽहङ्कारस्तथापि गुणभेदोद्भवाभिभवाभ्या भिन्नं कार्य करोतीति,

ननु यदि सत्त्वतमोभ्यामेव सर्वं कार्य जन्यते तदा कृतमकिञ्चित्करेण रजसा, इत्यत आह"तैजसादुभय" तैजसाद्=राजसाद् उभय=गणद्वयं भवति,

यद्यपि रजसो न कार्यान्तरमस्ति तथापि सत्त्वतमसी स्वयमक्रिये समर्थे अपि न स्वस्वकार्य कुरुतः, रजस्तु चलतया ते[2] यदा चालयति तदा स्वस्वकार्यं कुरुत इति, तदुभयस्मिन्नपि कार्ये सत्त्वतमसोः क्रियोत्पादनद्वारेणास्ति रजसः कारणत्वमिति न व्यर्थ रज इति ॥ २५ ॥

जडो गण =पञ्चतन्मात्रक, प्रकाशकश्च गण =एकादशक इन्द्रियाख्य ।

"सत्त्व लघु प्रकाशकम्[3]" इत्युक्ते प्रकाशलघुत्वाश्रयत्वादिन्द्रियगण सात्त्विक इत्याह—"प्रकाशलाघवाभ्याम्" इति।

प्रकृततन्त्रपरिभाषया वैकृत इति सात्त्विकाहङ्कारस्य सञ्ज्ञा, तैजस इति च राजसाहङ्कारस्य भूतादि इति च तामसाहङ्कारस्य, इत्यभिप्रेत्याह—"वैकृतात्सात्त्विकाद्" इति।

तन्मात्राणि सन्त्यस्मिन् गण इति 'तन्मात्रो गण' अर्शआद्यच्, 'स्वयमक्रिये' यतोऽत समर्थे अपीत्यर्थ, एतच्च पुरस्ताद् व्यक्तम्, "कुरुत इति" इति=यत तत्=तस्माद्, उभयस्मिन्=इन्द्रियतन्मात्ररूप इत्यर्थ ।

विज्ञानभिक्षुस्तु पुराणेषु[4], 'सात्त्विकाहङ्कारद् इन्द्रियाधिष्ठातारो देवा मनश्च जात, राजसाद् दशेन्द्रियाणि जातानि, तामसाच्च तन्मात्राणि' इति प्रक्रियादर्शनेनात्रापि "सात्त्विक एकादशकर इत्यनेन मनो ग्राह्य, तैजसादुभयम् इत्युभयपदेन च द्विविधमिन्द्रिय ग्राह्यम्" इत्याह, पर

१ स=तन्मात्रपञ्चक । २ ते=सत्त्वतमसी, कर्म । ३ १३ इतिकारिकार्यायाम्। ४ अ० २ सू० १८ इत्यत्र साङ्ख्यप्रवचनभाष्य इत्यर्थ । ५ "वैकारिकस्तैजसश्च तामसश्चेत्यह त्रिधा । अहन्तत्त्वाद् विकुर्वाणान्मनो वैकारिकादभूत्। वैकारिकाश्च ये देवा अर्थाभिव्यञ्जन यत । तैजसादिन्द्रियाण्येव ज्ञानकर्ममयानि च। तामसो भूतसूक्ष्मादिर्यत ख लिङ्गमात्मन ।" इत्यादिपुराणवाक्येष्वित्यर्थ ।

सात्त्विकमेकादशमाख्यातुं बाह्येन्द्रियदशकं तावदाह—"बुद्धीन्द्रियाणि" इत्यादीना—

**बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि।**
**वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियाण्याहुः ॥ २६ ॥**

सात्त्विकाहङ्कारोपादानकत्वमिन्द्रियत्वम्, तच्च द्विविधं—बुद्धीन्द्रिय कर्मे-

---

नैतत्सुन्दरम्, एकादशकशब्दस्य ऐकादशसङ्ख्यापरिमिते गणे शक्तत्वेन मनोमात्रप्रत्यायनेऽशक्तत्वाद्, न च पूरणप्रत्ययान्तात्स्वार्थे केऽभिमतलाभ इत्यभिमन्तव्य, तथा सति एकादशकमित्यस्यैवौचित्येन पुँल्लिङ्गनिर्देशायोगाद्, न च 'सात्त्विकमेकादशकम्' इति सूत्रानुसारेणात्रापि 'एकादशकम्' इत्येव पाठ कल्प्यत इति कल्पनीय, तत्रापि 'कर्मेन्द्रियबुद्धीन्द्रियैरान्तरमेकादशकम्' इत्युत्तरसूत्रेणैकादशकमित्यनेनैकादशेन्द्रियाणामेव ग्रहणबोधनेन तथा कल्पनेऽपि मनोरथापार्थकत्वस्य तदवस्थत्वात्, सात्त्विकात्कथमप्रकाशशीलानि कर्मेन्द्रियाणीति चेत् त्वन्मतेप्यप्रकाशशीलाद्राजसात्कथ ज्ञानेन्द्रियाणीत्यपि विभाव्यतामित्युपशम एव ते भिक्षो श्रेयान्।

सर्वस्य त्रिगुणत्वाद् उत्कटसत्त्वप्रधानादहङ्कारान्मनो जायते, मध्यमसत्त्वप्रधानाच्च ज्ञानेन्द्रियाणि, निकृष्टसत्त्वयुक्ताच्चाहङ्कारात्कर्मेन्द्रियाणीति तु मादृशा ॥ २५ ॥

'एकादशम्'=एकादशाना पूरणं—मन इति यावत्, बुद्धि=रूपादिज्ञान तत्साधनानीन्द्रियाणि बुद्धीन्द्रियाणि, बुद्धीन्द्रिय—बुद्धि=रूपादिविषयमालोचन तत्करणमिन्द्रिय-ज्ञानेन्द्रियमिति यावद्, एव च सात्त्विकाहङ्कारकार्यत्वे सति रूपादिविषयालोचनकरणत्व ज्ञानेन्द्रियत्वमित्यत्र फलितम्, एव कर्म=वदनादिव्यापार तत्करणमिन्द्रिय कर्मेन्द्रियमिति,

'स एतमेव पुरुष ब्रह्म ततममपश्यदिदमदर्शमितीऽ३ तस्मादिदन्द्रो नाम इदन्द्रो ह वै नाम तमिदन्द्र सन्तमिन्द्र इत्याचक्षते परोक्षेण' इति श्रुते इन्द्र आत्मा तस्य लिङ्ग ज्ञापकम् इत्यर्थे

---

१ एतच्च पूर्वम् २२ इत्यार्याया षोडशकपदव्याख्याने व्यक्तम्। २ एकादशाना पूरणमित्यर्थे 'तस्य पूरणे' इति डटि स्वार्थिके कप्रत्यय एकादशक इति साधुरित्यथ। ३ मनश्शब्दस्य नपुसकत्वादित्यर्थ। ४ अ० २ सू० १८ अत्र सूत्रे एकादशाना पूरणमेकादशक मन इति यावदित्यथाभिमानेनेय शङ्का। ५ अ० २ सू० १९ किन्तदेकादशकमित्याकाङ्क्षायामिद सूत्रम्। ६ शाकपार्थिवादिवन्मध्यमपदलोपोऽत्र बोध्य। ७ रूपाद्यालोचनकरणत्वमालोकेऽतिप्रसक्त तद्वारणाय 'सात्त्विकाहङ्कारकार्यत्वे सति' इति। ८ स=पूर्वोक्त आत्मा एतमेव=मूर्द्धद्वाराप्रविष्ट पुरि शयानमात्मान ब्रह्म ततम=तततम—विस्तृततरूपमपश्यद्—आत्मानमेव ब्रह्मरूपेण साक्षात्कृतवानिति यावद्, तत तुष्ट सन्नाह—"इदमदर्शम्" अपरोक्षतयाऽहमदर्शं=दृष्टवानस्मि इति ई ३ इति प्लुतिस्तुष्ट्यर्था, तस्माद्=अपरोक्षदर्शनाद् इदन्द्रो नाम—इदम्पदपूर्वकाद्दृशेर्ड्रन्प्रत्यय इद दृष्टवानित्यर्थे इदन्द्र इति, ह वै=प्रसिद्ध नामैतदिदन्द्र इति, ननु "इन्द्रो मायाभि पुरुरूप ईयते" इत्यादाविन्द्र इति नाम प्रसिद्ध न त्विदन्द्र इति, तत्राह—"तमिदन्द्र सन्तमिन्द्रमित्याचक्षते" परोक्षेण पूजार्थ—यत "परोक्षप्रिया देवा" इत्यैतरेयश्रुत्यर्थ। ९ करणव्यापार कर्तृपरतन्त्र व्यापारत्वात्कुठारव्यापारवदित्येव करणेन कर्तुरनुमानादिन्द्रियाणामात्मलिङ्गत्वम्।

न्द्रियं च, उभयमप्येतद् इन्द्रस्य=आत्मनश्चिह्नत्वादिन्द्रियमुच्यते, तानि च स्वसञ्ज्ञाभिश्चक्षुरादिभिरुक्तानि,

तत्र रूपग्रहणलिङ्गं चक्षुः, शब्दग्रहणलिङ्ग श्रोत्रं, गन्धग्रहणलिङ्गं घ्राण, रसग्रहणलिङ्गं रसनं, स्पर्शग्रहणलिङ्ग त्वग्, वागादीना कार्यं वक्ष्यति॥ २६॥

एकादशमिन्द्रियमाह–"उभयात्मकम्" इति–

उभयात्मकमत्र मनः, संकल्पकमिन्द्रियं च साधर्म्याद्।
गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च ॥ २७ ॥

एकादशस्विन्द्रियेषु मध्ये मन उभयात्मकं=बुद्धीन्द्रियं कर्मेन्द्रियं च, चक्षुरादीना वागादीना च मनोऽधिष्ठितानामेव स्वस्वविषयेषु प्रवृत्तेः,

तदसाधारणेन रूपेण लक्षयति–"संकल्पक मन" इति, सङ्कल्पेन रूपेण

---

'इन्द्रियमिन्द्रलिङ्गम्' इत्यादिसूत्रेण 'इन्द्रियम्' इति साधु इत्यभिप्रेत्येन्द्रियपदव्युत्पत्तिमाह–"उभयमप्येतद् इन्द्रस्य" इत्यादिना,

सनिमित्ताश्चक्षुरादिसञ्ज्ञा आह–"तत्र रूप" इति,

रूपग्रहणलिङ्ग=रूपोपलब्धिकरणम्, एवमग्रेऽपि, तथा च रूप चष्टे=पश्यत्यनेनेति चक्षु, शब्द शृणोत्यनेनेति श्रोत्रमित्यादिर्व्युत्पत्तिरत्र दर्शिता,

यद्वा–रूपग्रहण करणजन्य क्रियात्वाच्छिदिक्रियावद् इत्येव रूपग्रहणमेव लिङ्गम्=अनुमापक यस्य तद् रूपग्रहणलिङ्ग रूपज्ञानानुमेयमित्यार्थोऽत्र ज्ञेय,

'त्वक्'=स्पर्शनमिन्द्रिय, तच्च त्वक्स्थानत्वादुपचारेण त्वगित्यभिहितम् ॥ २६ ॥

'अत्र' इति निर्धारणे सप्तमीति मत्वा तस्यार्थमाह–"एकादशस्विन्द्रियेषु मध्य" इति–एकादशानामिन्द्रियाणाम्मध्ये इत्युचित–मध्यशब्दयोगे षष्ठ्या एव प्राप्तेरिति शाब्दिका,

उभयात्मकत्वे हेतुमाह–"चक्षुरादीनाम्" इति, "अन्यत्रमना अभूव नादर्शम्" इत्यादिश्रुतेर्मनोव्यापारमन्तरेणेन्द्रियाणा स्वस्वव्यापारेऽक्षमत्वाद् उभयविधव्यापारवत्त्वेन मन उभयेन्द्रियरूपमित्यर्थ ।

न चेन्द्रियजज्ञाने सहकारितामात्रेण मनस इन्द्रियत्वे आलोकस्यापीन्द्रियत्वप्रसङ्ग इति शङ्कनीयं–सात्त्विकाहङ्कारकार्यत्वे सति ज्ञानकर्मोभयकरणत्वेन मनस उभयेन्द्रियत्वमित्यर्थस्यात्र विवक्षितत्वाद्,

'असाधारणेन'=करणान्तरव्यावृत्तेन रूपेणेत्यर्थ ।

'सङ्कल्पेन रूपेण'=सङ्कल्परूपेणासाधारणेन व्यापारेण मनो लक्ष्यते=इतरस्माद् व्यावृत्तरूपेण' प्रतीयत इत्यर्थ ।

---

१ वक्ष्यति=२८–इति कारिकयेत्यर्थ । २ "इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति च" (५।२।९३) सूत्रेण षष्ठ्यन्तादिन्द्रशब्दाल्लिङ्गमित्यर्थे घचि तस्य 'आयनेयीनि'-तीयादेश इन्द्रियमिति । ३ रूपमित्यादि न विग्रहान्तर्गतम्। ४ आदिना गन्ध जिघ्रत्यनेनेति घ्राण, रसयत्यनेनेति रसनमित्यादि ज्ञेयम्। ५ एतेन चक्षुरादीन्द्रियसद्भावे मानमुक्तम्।

मनो लक्ष्यते, आलोचितमिन्द्रियेण वस्तु 'इदम्' इति सम्मुग्धम् 'इदमेवं नैवम्' इति सम्यक् कल्पयति=विशेषणविशेष्यभावेन विवेचयतीति यावद्,

यदाहुः—"सम्मुग्धं वस्तुमात्रं हि प्राग्गृह्णात्यविकल्पितम्। तत्सामान्यविशेषाभ्या कल्पयन्ति मनीषिणः"

तथा हि—"अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकं, बालमूका(ढा)दिविज्ञानसदृशं शुद्धवस्तुजं ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया बुद्ध्याऽवसीयते सापि (हि) प्रत्यक्षत्वेन सम्मता" इति,

---

तदेव स्पष्टयति—"आलोचितम्" इति, पूर्वं चक्षुरादिव्यापारेण गोचरीकृत वस्तु इदम्=इद किञ्चिद् वस्तु इत्येव सम्मुग्धम्=अनुवृत्तव्यावृत्तरूपेणाविविक्तमेव भाति पुनश्च इदमेवम्=एतादृग्रूपेण युक्तमिद–नैव=ऐताद्दग्रूपेण च नेद युक्तमित्येत्र सम्यक् कल्पयति=विशेषणविशेष्यभावेन=अनुवृत्तव्यावृत्तरूपेण विवेचयति–विविच्य प्रत्येति मनोऽत सकल्पकमित्युच्यत इत्यर्थ ।

प्रथम निर्विकल्पक ज्ञानमालोचनात्मक जायते पश्चाच्च सविकल्पक, मननमेत्यत्र पूर्वाचार्याणा सवादमाह–"यदाहु" इति, प्राक्=मनोव्यापारात्पुरा चक्षु सन्निपातानन्तरम् अविकल्पित=सामान्यविशेषरूपेणानाकलितम् अत एव सम्मुग्धम्=अविविक्तम् अत एव च वस्तुमात्र गृह्णन्ति प्रतिपत्तार, पुनश्च मनीषिण –मनोव्यापारवन्त सन्त सामान्यविशेषाभ्याम्=अनुवृत्तव्यावृत्तरूपाभ्या तद् वस्तु कल्पयन्ति=विविच्यावगच्छन्तीत्यर्थ ।

एतदेव विशदयितु कौमारिलश्लोकवार्तिके पठति–"अस्ति ह्यालोचनम्" इति, प्रथम=सविकल्पकप्रत्ययात्पुरा यद् वस्तुमात्रगोचर बालमूका(ढा)दिज्ञानसमान निर्विकल्प ज्ञानमस्ति तत्प्रतीतिसिद्धमालोचनाख्य ज्ञानमभ्युपेय, तदभावे सविकल्पकज्ञानानुत्पत्तेरित्यर्थ. ।

'सामान्यविशेषेषु स्वरूपालोचनमात्र प्रत्यक्षम्' इति प्रशस्तपादभाष्येऽपि तदेवाभिहितमिति ज्ञेयम्,

'शुद्धवस्तुजम्' इत्यनेन न सामान्यगोचरमालोचनमित्युक्त, सामान्यविशेषकल्पनाहीनं तज्ज्ञानमित्यावेदित 'न विशेषो न सामान्य तदानीमनुभूयते। तयोराधारभूता तु व्यक्तिरेवावसीयत' इत्युत्तरवार्तिके तथा प्रतिपादनाद्,

---

१ 'मुग्धवस्तुजम्' इति पाठ उपलभ्यमानोऽपि न्यायरत्नाकरानुरोधेन परित्यक्त । २ अनुवृत्तरूप घटत्वादिक सामान्य, व्यावृत्तरूप च घटादिविशेषात्मकम् । ३ घटत्वादिरूपेण। ४ पटत्वादिरूपेण । ५ सम्यक्कल्पनामेवाह–"विशेषणविशेष्यभावेन" इति । ६ जैमिनीये प्रत्यक्षलक्षणपरे तुरीयसूत्रे ११२,१२० इत्येतत्सङ्ख्य इमे वार्तिक इति ज्ञेयम् । ७ तदभावे=निर्विकल्पकज्ञानाभावे, तथा चाहुर्न्यायकन्दलीकारा –"यदि हि वस्तुस्वरूपस्य निर्विकल्पकेन ग्रहण नेष्यते तदा तद्वाचकशब्दस्य स्मृत्यभावात्सविकल्पकमपि न स्याद्" इत्यादि । ८ सामान्यविशेषात्मकेषु पदार्थेषु, गुणग्रन्थे प्रत्यक्षप्रकरणस्थमिद भाष्यम् । ९ 'विशेष =व्यवच्छेद – व्यावृत्ति , सामान्य=समानत्वम्–अनुवृत्तिरिति यावद्, अनुवृत्तिव्यावृत्ती न निर्विकल्पके प्रका-

नन्वालोचनज्ञानं यदीदृक्[1] केन तर्हि विविच्य ग्रहणमित्यत्राह—"ततः परम्" इति, निर्विकल्पकज्ञानादुत्तरं यया बुद्ध्या नीलत्वघटत्वादिभिर्धर्मैर्विविच्य गृह्यते वस्तु सापि बुद्धिः प्रत्यक्षैवेत्यर्थः।

यत्[2]प्रथमं केवलेनेन्द्रियेण निर्विकल्पकं ज्ञानं जनितं तदेव प्रत्यक्षमिति न किन्तु यच्चानन्तरमिन्द्रियसहायेन मनसा सविकल्पकं ज्ञानं जनितं तदपि प्रत्यक्षमिति भावः।

ननु[3] बाह्येन्द्रियतन्त्रं हि मनो बाह्यं गोचरयति अन्यथा[4]ऽन्धबधिराद्यभावप्रसङ्गादिति हि समयः[5], एवं च यदि नेन्द्रियेणालोचितो विशेषः तर्हि मनसापि स कथमनुव्यवसीयेत, तथा चानुव्यवसायस्य विशिष्टविषयत्वाय सामान्यविशेषविषयमिन्द्रियमित्यभ्युपेयं, तथा चाहुर्योगभाष्यकाराः[6]—'न च तत्सामान्यमात्रग्रहणाकारम्[7], कथमनालोचितः स विषयविशेषः इन्द्रियेण मनसाऽनुव्यवसीयेत' इति,

नात्र 'आलोचनं ज्ञानं सामान्यमेव गोचरयति मनस्तु विशिष्टमनुव्यवस्यति' इत्यभिप्रेतमपि तु 'इन्द्रियजमालोचनमविविक्तौ सामान्यविशेषौ गोचरयति मनस्तु विविक्तौ तौ गृह्णाति' इति,—"निर्विकल्पकबोधेऽपि द्व्यात्मकस्यापि[8] वस्तुनः, ग्रहणं लक्षणाख्येयं ज्ञात्रा शुद्धं तु गृह्यते" इत्यादिवार्तिकेन तथैवाभिधानात्, तत्कथङ्कारमनुव्यवसायानुपपत्तिः, कथं च योगभाष्यविरोध इति,

एतच्च "तच्[9] न सामान्यमात्रं गृह्णाति भेदस्यापि (विशेषस्यापि) प्रतिभासनाद्, नापि स्वलक्षणमात्रं[10]" सामान्याकारस्यापि संवेदनाद् व्यक्त्यन्तरदर्शने प्रतिसन्धानाच्च किन्तु सामान्यं विशेषं चोभयमपि गृह्णाति, परमिदं सामान्यमयं विशेष इति विविच्य न प्रत्येति—

शेते, तयोस्त्वाधारभूतमनुवृत्तं व्यावृत्तं च यज्जातिव्यक्त्याद्यनेकाकारं वस्तु तत्तदाकारयुक्तं सम्मुग्धं सर्वमवसीयते तत् शुद्धवस्त्वित्युच्यते, व्यक्तिरिति—वस्त्वित्यर्थः' इति न्यायरत्नाकरकारः।

१ ईदृग्=अविविक्तगोचरम्। २ 'सापि प्रत्यक्षत्वेन' इत्यपेरर्थमाह—"यत्प्रथमम्" इति। ३ आलोचनज्ञानं सामान्यविषयं न विशिष्टविषयमिति बुद्ध्वा शङ्कते—"ननु" इति। ४ चक्षुरादीनैरपेक्ष्येणैव मनसो बहिर्वृत्तिस्वीकारे सति अन्धादयोऽपि रूपादीनालोचयेयुरिति भावः। ५ शास्त्रकृत्सङ्केतः। ६ पा० ३ सू० ४७। ७ तद्=इन्द्रियम्, सामान्यमात्रस्य ग्रहणमेव आकारः=स्वभावो यस्यैवंविधं नेत्यर्थः। ८ 'द्व्यात्मकस्य=सामान्यविशेषात्मकस्येत्यर्थः, सामान्यावभासोऽपि प्रतीतिसिद्ध एव। न हि निर्विकल्पकेनाऽगृहीतस्य सविकल्पकेनापि ग्रहणं संभवति, न वाऽगृहीते सामान्ये व्यक्त्यन्तरे प्रत्यभिज्ञानं संभवति, तस्मात्सामान्यं विशेषश्च निर्विकल्पकेऽपि प्रकाशत एव। ननु "न विशेषो न सामान्यं तदानीमनुभूयते" इत्युक्तं, कथं तयोर्ग्रहणमुच्यते, अत आह—"लक्षणाख्येयम्" इति, न हीदानीमप्यनुवृत्तिव्यावृत्त्योर्ग्रहणमुच्यते—या त्वियं गृह्यमाणस्य द्व्यात्मकत्वाख्या सा लक्षणाख्या=गृह्यमाणस्य वस्तुनो लक्षणमाख्यायते—सामान्यविशेषात्मकं तद्वस्त्विति, ज्ञात्रा पुनः शुद्धमेव=अनुवृत्तिव्यावृत्तिरहितं गृह्यते, न त्वसाधारणत्वेन परेभ्यो व्यक्त्यन्तरेभ्यो व्यावृत्तेरकल्पनात्, तथा व्यक्त्यन्तरानुवृत्तेरकल्पनान्न सामान्यमपि गृह्यतेऽतो न विरोधः, इत्येतदर्थः' इति पार्थसारथिमिश्राः, अनेन चालोचनस्याविविक्तविषयत्वमुक्तम्, उत्तरज्ञानस्य च विविक्तविषयत्वं 'ततः परं पुनर्वस्तु' इत्यनेनाभिहितं, तदेवाह "इत्यादिना" श्लो० ११८। ९ तच्च=निर्विकल्पकज्ञानं च। १० व्यक्तिमात्रं विशेषः।

**सोय सङ्कल्पलक्षणो व्यापारो मनसः समानासमानजातीयाभ्यां व्यवच्छिन्दन् मनो लक्षयति।**

**स्यादेतद्–असाधारणव्यापारयोगिनौ यथा महदहङ्कारौ नेन्द्रियम् एवं मनोप्यसाधारणव्यापारयोगि नेन्द्रियं भवितुमर्हति, इत्यत आह–"इन्द्रियं च" इति, कुतः, "साधर्म्याद्"—इन्द्रियान्तरैः, सात्त्विकाहङ्कारोपादानत्वं च साधर्म्य, न त्विन्द्रलिङ्गत्वम्, महदहङ्कारयोरप्यात्मलिङ्गत्वेनेन्द्रियत्वप्रसङ्गात्, तस्माद् व्युत्पत्तिमात्रमिन्द्रलिङ्गत्वं न तु प्रवृत्तिनिमित्तम्।**

---

वस्त्वन्तरानुसन्धानविरहाद्" इत्यादिना[1] कन्दल्या व्यक्तमिति तत्रत्याधिकमालोचनीयम्।

एव च यद् विज्ञानभिक्षुणा "कश्चित्तु निर्विकल्पक ज्ञानमेवालोचनमिन्द्रियजन्य च भवति सविकल्पक तु मनोमात्रजन्यमित्याह–तन्न, योगभाष्ये व्यासदेवैर्विशिष्टज्ञानस्याप्यैन्द्रियकत्वस्य व्यवस्थापितत्वाद्"[2] इत्येवमिद वाचस्पत्य दूषित तदेतद्ग्रन्थतात्पर्यानवबोधमूलकमिति ध्येयम्।

एव सङ्कल्प व्याख्याय लक्षणसमन्वयमाह–"सोयम्" इति, अय य मनस सङ्कल्पलक्षणो व्यापार स समानजातीयाद् बुद्ध्यादे[3] असमानजातीयाच्च चक्षुरादेस्सकाशात् मनो व्यवच्छिन्दन्=व्यावर्तयन् सन् मनो लक्षयति=व्यावृत्तरूपेण प्रत्याययतीति भवति सङ्कल्पो मनस लक्षणमित्यर्थ ।

"नेन्द्रिय भवितुमर्हति"–यद्यपि नासाधारणव्यापारयोगित्वमिन्द्रियत्वव्याघातक तथात्वे[4] चक्षुरादीनामप्यनिन्द्रियत्वप्रसङ्गात् तथापि यद्यसाधारणव्यापारवतो मनस इन्द्रियत्व तर्हि तथाविधयोर्महदहङ्कारयोरपि[5] कथं नेन्द्रियत्वमित्याशयेनेय शङ्का ज्ञेया,

यद्वा यथा प्रतिनियतविषयाणामेव नयनादीनामिन्द्रियत्व न सर्वविषयत्वेनानियतविषययोर्महदहङ्कारयोरिन्द्रियत्व तथा मनसोऽपि सर्वविषयत्वेन नेन्द्रियत्व भवितुमर्हतीत्येवमिय शङ्का नेया, केन साधर्म्याद्, इत्याकाङ्क्षां पूरयति–"इन्द्रियान्तरै" इति,

किन्तत् साधर्म्यम्, इत्यत्राह–"सात्त्विक" इत्यादि, एतदेव साधर्म्यमत्र ग्राह्य न पुन पूर्वोक्तमिन्द्रलिङ्गत्वरूपमित्यर्थ, तत्र हेतुमाह–"महदहङ्कारयो" इति,

कथ तर्हि पूर्वमात्मनश्चिह्नत्वादुभयमिन्द्रियमित्युक्तं, तत्राह–"तस्माद्" इति, यत इन्द्रलिङ्गत्वस्यातिप्रसक्तत्व तस्माद् व्युत्पत्तिमात्र=प्रकृतिप्रत्ययार्थान्वाख्यानमात्रमिदमिन्द्रलिङ्गत्व यथा गच्छतीति गौरिति, "न तु प्रवृत्तिनिमित्तम्"=इन्द्रियपदस्य चक्षुरादौ प्रवृत्तेर्निमित्त तदतिप्रसक्तत्वादित्यर्थ ।

---

१ आदिना 'पिण्डान्तरानुवृत्तिग्रहणाद्धि सामान्य विविच्यते, व्यावृत्तिग्रहणाद् विशेषोयमिति विवेक, निर्विकल्पकदशाया च पिण्डान्तरानुसन्धानाभावात्सामान्यविशेषयोरनुवृत्तिव्यावृत्तिधर्मौ न गृह्येते तयोरग्रहणान्न विविच्यग्रहणम्' इत्याद्युत्तरग्रन्थो ग्राह्य, गुणग्रन्थे प्रत्यक्षप्रकरणस्थोऽय ग्रन्थ । २ अ० २ सू० ३२–इत्यत्र साङ्ख्यप्रवचनभाष्य इति । ३ सर्वविषयत्वेन सजातीय बुद्धितत्त्वमभिमानतत्त्व, प्रतिनियतविषयत्वेनासमानजातीय चक्षुरादिकम् । ४ असाधारणव्यापारयोगित्वस्येन्द्रियत्वव्याघातकत्वे । ५ तथाविधयो =असाधारणव्यापारयोगिनोरित्यर्थ ।

**अथ कथं सात्त्विकादहङ्कारादेकस्मादेकादशेन्द्रियाणि, इत्यत आह—"गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च" इति, शब्दाद्युपभोगप्रवर्तकादृष्ट-सहकारिभेदात्कार्यभेदः, अदृष्टभेदोऽपि गुणपरिणाम एव, 'बाह्यभेदाश्च' इति दृष्टान्तार्थं, यथा बाह्यभेदास्तथैतदपीत्यर्थः ॥ २७ ॥**

यथानतिप्रसक्तमेव सास्नादिमत्त्व पशुविशेषे गोपदस्य प्रवृत्तेर्निमित्तमाश्रीयते न तु व्युत्पत्तिमात्रलभ्य गमनकर्तृत्वमतिप्रसक्तत्वात् तथाऽनतिप्रसक्त सात्त्विकाहङ्कारोपादानत्वमेवात्रेन्द्रियपदस्य चक्षुरादौ प्रवृत्तेर्निमित्तमाश्रीयते न त्वतिप्रसक्त व्युत्पत्तिमात्रलभ्यमिन्द्रलिङ्गत्व, तथा च न महदहङ्कारयोरिन्द्रियत्वप्रसङ्ग इति भाव ।

कारणवैलक्षण्यमन्तरेण कार्यवैलक्षण्यायोगादविलक्षणादहङ्कारात्कथ विलक्षणानीन्द्रियाणीत्याशङ्कते—"अथ कथम्" इति,

धर्माधर्मरूपो यो गुणपरिणाम तस्य विशेषाद्=वैचित्र्याद् अहङ्कारस्य तत्कार्याणा चेन्द्रियाणा नानात्वम्=अनेकत्वम् इत्यर्थमभिप्रेत्य व्याचष्टे—"शब्दाद्युपभोग" इति, शब्दाद्युपभोगप्रवर्तक यददृष्टरूप सहकारि कारण तद्भेदादित्यर्थ ।

ननु गुणपरिणामविशेषान्नानात्वमुक्त, कथमुच्यते सहकारिधर्माधर्मभेदाद् भेद इति तत्राह—"अदृष्टभेदोऽपि गुणपरिणाम एव" इति, अदृष्टभेद =अदृष्टविशेष , अत्र गुणपरिणामशब्देनादृष्टमेव गृह्यत इत्यर्थ ।

पुरुषोपभोगार्था गुणाना प्रवृत्तिरिति हि स्थिति , उपभोगश्च पुरुषस्य शब्दादिविषयानुभवरूपो न स्वाभाविक किन्त्वदृष्टसहकारेणेन्द्रियाद्युपस्थापितशब्दादिद्वारा, न चैकेनेन्द्रियेण निखिल शब्दादिकमुपस्थापयितु शक्यमित्यगत्येन्द्रियनानात्वमुररीकार्यं, तदुररीकारे चाहङ्कारनानात्वमर्थात्प्राप्तमित्याशयेनोक्त—"शब्दाद्युपभोगप्रवर्तकादृष्ट" इत्यादि,

धर्माधर्मसहकृतगुणविमर्दवैचित्र्यादहङ्कारवैचित्र्यात्परिणामवैचित्र्यमिति तत्त्वम् , एतेन "यदि पुनरिन्द्रियाण्येककारणकानि स्यु कारणस्वभावानुविधानादैकात्म्याद् विषयव्यवस्था न स्यात्सर्वं वा सर्वार्थमेकं वा सर्वार्थमिति स्याद्" इत्युद्द्योतकराचार्योक्तो नानेन्द्रियाणामेकाहङ्कारकारणकत्व आक्षेप प्रतिक्षिप्त इति वेदितव्यम्,

"दृष्टान्तार्थम्"एतेन चकार उपमार्थ इति सूचित, तदेवाह—"यथा बाह्यभेदा" इति इन्द्रियापेक्षया बाह्या ये शब्दतन्मात्रादिरूपा ग्राह्यास्ते यथा तामसादहङ्कारादनेकविधा जायन्ते तथा सात्त्विकादहङ्कारादनेकविधानीन्द्रियाणीत्यर्थ ॥ २७ ॥

---

१ पुरुषस्यापि गमनकर्तृत्वेन तत्रापि गोपदप्रवृत्त्यापत्तेरित्यर्थ । २ पाचकादिपदवन्न यौगिकमिन्द्रियपदमपि तु पङ्कजादिवद् योगरूढ, तेन सात्त्विकाहङ्कारोपादानत्वे सतीन्द्रलिङ्गत्वमिन्द्रियत्वमित्यत्र फलितमिति ध्येयम् । ३ अर्थात्=कारणवैलक्षण्य विना कार्यवैलक्षण्यासंभवादित्यर्थ । ४ धर्माऽधर्माभ्या सहकृताना गुणानाम् एकैकस्य न्यूनबलस्य द्वयोर्द्वयोर्वा न्यूनबलयोर्योऽभिभवलक्षणोविमर्दस्तेन वैचित्र्यात् । ५ एतच्च ४६ इत्यार्यायामुत्तरत्र व्यक्तम् । ६ एतेन=अहङ्कारस्यानेकात्मकत्वाभ्युपगमेन । ७ अ० १ आ० १ सू० १२ इत्यत्र न्यायवार्तिक उक्त इत्यर्थ ।

तदेवमेकादशेन्द्रियाणि स्वरूपत उक्त्वा दशानामप्यसाधारणीर्वृत्तीराह—"रूपादिषु" इति—

**रूपादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः।**
**वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम्॥ २८॥**

बुद्धीन्द्रियाणा सम्मुग्धवस्तुमात्रदर्शनमालोचनमुक्तं, 'वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानां'=कर्मेन्द्रियाणाम्, कण्ठताल्वादिस्थानमिन्द्रियं वाक्, तस्या वृत्तिः वचन, स्पष्टमन्यद्॥ २८॥

अन्तःकरणत्रयस्य वृत्तिमाह—"स्वालक्षण्यम्"इति—

**स्वालक्षण्यं वृत्तिस्त्रयस्य सैषा भवत्यसामान्या।**
**सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च॥ २९॥**

"स्वालक्षण्य वृत्तिस्त्रयस्य"=स्वम्=असाधारणं लक्षण येषा तानि स्वलक्षणानि—महदहङ्कारमनासि, तेषा भावः स्वालक्षण्यं, तच्च स्वानिस्वानि लक्षणान्येव, तद् यथा—महतोऽध्यवसायः, अहङ्कारस्याभिमानः, सङ्कल्पो मनसः वृत्तिः=व्यापारः,

---

रूपादिषु विषयेषु सन्निहितेषु सत्सु यद् रूपादिविषयाकारपरिणामरूपमालोचनमात्र तत् पञ्चाना=ज्ञानेन्द्रियाणा वृत्ति=व्यापार—धर्म इति यावद्, इत्यर्थमभिप्रेत्याह—"बुद्धीन्द्रियाणाम्" इत्यादि 'उक्तम्'="अस्ति ह्यालोचन ज्ञानम्" इत्यादिना पूर्वं निरूपितम्,

"कर्मेन्द्रियाणाम्" अत्र 'वृत्तय' इति विपरिणमय्य योज्यम्।

इतरेन्द्रियाणामधिष्ठानस्य नयनगोलकादेर्हस्तादेर्वा स्पष्टत्वात् तत्कथनमुपेक्ष्य वागिन्द्रियाधिष्ठान तावदाह—"कण्ठताल्वादि" इति 'अष्टौ स्थानानि वर्णानामुर कण्ठ शिरस्तथा, । जिह्वामूल च दन्ताश्च नासिकोष्ठौ च तालु च' इत्युक्तानि कण्ठताल्वादीनि स्थानानि यस्येन्द्रियस्य तत्कण्ठताल्वादिस्थानमिन्द्रिय वाक्, तस्या=वाच, वृत्ति=व्यापार—वचन=भाषणमित्यर्थ, एवम् आदानं=ग्रहण हस्तयोर्वृत्ति, विहरण=गमन पादयो, उत्सर्ग=मलापनय पायो, आनन्द=मूत्रत्यागो रमण चोपस्थस्य वृत्तिरिति ज्ञेयम्॥ २८॥

'असाधारण'"=पूर्वोक्तमध्यवसायादिरूपम्,

"तच्च"=स्वालक्षण्य च महदादीनां स्वकीयानि स्वकीयानि लक्षणान्येवेत्यर्थ, तदेवाह—"महतोऽध्यवसाय" इति, "वृत्ति" इत्यस्य सर्वत्र सबन्ध,

---

१ चक्षुरादिक्रमेण पूर्वमिन्द्रियाणामभिधानात् 'शब्दादिषु' इति पाठो न सन्निवेशित। २ मात्रशब्देन सामान्यविशेषविवेचनवैधुर्यं तस्य बोध्यते। ३ वृत्ति इत्यस्यानुवृत्ति। एवमग्रेऽपि। ४ अध्यवसायो महतो वृत्ति, अभिमानश्चाहङ्कारस्य वृत्तिरित्येव सबन्ध।

वृत्तिद्वैविध्यं साधारणासाधारणत्वाभ्यामाह—"सैषा भवत्यसामान्या"=असाधारणी, "सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च"=सामान्या चासौ करणवृत्तिश्चेति[1], त्रयाणामपि करणानां पञ्च वायवो जीवनं वृत्तिः, तद्भावे भावात् तदभावे चाभावात्।

केषामसौ सामान्या वृत्ति प्राणादिरूपा, तत्राह—"त्रयाणामपि करणानाम्" इति, वायव=वायुतुल्यसचारवत्त्वेन वायुवदाभासमाना प्राणादय. पञ्च त्रयाणामपि करणाना सामान्या वृत्ति, सा चैषा जीवनमित्युच्यत इत्यन्वय।

यथा पञ्जरचालनरूपो व्यापार सहताना कपोताना साधारणो[2] व्यापारस्तथा कलेवरधारणरूपो यो जीवनाख्य प्राणनादिव्यापार स मिलितानामन्त करणाना साधारणो व्यापार इति समस्तार्थ।

जीवनवृत्तेरन्त करणधर्मत्वेऽन्वयव्यतिरेकावाह—"तद्भावे भावाद्" इति, अन्त करणसद्भावे जीवच्छरीरे प्राणनादिव्यापारसद्भावदर्शनाद् अन्त करणासत्त्वे च पाषाणे प्राणनादिव्यापारादर्शनादित्यर्थ।

अत्रेदमवधेयम्—अत्र साङ्ख्यसूत्रे च "त्रयाणां स्वालक्षण्यम्"[3] इत्येवमन्त करणवृत्तौ प्रकृत्यैव 'सामान्यकरणवृत्ति प्राणाद्या" इत्यभिधानाद् अन्त करणस्यैव वृत्ति प्राणनादिर्न तु बाह्येन्द्रियाणामपीति,

एवं चैतदनुरोधात् 'समस्तेन्द्रियवृत्ति प्राणादिलक्षणा जीवनम्' इति योगभाष्येऽपि[4] समस्तेन्द्रियशब्देनान्त करणत्रयमेव ग्राह्य न तु बाह्येन्द्रियमपि, सुषुप्तौ चक्षुराद्युपसंहारेऽपि प्राणादिव्यापारदर्शनात्र बाह्येन्द्रियवृत्तित्व प्राणादेरित्यपि ज्ञेय, योगभाष्य इन्द्रियशब्दश्च[5] करणपरत्वेन नेय—( एवं सिद्धे सति[6] ) गत्यन्तरासम्भवाद्।

एवं च योगभाष्यव्याख्यायां समस्तेन्द्रियशब्देन बाह्याभ्यन्तरोभयेन्द्रियग्रहण वदन् वाचस्पतिमिश्रो विज्ञानभिक्षुश्च न श्रद्धेय इति ध्येयम्, एवमेव प्रकृतसिद्धान्तासाङ्गत्वप्रतिपादनपर[7] "न सामान्येन्द्रियवृत्ति प्राण, एकद्वित्रिचतुरिन्द्रियाभावे तदभावप्रसङ्गाद्, नो खलु चूर्णहरिद्रासंयोगजन्मारुणगुणस्तयोरन्यतराभावे भवितुमर्हति" इत्यादिर्भामतीग्रन्थोऽप्यश्रद्धेय एवावधेय[8]—अनभ्युपगत प्राणाना बाह्येन्द्रियवृत्तित्वमुपकल्प्य तत्खण्डनस्यायुक्तत्वाद्,

---

१ इति सामान्यकरणवृत्तिरित्यर्थ। २ यथानेके पक्षिण सम्भूय व्यापारिणो भूत्वैक पञ्जर चालयन्ति तथा सम्भूय व्यापारवन्त्यनेकान्यन्त करणान्येक शरीर धारयन्तीति भाव। ३ अ० २ सू० ३०। ४ पा० ३ सू० ३९। ५ ननु महदहङ्कारयोरिन्द्रियत्वाभावेन कथ समस्तेन्द्रियशब्देन तयोर्ग्रहणम् इत्यत्राह—"योगभाष्य इन्द्रियशब्दश्च" इति, बाह्येन्द्रियग्रहणपक्षेऽपि तयोर्ग्रहणायैषैव गतिराश्रयणीयेति भाव। ६ पूर्वोक्तप्रकारेण प्राणाना बाह्येन्द्रियवृत्तित्वाभावे सिद्धे सति। ७ "सामान्यकरणवृत्ति प्राणादि" इति साङ्ख्यसिद्धान्तखण्डनपर। ८ अ० २ पा० ४ सू० ८।

तत्र प्राणो नासाग्रहृन्नाभिपादाङ्गुष्ठवृत्तिः, अपानः कृकाटिकापृष्ठपादपायूपस्थपार्श्ववृत्तिः, समानो हृन्नाभिसर्वसन्धिवृत्तिः, उदानो हृत्कण्ठतालुमूर्द्धभ्रूमध्यवृत्तिः, व्यानस्त्वग्वृत्तिः, इति पञ्च वायवः ॥ २९ ॥

चतुर्विधकरणस्यासाधारणीषु वृत्तिषु क्रमाक्रमौ सप्रकारावाह—"युगपच्चतुष्टयस्य" इति—

युगपच्चतुष्टयस्य तु वृत्तिः क्रमशश्च तस्य निर्दिष्टा ।
दृष्टे तथाप्यदृष्टे त्रयस्य तत्पूर्विका वृत्तिः ॥ ३० ॥

"दृष्टे" यथा—यदा सन्तमसाऽन्धकारे विद्युत्सम्पातमात्राद् व्याघ्रमभिमुखमतिसन्निहितं पश्यति तदा खल्वस्यालोचनसङ्कल्पाभिमानाध्यवसाया 'युगपद्' एव प्रादुर्भवन्ति यतस्तत उत्प्लुत्य तत्स्थानादेकपदेऽपसरति ।

---

जीवनवृत्ते स्थानभेदेन पञ्चविधत्वमाह—"तत्र प्राण" इति, कृकाटिका=घाटा, प्राणनाद्=अन्नाशनादिना शरीरधारणात्प्राण, मलमूत्रादेरपनयनादपान, समम्=अनुरूप नाडीषु रसाना नयनात्समान, रसायूर्द्ध्वनयनादुदान, बलवत्कर्महेतुत्वाच्च व्यान, इति—व्यापारभेदादपि जीवनस्य पञ्चविधत्व ज्ञेयम् ॥ २९ ॥

"चतुर्विधकरणस्य"=बाह्यकरणसहितान्त करणत्रयस्य, "दृष्टे"=चक्षुरादिगोचरे पदार्थे तु "चतुष्टयस्य"=करणस्य वृत्ति कदाचिद् "युगपद्"=अक्रमेण जायते "कदाचिच्च" क्रमशो जायत इत्येव क्रमाक्रमवती "वृत्ति निर्दिष्टा"=साङ्ख्याचार्यैरभिहितेत्यर्थमभिप्रेत्य यौगपद्योदाहरण तावदाह—"दृष्टे यथा" इति,

"सन्तमसान्धकारे"=निबिडान्धकारे, सन्तमसशब्देनैव गाढान्धकारलाभसम्भवाद् अन्धकार इत्यनुपयुक्तम्,

"आलोचनसङ्कल्पाभिमानाध्यवसाया" एते यथाक्रम नयनमनोऽहङ्कारबुद्धीना व्यापारा,

"उत्प्लुत्य"=मण्डूकवदूर्द्ध्वप्लवनमनुष्ठाय "एकपदे"=तत्क्षणमेव—झटित्येवेति यावद्, "अपसरति"=स्थानान्तरमेति,

अत्र वृत्तीना यौगपद्याख्यानेन बाह्येन्द्रियवृत्तीनामपि युगपद्भवनस्यार्थात्कथितत्वाद् दीर्घशष्कुलीभक्षणादावपर्यायेण जायमान ज्ञानपञ्चकमप्यत्रोदाहरणीयम्,

न च 'नैकमणु मनो विभिन्नस्थानानीन्द्रियाणि युगपदधिष्ठातु शक्तम्' इति न युगपज्ज्ञान-

---

१ कृक=कण्ठम् अटति=व्याप्नोतीत्यर्थे कर्मण्यणि ङीपि स्वार्थे के ह्रस्वे टापि 'प्रत्ययस्थाद्' इतीत्वे च कृकाटिकेति साधु, यौवनोद्भेदसमये गल उपलभ्यमाना 'घडी' इति प्रसिद्धा, तदेवाह—'घाटा' इति । २ क्रमशोऽक्रमशश्चेन्द्रियवृत्ति अ० २ सू० ३२—इति कपिलाचार्यैरित्यर्थ । ३ सन्तत तम इति विग्रहे 'अवसमन्धेभ्यस्तमस' (५।४।७९।) इति सूत्रेण समासान्तेऽचि 'सन्तमसम्' इति साधु, सर्वतोव्याप्तान्धकारे चास्य वृत्तिरित्यमर । ४ अक्रमेण । ५ मनोऽधिष्ठितानामेव बाह्येन्द्रियाणा स्वस्वव्यापारे क्षमत्वस्य पूर्वमुक्तत्वात् ।

"क्रमशश्च"—यदा मन्दालोके प्रथमं तावद् वस्तुमात्रं सम्मुग्धमालोचयति, अथ प्रणिहितमनाः कर्णान्ताकृष्टसशरशिञ्जितमण्डलीकृतकोदण्डः प्रचण्डतरः पाटच्चरोयमिति निश्चिनोति, अथ च 'माम्प्रत्येति' इत्यभिमन्यते अथाध्यवस्यति—'अपसरामीतः स्थानाद्' इति ।

परोक्षे त्वन्तःकरणत्रयस्य बाह्येन्द्रियवर्जं वृत्तिरित्याह—"अदृष्टे त्रयस्य तत्पूर्विका वृत्तिः" अन्तःकरणत्रयस्य युगपत्क्रमेण च वृत्तिर्दृष्टपूर्विकेति, अनुमानागमस्मृतयो हि परोक्षेऽर्थे दर्शनपूर्वाः प्रवर्तन्ते नान्यथा, यथा दृष्टे "तथाऽदृष्टेऽपि" इति योजना ॥ ३० ॥

स्यादेतत्-चतुर्णां त्रयाणां वा वृत्तयो न तावत् तन्मात्राधीनाः, तेषां सदा-

---

पञ्चकोत्पाद. शक्यसम्पाद , तथा च यथाऽऽशुं सञ्चारात्सभ्रमतोऽलातस्य विद्यमानोऽपि क्रमो न गृह्यते तथा ज्ञानानामप्याशु सञ्चाराद् विद्यमानक्रमस्याऽग्रहणाद् दीर्घशष्कुलीभक्षणादौ युगपदुपलब्ध्यभिमान इत्यास्थेय, यदाहु.—'अलातचक्रदर्शनवत् तदुपलब्धिराशु सञ्चाराद् इति' इति शङ्कनीय, साङ्ख्यमते मनसो मध्यमपरिमाणवत्त्वेन युगपदनेकेन्द्रियाधिष्ठातृत्वसम्भवाद्, अननुभूयमानक्रमकल्पनाया अप्रामाणिकत्वाद् "ज्ञानायौगपद्यादेक मन" "यथोक्तहेतुत्वाच्चाणु" इत्यक्षपादोदित. सिद्धान्तो न साङ्ख्यसम्मत इति भाव ।

अपर्यायेण वृत्त्युत्पादस्थलमुदाहृत्य पर्यायेण वृत्त्युत्पादस्थलमुदाहर्तुमाह—"क्रमशश्च" इति, अत्र 'यथा' इति पूरणीयम्,

"कर्णान्ताकृष्टसशरशिञ्जितमण्डलीकृतकोदण्ड "=कर्णान्तम् उपकर्णं यथा स्यात् तथाऽऽकृष्टम्=आतानित=कर्णान्ताकृष्ट सशरशिञ्जितम्=आरोपितबाणम् अव्यक्तशब्दवच्चेति सशरशिञ्जित, कर्णान्ताकृष्ट च सशरशिञ्जित च मण्डलीकृत च कोदण्ड धनुर्येन स तथा "पाटच्चर" तस्कर , "निश्चिनोति"=स्थाण्वादिभ्यो विवेचयति,

"बाह्येन्द्रियवर्जं=बाह्येन्द्रियाणि वर्जयित्वा,

"अदृष्टे"=अनुमेये वह्न्यादौ, शाब्दे च स्वर्गापूर्वदेवतादौ, स्मरणीये च पित्रादौ,

"तत्पूर्विका" इत्यस्यार्थमाह—"दृष्टपूर्विका" इति, तदेव स्पष्टयति—"अनुमान" इत्यादिना, "दर्शनपूर्वा "=अनुमेये व्याप्तिज्ञानाय प्रत्यक्षापेक्षा, शाब्दे च शक्तिग्रहाय प्रत्यक्षापेक्षा, स्मरणीये च सस्कारायानुभवापेक्षा, इत्यनुमानादयो दर्शनपूर्वा ,

"तथाप्यदृष्टे" इति, 'अपि' भिन्नक्रम इत्याशयेनाह—"तथाऽदृष्टेऽपि" इति ॥ ३० ॥

"तन्मात्राधीना "=इतरनिमित्तनैरपेक्ष्येण करणमात्राधीना , "तेषा" करणानाम्,

---

१ 'द्वितीयाया च' ( ३।४।५३ ) इति णमुल्। २ "आशु"=शीघ्रम्। ३ न्या० अ० ३ आ० २ सु० ६१, (६३)। ४ न्या० अ० ३ आ० २ सु० ५९, ६२। ( ६१, ६४ )। ५ कर्णसमीपे।

तनत्वेन वृत्तीना सदोत्पादप्रसङ्गाद्, आकस्मिकत्वे तु वृत्तिसङ्करप्रसङ्गो नियमहेतोरभावाद्, इत्यत आह "स्वास्वाम्" इति–

**स्वांस्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम्।**
**पुरुषार्थ एव हेतुर्न केन चित्कार्यते करणम्॥ ३१॥**

करणानि इति शेषः, यथा हि बहव. पुरुषाः शाक्तीक-याष्टीक-धानुष्क-कार्पाणिका. कृतसङ्केताः परावस्कन्दनाय प्रवृत्ताः, तत्रान्यतमस्याकूतमवगम्यान्यतमः प्रवर्तते, प्रवर्तमानस्तु शाक्तीकः शक्तिमेवादत्ते न तु यष्ट्यादि[1]कम्, एवं याष्टीकोऽपि यष्टिमेव न शक्त्यादिकं, तथान्यतमस्य करणस्याऽऽकूतात् =स्वकार्यकरणाभिमुख्याद् अन्यतमं करणं प्रवर्तते, तत्प्रवृत्तेश्च हेतुमत्त्वान्न वृत्तिसङ्करप्रसङ्ग इत्युक्तं–"स्वास्वा प्रतिपद्यन्त" इति।

---

"सदोत्पादप्रसङ्गाद्" इति, ननु विषयसन्निधानादेर्वृत्त्युत्पाद निमित्तत्वसत्त्वान्न वृत्तीना सदोत्पादप्रसङ्ग इति चेद्, एवमपि नियामकस्य कस्य चिदभावादाकस्मिकत्वप्रसङ्गो दुर्वार, भवत्वाकस्मिकत्व कात्र क्षतिरिति चेत्, तत्राह–"आकस्मिकत्वे तु" इति, करणवृत्त्युद्भवस्या नैमित्तिकत्वे तु "वृत्तिसङ्करप्रसङ्ग"=कदाचिच्चक्षुरेव शब्दग्रहणाय व्याप्रियेत, कदाचिच्च श्रोत्रमेव रूपे व्याप्रियेत, कदाचिच्च मन एव निश्चिनुयात्, कदाचिच्च बुद्धिरेव सङ्कल्पयेद् इत्येव वृत्तीना परस्परव्यतिकरप्रसङ्ग, तत्र हेतुमाह–"नियमहेतोरभावाद्"=इय त्वदीया वृत्तिरेतद्गोचरा–इति नियमप्रदर्शकस्य कस्य चिद् हेतोरभावादित्यर्थ।

कारिकागतेन 'करणम्' इत्येनेनानिर्वाहादाह–"करणानीति शेष" इति, करणानि परस्पराभिप्रायनिमित्तामात्मीयामात्मीयामेव वृत्ति प्रतिपद्यन्ते=प्राप्नुवन्ति न परकीयामित्यर्थं दृष्टान्तेन स्पष्टयति–"यथा हि" इत्यादिना,

शक्ति प्रहर[4]णमस्यासौ शाक्तीक, एव याष्टीकादयो ज्ञेया, शक्तिपाणय यष्टिपाणय धनुष्पाणय कृपाणपाणयश्चेति यावत् "कृतसङ्केता"=आक्रमणवेलाया त्वयेद प्रहरण ग्रहणीयमित्येव पूर्वमेव कृतनियमास्सन्त "परावस्कन्दाय"=रिपोराक्रमणाय–अरिदमनायेति यावद्, "आकूतम्"=अभिप्रायम्,

दृष्टान्तसिद्धमर्थ दार्ष्टान्तिके योजयति–"तथाऽन्यतमस्य" इति,

आकूतस्येच्छाविशेषत्वेन चेतनधर्मत्वादचेतने करणग्रामे बाधितत्वाल्लाक्षणिकमर्थमाह–"स्वकार्यकरणाभिमुख्याद्" इति,

फलितमाह–"तत्प्रवृत्तेश्च" इति, एव करणप्रवृत्ते परस्पराकूतनिमित्तकत्वान्न वृत्तिसङ्करप्रसङ्गावसर इत्यर्थ।

---

१ 'आदत्ते' इत्यनुषङ्ग, एव 'यष्टिमेव' इत्यादावपि। २ निर्हेतुकवृत्त्युद्भवप्रसङ्ग। ३ "प्रतिपद्यन्ते" इति बहुवचनान्तक्रियापदेन सह योगायोगाद्। ४ प्रह्रियतेऽनेनेति प्रहरणम्=आयुधम्। ५ 'शक्तियष्ट्योरीकक्' (४।४।५९) इतीकक्, धानुष्ककार्पाणिकशब्दे त्वधिकारप्राप्तष्ठक्। ६ यथा–'नदी कूल पिपतिषति' इत्यत्रेच्छया पतनोन्मुखत्व लक्ष्यते तथात्रापि कार्यकरणोन्मुखत्व लक्ष्यत इत्यर्थ।

स्यादेतद्—याष्टीकादयश्चेतनत्वात्परस्पराकूतमवगम्य प्रवर्तन्त इति युक्त, करणानि त्वचेतनानि, तस्मान्नैवं प्रवर्तितुमुत्सहन्ते, तेनैषामधिष्ठात्रा करणाना स्वरूपसामर्थ्योपयोगाभिज्ञेन भवितव्यम्, इत्यत आह—"पुरुषार्थ एव हेतुर्न केन चित्कार्यते करणम्" इति।

भोगापवर्गलक्षणः पुरुषार्थ एवानागतावस्थः प्रवर्तयति करणानि, कृतमत्र तत्स्वरूपाभिज्ञेन कर्त्रा।

एतच्च "वत्सविवृद्धिनिमित्तम्" इत्यत्रोपपादयिष्यते ॥ ३१ ॥

"न केन चित्कार्यते करणम्" इत्युक्त, तत्र करणं विभजते "करणं त्रयोदशविधम्" इति—

करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम्।
कार्यं च तस्य दशधाऽऽहार्यं धार्यं प्रकाश्यं च ॥ ३२ ॥

इन्द्रियाण्येकादश बुद्धिरहङ्कारश्चेति त्रयोदशप्रकारं करण, कारकविशेषः= करणं, न च व्यापारावेशं विना कारकत्वम्, इति व्यापारावेशमाह—"तदा-

---

"तस्मान्नैवम्" तस्माद्=अचेतनत्वात् एव=शाक्तीकादिवत् प्रवर्तितु न "उत्सहन्ते"=उद्युक्ता भवन्ति "तेन"=स्वय प्रवर्तितुमक्षमत्वेन "एषा"=करणानाम् "अधिष्ठात्रा"=प्रयोजकेन केन चिद् भवितव्यमित्यन्वय।

कीदृशेनाधिष्ठात्रा भवितव्यम इत्यत्राह—"करणाना स्वरूपसामर्थ्योपयोगाभिज्ञेन" इति, यद्यप्यस्त्येव पुरुषोऽधिष्ठाताभिज्ञस्तथाप्यसङ्गत्वान्निर्विकारत्वान्न तस्य प्रेरकत्वसम्भव, ईश्वरस्तु नास्त्येवेत्याशय,

सत्कार्यवादसिद्धान्ते भाविनावपि भोगापवर्गावव्यपदेश्यतया गुणेषु तिष्ठत इति प्रकृतिगतावनागतौ तावेव प्रवर्तकौ, तावदेव हि गुणा प्रवर्तन्ते न यावद् भोग वापवर्ग वा जनयन्ति, निर्वर्तितभोगापवर्गास्तु समाप्ताधिकारा सन्तो निवर्तन्त इति हि साङ्ख्यसिद्धान्त।

अपवृज्यते=केवली भवत्यनेनेत्यपवर्ग=सत्त्वपुरुषान्यताज्ञानम्, "अनागतावस्थ"= निष्पादनीयत्वेन स्थित,

"कृतम्"=अलम् "अत्र"=करणाना प्रेरणे, पुरुषार्थातिरिक्तेन केन चित् "कर्त्रा" किमपि साध्य नास्तीति व्यर्थमेव तदाश्रयणमित्यर्थ।

"एतच्च"=न केन चिद् ईश्वरेण जीवेन वा कार्यते=प्रवर्त्यते करणम् इत्येतदित्यर्थ ॥३१॥

"कारकविशेष"=कर्त्रादिषट्कारकमध्ये साधकतमरूप, "व्यापारावेश"=व्यापारयोग, व्यापाराश्रयस्यैव कारकत्वादित्यर्थ।

---

१ का० ५७। २ ईदृक् करणाना स्वरूपमेवविध चषा सामर्थ्यमत्र चैषामुपयोग इत्येव सप्रकारकरणज्ञात्रा।

हरणधारणप्रकाशकरं" यथायथं तत्र कर्मेन्द्रियाणि वागादीनि आहरन्ति=यथास्वमुपाददते—स्वव्यापारेण व्याप्नुवन्तीति यावद्, बुद्ध्यहङ्कारमनांसि तु स्ववृत्त्या—प्राणादिलक्षणया धारयन्ति, बुद्धीन्द्रियाणि च प्रकाशयन्ति ।

आहरणधारणादिक्रियाणां सकर्मतया किं कर्म, कतिविधं च, इत्यत आह—"कार्यं च तस्य" इति, तस्य=त्रयोदशविधस्य करणस्य "दशधाऽऽहार्यं धार्यं प्रकाश्यं च" कार्यम्, आहार्यं=व्याप्यं, कर्मेन्द्रियाणां वचनादानविहरणोत्सर्गानन्दा यथायथं व्याप्याः, ते च दिव्यादिव्यतया दशेत्याहार्यं दशधा, एवं धार्यमप्यन्तःकरणत्रयस्य प्राणादिलक्षणया वृत्त्या शरीरं, तच्च पार्थिवादि पाञ्चभौतिकं, शब्दादीनां पञ्चानां समूहः पृथिवीति ते च पञ्च दिव्यादिव्यतया दशेति धार्यमपि दशधा, एवं बुद्धीन्द्रियाणां शब्दस्पर्शरूपरसगन्धा यथायथं व्याप्याः, ते च दिव्यादिव्यतया दशेति प्रकाश्यमपि दशधेति ॥ ३२ ॥

त्रयोदशविधे करणेऽवान्तरविभागं करोति—"अन्तःकरणम्" इति—

**अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम् ।**
**साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ॥ ३३ ॥**

"अन्तःकरणं त्रिविधं"=बुद्धिरहङ्कारो मन इति, शरीराभ्यन्तरवर्त्तित्वादन्तःकरणं, दशधा बाह्यं करणं "त्रयस्य" अन्तःकरणस्य "विषयाख्यं"

---

किम्प्रत्येकमेवाहरणादिकरं, नेत्याह—"यथायथं" यथात्मीयं, तदेवाह—"तत्र" इत्यादिना

"कार्यं"=कर्म "व्याप्यं"=वागादिव्यापारेणाप्यं कर्म, तदेवाह—"कर्मेन्द्रियाणाम्" इति, देवादीनां भोग्या दिव्या, अस्मदादीनां चादिव्या.,

"तच्च"=शरीरं च "पार्थिवादि" आदिना जलीयतैजसवायवीयानां ग्रहणम्, "पाञ्चभौतिकं"=पञ्चभूतानां विकारभूतम्, पञ्चभूतविकारत्वे कथं पार्थिवादित्वव्यपदेश इति चेत्, तत्तत्प्राधान्येनेति गृहाण, तथा हि दशधात्वं कुतस्त्यं, तत्राह—"शब्दादीनाम्" इति, शब्दादिपञ्चतन्मात्राणां समूहरूपः परिणामः स्थूलः पृथिवीति पूर्वमभिहितं, ते च शब्दादयः पञ्च दिव्यादिव्यतया दशेति तद्वती पृथिव्यपि दशधा—तत्परिणामत्वाच्च शरीरमपि दशधेत्यर्थः ।

"व्याप्याः"=आलोचनीया विषयाः ॥ ३२ ॥

---

१ "यथास्वे यथायथम्" इति (८।१।१४) इति पा० सूत्रेण साधु । २ तत्र पार्थिवं मनुष्याणां, वरुणवह्निवायुलोकनिवासिनां च यथाक्रमं जलीयादिशरीरमिति बोध्यम् । ३ मानुषे शरीरे पृथिव्याः प्राधान्यमितरेषां च भूतानामुपष्टम्भकत्वमात्रम्, एवमितरत्रापि तत्तत्प्राधान्यं ज्ञेयम् । ४ तथापि, तत्तत्प्राधान्येन पार्थिवादित्वव्यवहारसत्त्वेपीति तदर्थं, शरीरस्य दशधात्वं कस्मात्कारणादवगतमित्यर्थः । ५ सूक्ष्माः शब्दादयो दिव्याः, स्थूलाश्चादिव्याः ।

विषयमाख्याति=विषयसंकल्पाभिमानाध्यवसायेषु कर्तव्येषु द्वारी भवति, तत्र बुद्धीन्द्रियाण्यालोचनेन, कर्मेन्द्रियाणि तु यथास्वं व्यापारेण,

बाह्यान्तरकरणयोर्विशेषान्तरमाह—"साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम्" इति, साम्प्रतकाल=वर्तमानकालं बाह्यम्=इन्द्रिय, वर्तमानसमीपमनागतमतीतमपि वर्तमानम् । अतो वागपि वर्तमानकालविषया भवति ।

"त्रिकालमाभ्यन्तर करणं" तद् यथा—नदीपूरभेदादभूद् वृष्टिः, अस्ति धूमादग्निरिह नगनिकुञ्जे, असत्युपघातके पिपीलिकाण्डसञ्चरणाद् भविष्यति वृष्टिरिति, तदनुकूलाश्च सङ्कल्पाभिमानाध्यवसाया भवन्ति ।

---

"विषयमाख्याति"=तत्तद्विषयगोचर व्यापारमुत्पादयति, तदेवाह—"विषयसङ्कल्प" इति, मनआदिभिर्विषयगोचरेषु सङ्कल्पादिषु कर्तव्येषु बाह्यमिन्द्रिय द्वारी भवति=उपायी भवतीत्यर्थ,

"आलोचनेन"=आलोचनाख्यव्यापारा सहायी भवन्तीति शेष, एव "यथास्व व्यापारेण" इत्यत्रापि 'द्वारी भवन्ति 'इति शेषो ज्ञेय,

"वर्तमानकाल"=वर्तमान कालो विषयो यस्य तद्वर्तमानकाल, लौकिको[2] बाह्यकरणाश्रितो ऽध्यवसायो वर्तमानविषय इत्यर्थ ।

ननु 'अयमागमम्' 'एष[3] गमिष्यामि' इत्यतीताऽनागतयोरप्यागमनगमनयोर्वाचो व्याप्रियमाणत्वात्कथ वर्तमानकाल बाह्य करणम् इति नियम इत्याशङ्कायामाह—"वर्तमानसमीपमनागतमतीतमपि वर्तमानम्" इति, अत एव कदाचित् 'कदाऽऽगतोऽसि' इति पृष्ट सन्नतीते वर्तमान प्रयुङ्क्ते—'अयमागच्छामि' इति, 'कदा गमिष्यसि' इति, च पृष्ट सन्ननागते वर्तमान प्रयुङ्क्ते—'एष गच्छामि' इति, तथा चाह भगवान् दाक्षीनन्दन —"वर्तमानसामीप्ये[4] वर्तमानवद्वा" इति, गङ्गासमीपे गङ्गात्वारोपवद् वर्तमानसमीपे वर्तमानत्वारोपसम्भवान्नातीवावश्यकमिद सूत्रमिति महाभाष्यकारा,

अन्त.करणव्यापारस्य त्रैकाल्यविषयत्व स्पष्टयितुमादौ तावदतीतविषयमनुमानमाह—"नदीपूरभेदाद्" इति, नदीपूर.=नद्या पूर्णत्वं, रोधादेपि[5] नद्या पूर्णत्वस्य कदाचित्सम्भवाद् व्यभिचार स्यात् तद्वारणाय भेदपद, नदीपूरविशेषादित्यर्थ, वैशेष्य च बहुतरफेनफलपल्लवकाष्ठादिमद्रजस्वलजलवत्त्वसहकृतत्व, तथा चैतादृङ्नद्या पूर्णत्व, स्रोतस शीघ्रत्व च दृष्ट्वानुमीयते—'नद्या उपरिदेशे वृष्टो देव' इत्यत्र फलितम् ।

वर्तमानविषयमनुमानमाह—"अस्ति धूमाद्" इति, "नगनिकुञ्जे"=गिरिगह्वरे—लताच्छादिते पर्वतप्रदेश इत्यर्थ ।

अनागतविषयमनुमानमाह—"असत्युपघातक" इति, वर्षमूलकारणे महाभूतसक्षोभे सति

---

१ बाह्येन्द्रियतन्त्र ह्यन्त करण बाह्ये प्रवर्तत इति बाह्यगोचरवृत्त्युद्भवेऽन्त करणस्य बाह्येन्द्रिय सहायि भवतीति भाव । २ योगिन प्रत्यक्षमतीताऽनागतावपि गोचरयति, अत उक्त "लौकिक" इति । ३ इदानीमित्यर्थकम्—'अयम्' 'एष' इति च । ४ पाणिनि० (३।३।१३१)। ५ स्पन्दमानानामपा द्रवत्वप्रतिबन्धहेतुसत्वादिक 'रोध' इति ।

कालश्च वैशेषिकाभिमत एको नाऽनागतादिव्यवहारभेदं प्रवर्तयितुमर्हतीति, तस्मादयं यैरुपाधिभेदैरनागतादिव्यवहारभेद प्रतिपद्यते सन्तु त

---

भौमेनोष्मणा क्वथ्यमाना: खलु पिपीलिका स्वान्यण्डानि भूमिष्ठान्युपरिष्ठान्नयन्ति, तथा च पिपीलिकाण्डसञ्चरणाद् वर्षकारणमनुमाय पुनर्वर्षकारणाद् भावि कार्यं वर्षणमनुमीयत इत्यर्थोऽत्र ज्ञेय., नीडोपघातादपि कदा चित् पिपीलिकाण्डसञ्चारो भवतीति तन्निरासायाह–"असत्युपघातक" इति,=पिपीलिकागृहोपमर्दकारणेऽसतीत्यर्थ ।

तथा चाविरतानां भूयसीनां भूयस्सु स्थानेषु साण्डानां पिपीलिकानां सञ्चरणमेवाऽनागतवर्षणमनुमापयति न सञ्चारमात्रमिति न मिथ्यानुमानमित्यत्र फलितम्,

"दृष्टिरिति" इति, यत एव त्रैकाल्यविषयमनुमानमत तदनुरूपा –तत्तदतीताद्यनुगुणा एव मनआदीनां सङ्कल्पादयो भवन्तीत्यर्थ ।

'त्रिकालमाभ्यन्तर करणम्' इति श्रुत्वा भवेत्कस्य चित् 'पञ्चविंशतितत्त्वातिरिक्त कालतत्त्वमपि कापिलैरास्थीयते' इति भ्रान्ति, ता पराणुदति–"कालश्च" इति, "अपरस्मिन्नपर युगपच्चिर क्षिप्रमिति काललिङ्गानि" इत्येव वेशेषिकैरभिहितश्च कालो नाऽनागतानादिव्यवहारभेद प्रवर्तयितुमर्हति–यत स एक इति,

ननु कालस्य स्वरूपत ऐक्येऽप्युपाधिभेदादनागतादिभेदव्यवहार उपपत्स्यते, यदाहु –"एकत्वेऽपि सर्वकार्याणामारम्भक्रियाभिनिर्वृत्तिस्थितिनिरोधोपाधिभेदान्मणिवत्पाचकादिवद्वा नानात्वोपचार" इति, यथैकस्मिन् पुरुषेऽनेकसबन्धभेदात्तद्विधायिन्यभिन्ने पिता पुत्रो भ्रातेति प्रत्यया भवन्ति, तद्वदेक काल कार्यकारणविशेषापेक्ष परापरादिप्रत्ययहेतु इति च, तत्राह–"तस्मादय यैरुपाधिभेदै" इति, इति=यत एक कालोनागतादिव्यवहारभेद प्रवर्तयितु नार्हति "तस्माद् यैरुपाधिभेदै"=कार्यारम्भकार्यस्थितिकार्यनिरोधादिरूपै बहुतराल्पतरदिनकरोदया

---

१ वर्षकारण=भूतसक्षोभम्। २ नीडम्=गृहम्। ३ तादृक्सञ्चरणेन मिथ्यानुमानभवननिराकरणाय। ४ इतिकारो ज्ञानप्रकारपर प्रत्येकमभिसबध्यते, तथा च अपरमितिप्रत्यय, युगपदितिप्रत्यय, चिरमितिप्रत्यय, क्षिप्रमितिप्रत्यय, इति काललिङ्गानीत्यर्थ, अपरस्मिन्नपरमित्यनेन परस्मिन् परमित्यपि द्रष्टव्यम् इति काणादसूत्रार्थ, अ० २, आ० २ सू० ६। ५ आरम्भ =उपक्रम, क्रियाया अभिनिर्वृत्ति =परिसमाप्ति, स्थिति =स्वरूपावस्थान, निरोध = नाश एषामुपाधीना भेदान्नानात्वव्यपदेश, यथैकोऽपि स्फटिकादिमणिस्तत्तन्नीलाद्युपाधिभेदादनेकरूपो, यथा चैकोपि पुरुषस्तत्तत्क्रियाभेदात्पाचक पाठक इति तद्वद् इति प्रशस्तपादभाष्यार्थ। ६ कार्यस्य=परापरादे प्रत्ययस्य य कारणविशेषो बहुतराल्पतरातीततपनपरिस्पन्दावच्छिन्नकालपिण्डसयोगस्तदपेक्ष काल एकोऽपि परापरादिप्रत्ययहेतु. इति न्यायवार्तिकार्थ इति तात्पर्यटीका० अ० १ आ० २ सू० ३९। ७ देशत सन्निकृष्टयोर्युवस्थविरयोरेकस्मिन् शरीरावस्थाभेदानुमितातीतसूर्योदयास्तमयरूपक्रियाप्रचयबहुत्वान्तरितजन्मनि स्थविरे शरीरावस्थाभेदानुमितातीतसूर्योदयास्तमयरूपक्रियाप्रचयाल्पत्वान्तरितजन्मान युवानमवधि कृत्वा विप्रकृष्टा बुद्धिरुत्पद्यते, तामपेक्ष्य बहुतरसवितुदयास्तमयविशिष्टेन कालप्रदेशेन योगात्स्थविरे परत्वस्योत्पत्तिरित्यादिरूपा हि वैशेषिकादिकल्पना, तत्र मार्तण्डोदयास्तमयक्रियाप्रचयाल्पत्वबहुत्वविशिष्टादेव पिण्डात्परत्वापरत्वे भविष्यत, कृतमत्र द्रव्यान्तरेण कालेनेति साङ्ख्या ।

एवोपाधयोऽनागतादिव्यहारहेतवः कृतमन्तर्गडुना कालेनेति साङ्ख्याचार्याः। तस्मान्न कालरूपतत्त्वान्तराभ्युपगम इति ॥ ३३ ॥

साम्प्रतविषयाणा बाह्येन्द्रियाणा विषयं विवेचयति—

स्तमयक्रियादिरूपैर्वोपाधिभि "अय"=काल अनागतादिव्यवहार परापरादिव्यवहार च भेदेन "प्रतिपद्यते"=प्राप्नोति "त एवोपाधयोऽनागतादिव्यवहारहेतवो" भवन्त्वलम् "अन्तर्गडुना"= अनर्थकेन कालेनेत्यर्थ ।

तथा चाहुर्योगभाष्यकारा –"स खल्वय कालो वस्तुशून्यो बुद्धिनिर्माण शब्दज्ञानानुपाती लौकिकानां व्युत्थितदर्शनाना वस्तुस्वरूप इवावभासते" इति,

केचित्तु "क्षणस्तुवस्तुपतित" इत्युत्तरभाष्यानुरोधात् क्षणादीना कालत्वमेव न वस्त्वन्तरत्वम्, अन्यथा घटपटयोरिव क्षणयोर्द्वयो सहभावापत्ति, क्रमिकत्वानापत्तिश्च, एव च क्षणाद्या सर्वेपि काला सर्ववस्तुपरिणामाधारा इति तत्त्वम्,

न च क्षणस्यैव कालत्वे 'विषम कालो गत' 'क्रूर कालोऽयम्' इति क्षणसमूहात्मकमहाकालादिसाक्षात्कारानुपपत्ति, क्षणातिरिक्तस्य तस्यानङ्गीकारादिति वाच्य, क्षणसमूहानामेकबुद्धिविषयत्वारोपेण तद्व्यवहारोपपत्ते, अत एव "कालनित्यत्वश्रुतिस्मृतयश्च प्रवाहरूपकालरूपा" इति योगवार्तिककृत, एतेन 'पूर्वदेशसयोगाद्यवच्छिन्न परमाणुक्रियैव क्षणस्तदतिरिक्तो नित्यश्च' इति वैशेषिकोक्तमपास्त, तन्मते विशिष्टस्य शुद्धानतिरेकाद्, अतिरिक्तत्वे स्वसिद्धान्तविरोध इत्युभयतस्पाशापत्ते, नित्यकालान्तराभ्युपगमे प्रमाणाभावाच्च,

तस्मात्क्षणादिरूप काल क्षणद्वयाद्यवस्थायिपदार्थान्तरेभ्यो भिन्न एव स्थिरः पदार्थोऽभ्युपेय इति प्राहु ॥ ३३ ॥

"साम्प्रतविषयाणा"=प्रकृतिविषयाणा, "विशेषा "=शान्तघोरमूढलक्षणविशेषरहितानामत

१ यत्प्रागभावेन य कालोऽवच्छिद्यते स तस्यानागतकाल, स्थितेन च वस्तुना य कालोऽवच्छिद्यते स वर्तमानकाल, यत्प्रध्वसेन य कालोऽवच्छिद्यते स तस्यातीतकाल इति हि तार्किकल्पना, तत्रारम्भस्थितिनिरोधक्रियाभिरेवानागतादिव्यवहारसिद्धेरल भेदकालकल्पनयेति भाव । २ योग० पा० ३ सू० ५२। ३ योगवार्तिककारा । ४ 'विघ्नप्राचुर्यदोषात्कृतिरियमधुना नान्तमापाद्य कार्यं किं वेत्येवम्परेणाखिलनिगमविदात्मस्वरूपाभिधेन, शिष्येणातिप्रियेण द्रुतमियमधुना ह्यन्यविद्वन्मुखेन शिष्टा यत्नादकारि त्वविरतविविधार्चादिकार्याकुलेन ॥ १ ॥ यद्वा "भाष्यानुरोधात्क्ष" इत्यन्तमकारि कृतिरञ्जसा, श्री १०८ स्वाम्युदासीनबालरामेण विदुषादरात्, तेष्वन्तिम द्वय नष्ट पत्रयोरादरेण च। श्रीस्वाम्यात्मस्वरूपोदासीनेनातिधनव्ययात्। प्रियशिष्येण महता यत्नेनाकारि पूरणम् ॥ शिष्ट यदेतच्छ्लोकस्य श्लोकस्याप्यग्रिमस्य च। एकेनान्येनाऽऽसमाप्ति कृतेरस्यास्तत परम्। अत्रान्तिममकारीति पदर्थ्य ण्यन्ताण्णिचि च्विण्णन्तम्। ५ आनन्तर्यरूपक्रमस्य प्रतियोग्यनुयोगिघटितत्वेन तस्यानङ्गीकारे प्रतियोग्यनुयोगिघटितक्रमानुपपत्ते । ६ क्षणाख्य काल सत्त्वादीना द्रव्यरूप परिणामविशेष एवेति यावत्। यावता समयेन चलित परमाणु पूर्वदेशमतिक्रामेदुत्तरदेशमुपसङ्गच्छेत च स काल क्षण इति ज्ञेयम्। ७ "विशिष्ट शुद्धान्नातिरिच्यत" इति खलु तदीय समय । ८ "तन्मात्राण्यविशेषाणि अविशेषास्ततो हि ते, न शा ता नापि घोरास्ते न मूढाश्चाविशेषिण" इति विष्णुपुराणे ।

**बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि ।**
**वाग्भवति शब्दविषया शेषाणि तु पञ्चविषयाणि ॥ ३४ ॥**

"बुद्धीन्द्रियाणि" इति । "बुद्धीन्द्रियाणि तेषां"=दशानामिन्द्रियाणां मध्ये "पञ्च विशेषाविशेषविषयाणि"='विशेषाः=स्थूलाः शब्दादयः=शान्तघोरमूढरूपाः पृथिव्यादिरूपाः, अविशेषाः=तन्मात्राणि=सूक्ष्माः, शब्दादयः, मात्रशब्देन भूतभावमपाकरोति, विशेषाश्चाविशेषाश्च=विशेषाविशेषाः, त एव विषया येषां बुद्धीन्द्रियाणां तानि तथोक्तानि ।

---

एवाऽविशेषसञ्ज्ञकाना शब्दस्पर्शरूपरसगन्धतन्मात्राणा=शब्दादिधर्मकसूक्ष्मद्रव्याणा विकारा एता काशवाय्वग्न्युदकभूमय =पञ्च भूतानि='विशेषा'=अभिव्यक्तशान्तादिविशेषका परिणामा., न तु तत्त्वान्तरप्रकृतय एता,

तथाऽस्मितालक्षणस्याभिमानमात्रवृत्तिकस्य श्रवणस्पर्शनदर्शनादिरूपविशेषसहितस्य सत्त्वप्रधानस्याहङ्कारस्य श्रवणस्पर्शनादिधर्मविशेषकाणि पञ्च ज्ञानेन्द्रियाणि, तस्यैव वचनादानविसर्गादिरूपविशेषशून्यस्य रज प्रधानस्याहङ्कारस्य वचनादानगमनविसर्गादिरूपधर्मविशेषकाणि पञ्च कर्मेन्द्रियाणि 'अन्यत्रमना अभूव' 'त्वयोक्त नाश्रौषम्' इत्यादिव्यवहाराच्छ्रोत्रचक्षुरादीना वागादीनां च मनोऽधिष्ठितानामेव स्वस्वविषयेषु प्रवृत्तिरित्युभयप्रधानस्य श्रवणस्पर्शनादिवचनादानादिरूपधर्मविशेषशून्यस्याभिमानमात्रवृत्तिकस्याहङ्कारस्य श्रवणस्पर्शनादिवचनादानादिरूप धर्मविशेषक मनश्च 'विशेषा'=कार्याणीत्यर्थ. ।

ननु पञ्चतन्मात्राणामविशेषत्वे मानाभाव इति चेत्, न, शब्दतन्मात्राणि बुद्धिकारणकानि-अविशेषाद्–अस्मितावदित्यनुमानस्य मानत्वात् "तन्मात्राण्यविशेषाणि" इति विष्णुपुराणाच्च ।

तदेव=तन्मात्र, ते एव=तन्मात्रे, तान्येव=तन्मात्राणि–"मयूरव्यंसकादयश्च' इति (पा० २।१।१२) सूत्रेण समास , तन्मात्र च तन्मात्रे च तन्मात्राणि च तन्मात्राणि च तन्मात्राणि चेत्येकशेषेण तन्मात्राणीति शब्दतन्मात्र स्पर्शतन्मात्र रूपतन्मात्र रसतन्मात्र गन्धतन्मात्र चेत्यर्थ ।

एषूत्तरोत्तर प्रति पूर्वपूर्वस्य हेतुतया शब्दतन्मात्र शब्दतन्मात्रधर्मकम्, एव स्पर्शतन्मात्र शब्दतन्मात्रकार्यतया शब्दस्पर्शमात्रधर्मकम्, एव रूपतन्मात्र शब्दस्पर्शतन्मात्रकार्यतया शब्दस्पर्शरूपमात्रधर्मकम्, एव रसतन्मात्र शब्दस्पर्शरूपतन्मात्रकार्यतदा शब्दस्पर्शरूपरसमात्रधर्मकम्, एव गन्धतन्मात्रं शब्दस्पर्शरूपरसतन्मात्रकार्यतया शब्दस्पर्शरूपरसगन्धमात्रधर्मकमिति यावत् ।

एव च मात्रशब्देन शान्तादिविशेषस्यैव व्यावृत्तिर्न तु पूर्वपूर्वकार्यत्वेनापन्नस्य गुणान्तरस्य,

तन्मात्राणा पूर्वपूर्वकार्यत्वाभ्युपगमे मान तु "आकाशाद्वायु , वायोरग्नि, अग्नेराप , अद्भ्य पृथिवी" इति तैत्तिरीयकोपनिषद्वाक्यम्–कार्याणा कारणगुणपूर्वकत्वाभ्युपगमाद्,

एतानि च तन्मात्राणि तामसाहङ्काराच्छब्दादिक्रमेणोत्पद्यन्ते इत्युक्तम्,

---

१ अहङ्कारस्याविशेषत्वे हेतुरस्मितालक्षणस्येति । २ ससारवृक्षस्यास्तितामात्रपरिणाम =महत्तत्त्व, बुद्धिपरिणामस्त्वहङ्कारादि । ३ तेनेन्द्रियभावापन्नाहङ्कारस्य व्यावृत्ति । ४ स्थूलभावमपाकरोतीति पाठान्तरम् ।

**तत्रोर्ध्वस्रोतसां योगिनां च श्रोत्रं शब्दतन्मात्रविषयं स्थूलशब्दविषयं च, अस्मदादीनां तु स्थूलशब्दविषयमेव। एवं तेषां त्वक् स्थूलसूक्ष्मस्पर्शविषया, अस्मदादीनां तु स्थूलस्पर्शविषयैव। एवं चक्षुरादयोऽपि तेषामस्मदादीनां च रूपादिषु सूक्ष्मस्थूलविषयेषु द्रष्टव्याः।**

---

"ऊर्ध्वस्रोतसाम्"='ऊर्ध्वमेव न कदाचिदध स्रोत=रेत स्रोतो येषा ते' 'जनकसनकसनन्दनादयस्तथा भीष्मादयो नैष्ठिका ब्रह्मचारिण, सन्यासिनोऽपि, तेषाम्'इत्यर्थ, उपकुर्वाणकब्रह्मचारिणा तत्र सम्भवति–तेषा विवाहार्थं प्रवृत्ते, एव च ऊर्ध्वरेतस्त्वम्=अष्टविधमैथुनेच्छारहितत्वम्।

---

१ न च भीष्मस्योर्ध्वरेतस्त्वोक्तिर्युक्ता, यतो महाभारते–"महता राजयोगेन परिवारेण सवृत। स्तूयमानो महातेजा भीष्मस्याग्नीननुव्रजन्। प्राप्तोऽस्मि समये राजन्नग्नीनादाय ते विभो" इति वाक्ये तस्मिन्नग्निहोत्रित्वसूचकदक्षिणाग्निगार्हपत्याहवनीयाख्याग्नित्रयसम्बन्धस्याग्नीनिति बहुवचनेन प्रतीति, तेषा चापत्नीकेन सम्बन्धासम्भवाच्च। पत्न्याश्च विवाहसस्कारेण सपाद्यमानता, स च सस्कार "अपत्य धर्मकार्याणि शुश्रूषा रतिरुत्तमा। दाराधीनस्तथा स्वर्ग पितॄणामात्मनश्च ह" इति, "त्रिंशद्वर्षो वहेत्कन्या हृद्या द्वादशवार्षिकीम्। त्र्यष्टवर्षोऽष्टवर्षी वा धर्मे सीदति सत्वर" इति च मनुना "अनन्यपूर्विका कान्तामसपिण्डा यवीयसीम्। अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्" इति याज्ञवल्क्येन, "कान्ता=वोढुर्मनोनयनानन्दकारिणीम्" इति तद्व्याख्याकृता विज्ञानेश्वरेण चोक्तेरूर्ध्वरेतस्त्वविरुद्ध इति वाच्य–"वैयाघ्रपद्यगोत्राय साङ्कृत्यप्रवराय च। गङ्गापुत्राय भीष्माय आजन्मब्रह्मचारिणे। अपुत्राय ददाम्येतदुदक भीष्मवर्मणे। वसूनामवताराय शन्तनोरात्मजाय च। अर्घ्यं ददामि भीष्माय आबाल्यब्रह्मचारिणे" इति पाद्मे तर्पणार्घ्यदानमन्त्राभ्याम् "अय पितरमाज्ञाय कामार्तं शन्तनु पुरा। ऊर्ध्वरेतसमात्मान चकार" इति महाभारतीयवचनेन चास्य नैष्ठिकब्रह्मचारित्वस्य कण्ठत एवोद्घुष्यमाणत्वात्। तस्याग्निहोत्रादिसम्बन्धाद्युक्तिस्तु ब्रह्मचारिणोऽप्यग्निहोत्रादिक क्वचिद् भवतीत्यनुमितश्रुतिमूला। न च "त्वा हि राज्ये स्थित स्फीते समग्राङ्गमरोगिणम्। स्त्रीसहस्रै परिवृतम्" इति महाभारते तस्य सपत्नीकत्वमुच्यत इति परस्परविरुद्धा एवैता उक्तय इति वाच्यम्। पत्नीभिन्नस्त्रीसम्बन्धोक्त्या विरोधानवतारात्। अत एव तस्यैव चतुर्थचरण "पश्यामीहोर्ध्वरेतसम्" इति पठ्यत इति दिक्। २ "योगिना च"=तद्भिन्नानामष्टाङ्गयोगनिष्ठाना चेत्यर्थ। तदुक्त ब्रह्मवैवर्ते "स्वर्णे लोष्टे गृहेऽरण्ये सुस्निग्धे चन्दने तथा। समताभावना यस्य स योगी परिकीर्तित" इति,भगवद्गीतायामपि–"आत्मौपम्येन सर्वत्र सम पश्यति योऽर्जुन। सुख वा यदि वा दु ख स योगी परमो मत"इति, कौर्मेऽपि–'सर्वकर्माणि सन्यस्य समाधिमचल श्रित। य आस्ते निश्चलो योगी स सन्यासी न पञ्चम' इत्याद्युक्त्वा "योगी च त्रिविधो ज्ञेयो भौतिक साङ्ख्य एव च। तृतीयोत्याश्रमी प्रोक्तो योगमुत्तममास्थित" इति। एव च चित्तस्य स्वत एव स्थूलसूक्ष्मयावदर्थसाक्षात्कारसामर्थ्ये सत्यपि विषयान्तरव्यासङ्गवासनादोषवशेन तत्प्रतिबन्धाद्वृत्त्यन्तरोदय इति स्थूलवस्तुन साक्षात्कार एव दूर गते कुतो वा सूक्ष्मवस्तुन साक्षात्कार इति चेद्=योगेन तत्प्रतिबन्धस्य नि शेषतो विगमे स्वत एव स्थूलसूक्ष्माणा यावता वस्तूना साक्षात्कारो भवतीति तेषा शब्दतन्मात्रादिविषयकं स्थूलशब्दादिविषयक च श्रोत्रादिक भवति, अस्मदादीना तु तद्भिन्नाना स्थूलशब्दादिविषयकमेव तद्भवति न सूक्ष्मशब्दादिविषयकमिति भाव।

एवं कर्मेन्द्रियेषु मध्ये "वाग्भवति शब्दविषया"=स्थूलशब्दविषया-तद्धेतुत्वात् न तु शब्दतन्मात्रस्य हेतुः, तस्याहङ्कारिकत्वेन वागिन्द्रियेण सहैककारणकत्वात्। 'शेषाणि तु'=चत्वारि=पायूपस्थपाणिपादाख्यानि "पञ्चविषयाणि" पाण्याद्याहार्याणां घटादीनां पञ्चशब्दाद्यात्मकत्वादिति ॥ ३४ ॥

साम्प्रतं त्रयोदशसु करणेषु केषाञ्चिद्गुणभावं, केषाञ्चित्प्रधानभावं सहेतुकमाह

**सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात्।**
**तस्मात्त्रिविधं करणं द्वारि द्वाराणि शेषाणि ॥ ३५ ॥**

"सान्तःकरणा" इति। "द्वारि"=प्रधानं"शेषाणि"=करणानि बाह्येन्द्रियाणि "द्वाराणि" गौणानि, तैरुपनीतं "सर्वं विषयं"समनोहङ्कारा "बुद्धिः" "यस्माद्" "अवगाहते"=अध्यवस्यति "तस्माद्" बाह्येन्द्रियाणि द्वाराणि, द्वारवति च सान्तःकरणा बुद्धिरिति ॥ ३५ ॥

न केवलं बाह्येन्द्रियाण्यपेक्ष्य प्रधानं बुद्धिः, अपि तु ये अप्यहङ्कारमनसी द्वारिणी ते अप्यपेक्ष्य बुद्धिः प्रधानमित्याह—

---

ननु वागिन्द्रिय शब्दतन्मात्र प्रति कारण स्याद्, इत्यत आह—"एव कर्मेन्द्रियेषु" इति, वागिन्द्रिय—स्थूलशब्दविषय—स्थूलशब्दहेतुत्वात्—शब्दतन्मात्रवदित्यनुमानाकार । शब्दतन्मात्रस्य वागिन्द्रियस्याप्यहङ्कारादेवोत्पन्नत्वेन[1] तत उत्पन्नयो कार्यकारणभावासम्भवादिति भाव ।

"चत्वारि"=पायूपस्थपाणिपादाख्यानि "पञ्चविषयाणि'=पञ्च विषया येषा तानि, पाण्यादिविषयाणां=पाण्यादिग्राह्याणा घटादीना शब्दस्पर्शरूपरसगन्धात्मकत्वेन शब्दादिपञ्चविषयाणि भवन्तीत्यर्थ । एव च वाक् शब्दमात्रविषया, अन्यानि तु पञ्चविषयाणीति कर्मेन्द्रियेषु वैलक्षण्यमिति भाव ॥ ३४ ॥

द्वारमस्यास्तीति "द्वारि[2]" बाह्यकरणानि द्वारतुल्यानि द्वारविशिष्टगृहतुल्या बुद्धिमुपकुर्वन्ति "तैरुपनीत'=बाह्यकरणैरुपस्थापितम्, "समनोऽहङ्कारा बुद्धि." इति, अन्त करणस्य त्रिविधत्व "त्रिविध करणम्" इति कारिकाशेनाक्षिप्तमेव स्पष्टीकरोति, अवगाहनमत्र न विलोडन किन्तु बुद्धिकर्माध्यवसायपर्यवसायीत्याह—"अवगाहते=अध्यवस्यति" इति, द्वारवती च-सान्त करणा बुद्धिरिति" इति-मनोऽहङ्कारयोरपि द्वारवत्त्वरूप प्राधान्य बाह्यकरणापेक्षयाऽभिमत, बुद्ध्यपेक्षया तु तयोरपि द्वारत्वरूप गौणत्वमेवेत्युपरिष्टात्स्पष्टीकरिष्यति[3] ॥ ३५ ॥

बाह्येन्द्रियापेक्षयाहङ्कारमनसोः प्राधान्य, बुद्ध्यपेक्षया तु तयोरङ्गत्वमेवेत्युपक्षिपति—"न केवलम्"इत्यादिना, मनसोऽल्पाच्तरत्वेऽप्यजाद्यदन्तत्वादहङ्कारस्य पूर्वनिपाताद् "अहङ्कार-

---

१ लोकेप्येकस्मादुत्पन्नयोर्द्वयो कार्यकारणभावो न युज्यत इति प्रसिद्धम्। २ मत्वर्थीय इनि। ३ कारिकाया—३६।

**एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः ।**
**कृत्स्नं पुरुषस्यार्थं[7] प्रकाश्य बुद्धौ प्रयच्छन्ति ॥ ३६ ॥**

"एत"इति । यथा हि ग्रामाध्यक्षाः कौटुम्बिकेभ्यः[1] करमादाय[2] विषयाध्यक्षाय[3] प्रयच्छन्ति, विषयाध्यक्षश्च सर्वाध्यक्षाय[4], स च भूपतये, तथा बाह्येन्द्रियाणि आलोच्य मनसे समर्पयन्ति, मनश्च सङ्कल्प्याहङ्काराय, अहङ्कारश्चाभिमत्य सर्वाध्यक्षभूताया बुद्धौ । तदिदमुक्त–"पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति" इति । बाह्येन्द्रियमनोऽहङ्काराश्च "गुणविशेषाः"=गुणाना=सत्त्वरजस्तमसा विकाराः, ते तु परस्परविरोधशीला अपि पुरुषार्थेन भोगापवर्गरूपेणैकवाक्यता नीताः–यथा–वर्तितैलवह्नयः सन्तमसापनयेन रूपप्रकाशाय मिलिताः प्रदीपे–एवम् "एते गुणविशेषा" इति योजना ॥ ३६ ॥

कस्मात्पुनर्बुद्धौ प्रयच्छन्ति? न तु बुद्धिरहङ्काराय द्वारिणे मनसे वेत्येतं[5] आह–

**सर्वं प्रत्युपभोगं यस्मात्पुरुषस्य साधयति बुद्धिः ।**
**सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम् ॥ ३७ ॥**

"सर्वम्"इति । पुरुषार्थस्य प्रयोजकत्वात्तस्य यत्साक्षात्साधनं तत्=प्रधानं, बुद्धिश्चास्य साक्षात्साधनं, तस्मात्सैव प्रधानं, यथा-सर्वाध्यक्षः साक्षाद्राजार्थसाधनतया प्रधानम् । इतरे तु ग्रामाध्यक्षादयस्तं प्रति गुणभूताः । बुद्धिर्हि पुरुषसन्निधानात्तच्छायापत्त्या तद्रूपेव सर्वविषयोपभोगं "पुरुषस्य साध-

---

मनसी" इति साधु "ते अप्यपेक्ष्य" इति, प्रगृह्यत्वात्सन्ध्यभाव । "कौटुम्बिकेभ्य"=गृहिभ्य "तप षड्भागमक्षय्य ददत्यारण्यका हि न" इत्युक्तत्वात्पूर्वराजभिरारण्यका करगोचरीकृता इति ध्वन्यते, विषयो=जनपदो ग्रामसमूहात्मक "सङ्कल्प्य"=बाह्येन्द्रियोपलब्धक्षणिकसंवेदनस्मृतीरेकत्वेन संग्रथ्येत्यर्थ[6], "अभिमत्य" संवेदनस्मृतिसदर्भमात्मीयत्वेन मत्वेति यावत्, "पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति"=बुद्धावर्थं प्रदाय पुरुषस्य प्रकाशयन्तीत्यर्थ, एकवाक्यताशब्दोऽत्रैककार्यकारितोपलक्षक, विरुद्धानामेकवाक्यताया दृष्टान्तमाह–"वर्तितैल"इति॥३६॥

बुद्धिमनोऽहङ्कारेषु कथमन्त करणत्वाविशेषेऽपि बुद्धे प्राधान्य न त्वितरयोरित्याशङ्कायामाह–"सर्वं प्रत्युपभोगम्" इति, "प्रयोजकत्वात्" प्रकृतिप्रवर्तकत्वादित्यर्थ । "तद्रूपेव"

---

१ कुटुम्ब पोष्यवर्गस्तत्र भवा कौटुम्बिकास्तेभ्यो ग्रामीणकृषीवलेभ्य इत्यर्थ । २ राजग्राह्यभागम् । ३ स्वकीयदेशविशेषस्य जिलेतिनाम्ना प्रसिद्धस्योपरिवर्त्तिनेऽधिकृताय । ४ सर्वेषामध्यक्षाणा सर्वासा प्रजाना वोपरिवर्त्तिनेऽध्यक्षाय प्रधानमन्त्रिणे । ५ मनसे चेत्यत इति पाठान्तरम् । ६ अन्यथा क्षणिकसंवेदनास्वेकस्या अनुभवकालेऽपरासा विनाशात्कस्यापि वस्तुनो यथावद्ग्रहण न स्यादित्यभिसन्धि. । ७ उद्देश्यस्य सम्बन्धत्वेन विवक्षया षष्ठी ।

यति" सुखदुःखानुभवो हि भोगः, स च बुद्धौ, बुद्धिश्च पुरुषरूपेवेति, सा च पुरुषमुपभोजयति—यथाऽर्थालोचनसङ्कल्पाभिमानाश्च तत्तद्रूपपरिणामेन बुद्धावुपसङ्क्रान्ताः—तथेन्द्रियव्यापारा अपि बुद्धेरेव स्वव्यापारेण=अध्यवसायेन सहैकव्यापारी भवन्ति—यथा वा—स्वसैन्येन सह ग्रामाध्यक्षादिसैन्यं सर्वाध्यक्षस्य भवति "सर्वं"=शब्दादिकं "प्रति" य उपभोगः पुरुषस्य तं साधयति।

ननु पुरुषस्य सर्वविषयोपभोगसपादिका यदि बुद्धिः—तर्हि निर्मोक्षः, इत्यत आह—"सैव च" इति। पश्चात् प्रधानपुरुषयोरन्तरं=विशेषं "विशिनष्टि"= करोति—यथौदनपाकं पचतीति। अनेनापवर्गः पुरुषार्थो दर्शितः। ननु प्रधानपुरुषयोरन्तरस्य कृतकत्वादनित्यत्वं, तत्कृतस्य मोक्षस्यानित्यत्वं स्याद्, इत्यत आह—"सूक्ष्मम्" इति। "सूक्ष्मं"=दुर्लक्ष्यं तदन्तरमित्यर्थः। प्रधानं सविकारमन्यद्, अहमन्य इति विद्यमानमेवान्तरमविवेकेनाविद्यमानमिव बुद्धिर्बोधयति न तु करोति येनानित्यत्वमित्यर्थः। करणं चै प्रतिपादनम्॥३७॥

तदेवं करणानि विभज्य विशेषाविशेषान् विभजते—

**तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः।**
**एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च॥ ३८॥**

शब्दादितन्मात्राणि सूक्ष्माणि, न चैषा शान्तत्वादिरस्त्युपभोगयोग्यो

---

इति, इवशब्दोऽवास्तवत्वद्योतक, बुद्धिर्न वस्तुत आत्माभिन्ना तथापि तथाविधा लक्ष्यते लौकिकैरित्यर्थ, अनध्यवसितानामिदन्त्वान्यत्वाभ्यामनिश्चीयमानानामर्थाना पुरुषार्थाप्रयोजकत्वेन बुद्धिव्यापाराध्यवसायसमनुक्रान्तैरेवेन्द्रियव्यापारैः पुरुषार्थसिद्धिरित्याह—"स्वव्यापारेण"इत्यादिना,"स्वसैन्येन"=सर्वाध्यक्षसैन्येन बुद्धिव्यापारस्थानीयेन,'ग्रामाध्यक्षादि इन्द्रियव्यापारस्थानीय, यथा—'पाक पचति' इत्यत्र पचे क्रियासामान्यार्थता—तथा "विशेष विशिनष्टि" इत्यत्र 'अन्तर विशिनष्टि' इति द्वितीयस्य वाक्ये विपूर्वस्य शिषे क्रियासामान्यार्थता, तदेवाह—"यथौदन" इति, "सूक्ष्मम्" इति, अन्तरस्य सूक्ष्मत्वादेवावास्तवोऽपि भोगो वास्तव इवेति भाव, अन्तर सिद्धमेवेति तत्करणमत्र प्रतिपादनोपलक्षणम्॥ ३७॥

"तन्मात्राणि"=तान्येवेति मयूरव्यंसकादित्वान्नित्यसमास, एवशब्दो विग्रहवाक्ये उप-

---

१" त्वादनित्यत्व, तत्कृतकत्व मोक्षस्य स्यादित्यत आह—"सूक्ष्मम्"इति। दुर्लक्ष्यमित्यर्थ। प्रधानादन्य इति विद्यमानमेवान्तरमविवेकिनाऽविद्यमानमिव बुद्धिर्बोधयति न तु करोति येनानित्यत्वमित्यर्थ। तदन्तरकरण च=प्रतिपादनम्। अनेनापवर्ग पुरुषार्थो दर्शित इति श्लोकान्तव्याख्याया पाठान्तरम्। २ 'आह'—"विशिनष्टि" प्रधान सविकार' इति क्वचित्पाठ। ३ 'तेनापवर्ग=पुरुषार्थो दर्शित। "सूक्ष्म"=दुर्लक्ष्य तदन्तरमित्यर्थ' इति क्वचित्पाठ। ४ प्रतिपादनार्थक एवात्रकृधातुर्नतूत्पत्त्यर्थ इत्यर्थ। ५ उत्प्रेक्षावाचकस्येवशब्दस्यावास्तवत्त्वद्योतकत्व प्रसिद्धम्।

विशेष इति मात्रशब्दार्थः। अविशेषानुक्त्वा विशेषान् वक्तुमुत्पत्तिमेषामाह "तेभ्यः"=तन्मात्रेभ्यो यथासङ्ख्यमेकद्वित्रिचतुःपञ्चभ्यो "भूतानि"=आकाशानिलानलसलिलावनिरूपाणि "पञ्च"। "पञ्चभ्यः"=तन्मात्रेभ्योऽस्त्वेषा भूतानामुत्पत्तिः, विशेषत्वे किमायातम्? इत्यत आह "एते स्मृता विशेषा" इति, कुतः? "शान्ता घोराश्च मूढाश्च"। चकार एको हेतौ, द्वितीयः समुच्चये। यस्मादाकाशादिषु स्थूलेषु सत्त्वप्रधानतया केचिच्छान्ताः=सुखाः[1]=प्रसन्नाः=लघवः, केचिद्रजःप्रधानतया घोराः=दुःखाः=अनवस्थिताः, केचित्तमःप्रधानतया मूढाः=विषण्णाः[2]=गुरवः। तेऽमी परस्परव्यावृत्ता अनुभूयमाना 'विशेषा' इति, 'स्थूला' इति चोच्यन्ते, तन्मात्राणि त्वस्मदादिभिः परस्परव्यावृत्तानि नानुभूयन्ते इति 'अविशेषा' इति, 'सूक्ष्मा' इति चोच्यन्ते ॥३८॥

विशेषाणामवान्तरविशेषमाह—

**सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः।**
**सूक्ष्मास्तेषां नियता मातापितृजा निवर्तन्ते ॥ ३९ ॥**

"त्रिधा विशेषाः स्युः"। तान् विशेषप्रकारानाह—"सूक्ष्मा" इत्यादि। सूक्ष्मदेहाः परिकल्पिताः "मातापितृजाः" षाट्कौशिकाः—तत्र मातृतो लोम-

भोगयोग्यस्थूलविशेषयोगव्यवच्छेदार्थ, "विशेषान्वक्तुम्" इति "तुमुन्ण्वुलौ क्रियायाम्" इति (३।३।१०। पा०) सूत्रेण तुमुन्, विशेषोक्तिफलिका मत्कर्तृका वर्तमानकालिक्येषामुत्पत्त्युक्तिरिति बोध, "एकद्वि" इत्यादि, आकाशतन्मात्रात्केवलादाकाशमुत्पद्यते, तस्मादेव वायुतन्मात्रसहिताद्वायु, आकाशवायुतन्मात्राभ्या तेजस्तन्मात्रसहिताभ्या वह्नि, आकाशवायुतेजस्तन्मात्रेभ्योऽप्तन्मात्रसहितेभ्यो जलम्, आकाशवायुतेजोऽप्तन्मात्रेभ्य क्षितितन्मात्रसहितेभ्योऽवनिरुत्पद्यत इति फलितोऽर्थ[3], मितसारवचसाचार्येणोपन्यस्ते चद्वये नैकेनापि पादपूरणार्थकेन भवितव्यमित्यभिप्रेत्याह—"चकार एक" इति, तथा च यत एते शान्ता घोरा मूढाश्च तत एषां विशेषत्वमित्यर्थ, शान्तघोरमूढशब्दैश्चात्र गुणत्रयधर्मा उपलक्षिता इत्याह—"सत्त्वप्रधानतया" इत्यादि, "परस्परव्यावृत्तानि"=इतरेतर भिन्नानि ॥ ३८ ॥

"परिकल्पिता."=अनुमानगम्या न तु स्थूलशरीरवत्प्रत्यक्षोपलब्धा, ननु सूक्ष्माणा तन्मात्राणामविशेषत्वमुक्तम्, अत्र पुन सूक्ष्मदेहाना विशेषमध्ये कथ परिगणनमिति चेद्—इन्द्रियै शान्तघोरमूढैरन्वितत्वात्सूक्ष्मदेहाना विशेषत्वमित्येतदुपद[4] स्फुटीभविष्यति। षड्भि कोशैर्निर्मिता ="षाट्कौशिका" के ते षट् कोशा? कुतो वा ते शरीरमुपसङ्क्रामन्ति? इत्यत आह—"मातृतो लोम" इत्यादि, "रसान्ता"=रसा पृथिवी सैवान्ते येषा ते=पृथिवीभावापन्ना इत्यर्थ।

१ अस्ति सुख येषा येषु वा ते सुखा सुखिन इत्यर्थ, अर्श आदित्वेनाच् प्रत्ययान्ततया तत्सिद्धिरेवमन्यत्रापि। २ विषादयुक्ता खिन्ना इत्यर्थ। ३ एतच्च नैयायिकाना सम्मत, 'पञ्चीकृतेभ्यो भूतेभ्य स्थूलभूतान्युत्पद्यन्ते' इति वेदान्तिनयेन तु विरुद्धम्। ४ कारिकास० ४०।

लोहितमांसानि–पितृतः स्नाय्वस्थिमज्जान इति षट्को गणः, 'प्रकृष्टानि'= महान्ति भूतानि=प्रभूतानि तैः "सह"। सूक्ष्मशरीरमेको विशेषः, मातापितृजो द्वितीयः, महाभूतानि तृतीयः। महाभूतवर्गे च घटादीना निवेश इति । सूक्ष्ममातापितृजयोर्देहयोर्विशेषमाह-"सूक्ष्माः" "तेषा"=विशेषाणा मध्ये ये-ते "नियताः"=नित्याः, "मातापितृजाः" तु "निवर्तन्ते" रसान्ता वा, भस्मान्ता वा विडन्ता वेति ॥ ३९ ॥

सूक्ष्मशरीरं विभजते—

**पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम् ।**
**संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ॥ ४० ॥**

"पूर्वोत्पन्नम्" इति । "पूर्वोत्पन्नं"=प्रधानेनादिसर्गे प्रतिपुरुषमेकैकमुत्पादितम्, "असक्तम्"=अव्याहतं शिलामप्यनुप्रविशति, "नियतम्"–आ चादिसर्गादा च महाप्रलयादवतिष्ठते, "महदादिसूक्ष्मपर्यन्तं"=महदहङ्कारैकादशेन्द्रियपञ्चतन्मात्रपर्यन्तम्-एषा समुदायः=सूक्ष्मशरीरं शान्तघोरमूढैरिन्द्रियैरन्वितत्वाद्विशेषः ।

नन्वस्त्वेतदेव शरीरं भोगायतनं पुरुषस्य, कृतं दृश्यमानेन षाट्कौशिकेन शरीरेणेत्यत आह–"संसरति" इति, उपात्तमुपात्तं षाट्कौशिकं शरीरं जहाति, हायंहायं=हित्वाहित्वा चोपादत्ते । कस्मात्? "निरुपभोग" यतः षाट्कौशिकं शरीरं विना सूक्ष्मं शरीरं निरुपभोगं, तस्मात्संसरति ।

ननु धर्माधर्मनिमित्तः संसारः, न च सूक्ष्मशरीरस्यास्ति तद्योगः=ताभ्यां धर्माधर्माभ्यां साकं योगः तत्कथं संसरति? इत्यत आह–'भावैरधिवासितं'=

---

"विट्"=विष्ठा, तिस्रो ह्यवसाने शरीरस्य गतयः–क्षितौ निर्वातस्य गलितस्य क्षितिभावो, दग्धस्य भस्मीभावः, क्रव्याद्भिर्भुक्तस्य च विष्ठात्वापत्तिरिति भावः ॥ ३९ ॥

सूक्ष्मशरीरस्य सूक्ष्मत्वात्तन्मात्रवदविशेषत्वं कुतो न? इति समुत्थितामाशङ्कामपाकरोति–"शान्तघोर" इत्यादिना, सूक्ष्मशरीरस्य बाह्यकर्मानुष्ठानमेव नास्ति, धर्माधर्मादयो बौद्धा भावास्तु तदधिवसन्त्येव बुद्धिद्वारेण, तत एव चास्य संसरणमित्याह–"धर्माधर्म" इत्यादि,

---

१ सूक्ष्मशरीरम् । २ सूक्ष्मं पञ्चतन्मात्रम् । तदेव पर्यन्तं सीमा यस्य कदम्बस्य तत्तथोक्तम्, महानादिर्यस्य वृन्दस्य तत्तथाविधं तच्च तत्सूक्ष्मपर्यन्तं चेति कर्मधारयस्तदेव व्यनक्ति एषामिति एषा महदहङ्कारादीनाम् । ३ क्रव्यं मांसं अदन्ति खादन्ति ये ते क्रव्यादास्तैः सिंहाऽसुरगृध्रादिमांसाशिभिरित्यर्थः ।

धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि=भावाः, तदन्विता बुद्धिः' तदन्वित च सूक्ष्मशरीरमिति तदपि भावैरधिवासितं,यथा—सुरभिचम्पकसंपर्काद्वस्त्रं तदामोदवासितं भवति । तस्माद्भावैरेवाधिवासितत्वात्संसरति। कस्मात्पुनः प्रधानमिव महाप्रलयेऽपि तच्छरीरं न तिष्ठति? इत्यत आह—"लिङ्गम्" लयं गच्छतीति लिङ्गं, हेतुमत्त्वेन चास्य लिङ्गत्वमिति भावः ॥ ४० ॥

स्यादेतद्—बुद्धिरेका साहङ्कारेन्द्रिया कस्मान्न संसरति? कृतं सूक्ष्मशरीरेणाप्रामाणिकेनेत्यत आह—

**चित्रं यथाश्रयमृते स्थाण्वादिभ्यो विना यथा च्छाया ।**
**तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम् ॥ ४१ ॥**

'लिङ्गनाद्=ज्ञापनाद्बुद्ध्यादयो'="लिङ्गं" तदनाश्रितं"न तिष्ठति" । जन्मप्रायणान्तराले बुद्ध्यादयः-प्रत्युत्पन्नशरीराश्रिताः-प्रत्युत्पन्नपञ्चतन्मात्रवत्त्वे सति बुद्ध्यादित्वाद्-दृश्यमानबुद्ध्यादिवत् । "विना विशेषैः" इति । सूक्ष्मैः शरीरैरित्यर्थः । आगमश्चात्र भवति—"अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलाद्" इति । अङ्गुष्ठमात्रत्वं सूक्ष्मतामुपलक्षयति । आत्मनो निष्कर्षासंभवेन सूक्ष्ममेव शरीरं पुरुषः । तदपि हि पुरि=स्थूलशरीरे शेते ॥ ४१ ॥

---

यद्यत्प्राकृत तत्तत्सर्वं त्रिगुणमयत्वाद्धर्माधर्मादिसत्त्वकमेव, गुणातीतत्वात्पुरुष एको वस्तुतो धर्माधर्माद्यसंबद्ध , तस्मात्सूक्ष्मत्वेऽपि लिङ्गशरीरस्य धर्मादिसबन्धोऽस्त्येवेति सिद्धान्त , कस्मान्महाप्रलयेऽपि लिङ्गशरीरस्य लय इत्याकाङ्क्षायामाह—"हेतुमत्त्वेन"इति, यद्यद्धेतुमत्=कारणवत्=कार्यमिति यावत्, तस्य स्वकारणे लयोऽवश्यम्भावीति व्याप्तिग्रहात्प्रधानकार्यस्य सर्वस्यापि साक्षात्परम्परया वा प्रधाने लय , ततश्च सूक्ष्मशरीरस्यापि लयो महाप्रलये भवत्येव ॥ ४० ॥

"अप्रामाणिकेन"इति, प्रत्यक्षानुपलब्धेनेति भाव , अनुमानाच्छ्रुतिस्मृतिभ्या च तत्सिद्धिर्हि प्रतिपादयिष्यते, अत्र लिङ्गशब्दस्य व्युत्पत्तिलभ्यो बुद्ध्यादिरर्थ इत्याह—"लिङ्गनाद्"इति, व्याप्तिपक्षधर्मताज्ञानपूर्वकमनुमान सूक्ष्मशरीरावस्थानसाधकमुपन्यस्यति—"जन्म"इत्यादिना, प्रायण=मृत्यु , अङ्गुष्ठमात्रत्व पुरुषस्यात्र सूक्ष्मत्वोपलक्षकमित्युक्त, "हृद्यपेक्षया तु मनुष्याधिकारत्वाद्"[1] इति बादरायणीयसूत्रेण तु मनुष्यहृदयसबद्धत्वादङ्गुष्ठमात्रत्वमुक्तम्, आत्मनो दिक्कालाद्यनवच्छिन्नस्य न प्राक् प्रवेशाद्देहे न वा पश्चात् ततो निष्कर्षण सभावयितु शक्यत इति सूक्ष्मशरीरस्योत्क्रान्तिगत्यागतिप्रभृतीनि कर्माणीत्याह—"आत्मन" इत्यादिना, "तदन्तरप्रतिपत्तौ[2] रहतिसपरिष्वक्त प्रश्ननिरूपणाभ्याम्"[3]इत्यादिनापि भूतसूक्ष्मे सहितस्यैवेन्द्रियादेरुत्क्रमणमुक्तं—तदप्यत्रानुसन्धेयम्, सूक्ष्मशरीरस्य पुरुषत्व कथम्? इत्यत आह—"पुरि स्थूल"इत्यादिना ॥४१॥

---

१ वेदा० सू० ( २।३।२५ )। २ देहान्तरप्रतिपत्तौ देहबीजैर्भूतसूक्ष्मै सपरिष्वक्तो रहति गच्छतीत्यवगन्तव्यम् , कुत , प्रश्नप्रतिवचनाभ्याम्। ३ वेदा० सू० ( ३।१।१ )।

एवं सूक्ष्मशरीरास्तित्वमुपपाद्य—यथा संसरति, येन च हेतुना, तदुभयमाह—

**पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसङ्गेन ।**
**प्रकृतेर्विभुत्वयोगान्नटवद् व्यवतिष्ठते लिङ्गम् ॥ ४२ ॥**

पुरुषार्थेन हेतुना प्रयुक्तं, निमित्तं=धर्मादि, नैमित्तिकं, तेषुतेषु निकायेषु यथायथं षाट्कौशिकशरीरग्रहः । स हि धर्मादिनिमित्तप्रभवः । निमित्तं च नैमित्तिक च तत्र यः प्रसङ्गः=प्रसक्तिस्तया । "नटवद् व्यवतिष्ठते" "लिङ्गं"= सूक्ष्मशरीरं, यथा हि—नटस्ताता भूमिकां विधाय परशुरामो वाऽजातशत्रुर्वा वत्सराजो वा भवति-एवं तत्तत्स्थूलशरीरग्रहणाद् देवो वा, मनुष्यो वा, पशुर्वा, वनस्पतिर्वा, भवति—सूक्ष्मं शरीरमित्यर्थः । कुतस्त्यः पुनरस्येदृशो महिमा? इत्यत आह—"प्रकृतेर्विभुत्वयोगात्" । तथा च पुराणं—"वैश्वरूप्यात्प्रधानस्य परिणामोऽयमद्भुतः" इति ॥ ४२ ॥

"निमित्तनैमित्तिकप्रसङ्गेन" इत्युक्तं, तत्र निमित्तं नैमित्तिक च विभजते—

**सांसिद्धिकाश्च भावाः प्राकृतिका वैकृताश्च धर्माद्याः ।**
**दृष्टाः करणाश्रयिणः कार्याश्रयिणश्च कललाद्याः ॥ ४३ ॥**

"वैकृताः "=वैकृतिकाः=नैमित्तिकाः " प्राकृतिकाः "=स्वाभाविकाः= "सासिद्धिका भावाः" यथा-सर्गादावादिविद्वान् भगवान् कपिलो महामुनिर्धर्मज्ञानवैराग्यैश्वर्यसंपन्नः प्रादुर्बभूवेति स्मरन्ति । " वैकृताश्च भावाः"=असा-

---

"पुरुषार्थेन" इति, सूक्ष्मशरीरस्य संसरणे पुरुषार्थं एवोद्देश्य, धर्मादि च प्रवर्तक=कारण, स्थूलशरीरग्रहणं च धर्मादिकृतमव्यवहित फल, धर्मादौ स्थूलशरीरग्रहणकारणप्रसङ्गेन स्थूलशरीरग्रहण, गृहीत्वा चेदृश शरीर पुनर्धर्मादौ प्रवृत्तिरिति संसरणानुपरम आ विवेकाद्, अन्योऽन्याश्रयदोषस्त्वनादित्वेन संसृतेर्बीजाङ्कुरवद् वारणीय इत्यभिप्रायः, "भूमिकां"=वर्णिकापरिग्रह=पात्रविशेषवेषादिकमिति यावद्, "अजातशत्रु"=युधिष्ठिर, परशुरामो, वीरचरितादौ—युधिष्ठिरो वेणीसंहारादौ—वत्सराजश्च रत्नावल्यादावित्यनुसन्धेयम्, सूक्ष्मशरीरस्य कुतो वैश्वरूप्यम्? इत्यत आह—"प्रकृते." इति, वैश्वरूप्य=नानारूपत्वम् ॥ ४२ ॥

धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि निमित्तरूपा. करणाश्रिताः भावा, तत्कृता संसृति, एते च भावा द्विविधा.—स्वभावसिद्धा पुरुषप्रयत्नसाध्याश्च, स्वभावसिद्धा प्राकृतिका उच्यन्ते, प्रयत्नसाध्याश्च वैकृतिका उच्यन्ते, प्राकृतिकाना धर्मादीनाम् उत्तमभावानामुदाहरण—भगवान् कपिल., वैकृतिकाना च तेषामेवोदाहरणं—भगवान् वाल्मीकि, अधमानामधर्मादिभावाना चोभयविधाना स्वाभाविकास्वाभाविकानामुदाहरणान्यूह्यानीत्येतमर्थमाह—"वैकृताश्च"

---

१ भोगापवर्गलक्षण पुरुषार्थो हेतु प्रवर्तका यस्य लिङ्गस्य तत्तथोक्तम् । २ "वैकृतिका" इति पाठस्तु छन्दोभङ्गभयादुपेक्षणीय ।

सिद्धिकाः=उपायानुष्ठानोत्पन्नाः-यथा प्राचेतैसप्रभृतीनां महर्षीणाम् । एवमधर्माज्ञानावैराग्यानैश्वर्याण्यपि । एते कुत्र दृष्टाः ? इत्यत आह-"करणाश्रयिण" इति । करणं=बुद्धिसत्त्वं, कार्यं=शरीरं, तदाश्रयिणः । तस्यावस्थाः=कललबुद्बुदमांसपेशीकरण्डाङ्गप्रत्यङ्गव्यूहाः गर्भस्थस्य,ततो विनिर्गतस्य बालस्य बाल्यकौमारयौवनवार्द्धकानीति ॥ ४३ ॥

अवगतानि निमित्तनैमित्तिकानि, कतमस्य तु निमित्तस्य कतमन्नैमित्तिकमित्यत आह—

**धर्मेण गमनमूर्ध्वं गमनमधस्ताद्भवत्यधर्मेण ।**
**ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः ॥ ४४ ॥**

"धर्मेण गमनमूर्ध्वं" द्युप्रभृतिषु लोकेषु, "गमनमधस्ताद्भवत्यधर्मेण" भूतलादिषु, "ज्ञानेन चापवर्गः" तावदेव प्रकृतिरारभ्यते न यावद्विवेकख्यातिं करोति, अथ विवेकख्यातौ सत्या कृतकृत्यतया विवेकख्यातिमन्तं पुरुषं प्रति निवर्तते । यदाहुः-"विवेकख्यातिपर्यन्तं ज्ञेयं प्रकृतिचेष्टितम्" इति । "विपर्ययाद्"=अतत्त्वज्ञानाद्, "इष्यते बन्धः" स च त्रिविधः—प्राकृतिको, वैकृतिको, दाक्षिणकश्चेति । तत्र प्रकृतावात्मज्ञानाद् ये प्रकृतिमुपासते-तेषां प्राकृतिको बन्धो-यः पुराणे प्रकृतिलयान् प्रत्युच्यते-"पूर्णं शतसहस्रं तु तिष्ठ-

---

इत्यादिना="एवमधर्माज्ञानावैराग्यानश्वर्याण्यपि"इत्यन्तेन, तथा चैते भावा करणाश्रिता ,तथा तत्कार्यं नैमित्तिकस्वरूप यच्छरीरं तदाश्रिता =कललाद्यवस्थाश्रिता , तत्र कललं, बुद्बुद , मास, पेशी, करण्डोङ्गं, प्रत्यङ्गं, व्यूहश्चेति-क्रमादुत्तरोत्तरभाविनो गर्भस्थजन्तुशरीरस्य परिणामा , गर्भान्निर्गतस्य तु तस्यैव बाल्यादिकाश्चत्वार परिणामा ,—गर्भस्थस्यायुर्वेदीयशरीरस्थानाद्, गर्भाद्बहिर्भूतस्य तु परिणामा लोकत स्वय निरीक्षणीया , अत्र कलल=वीर्यरजसोर्मिश्रीभाव , बुद्बुद =तयोर्वर्तुलीभाव , मास=घनीभाव , पेशी=मासस्य कोशीभावरूपो भाग , करण्ड —ततोऽप्यधिककठिनतरो भाग , सर्वथा पूर्णत्व चाङ्गानामङ्गप्रसङ्गव्यूहविभागशब्देनोच्यते ॥४३॥

कथ ज्ञानेनापवर्ग इत्याह—"तावदेव"इति, विवेकख्यातिं प्रति शनै शनै प्रकृति स्वय प्रवर्तते, तदेव हि तस्या अन्तिममुद्देश्य, तच्च साधयित्वा साध्यान्तराभावाद् यस्य पुरुषस्यापवर्गो जातस्ततो निवर्तते इति भाव., अयमेवार्थोऽन्यैरप्युक्त इति दर्शयति—"यदाहु "इति, "विवेकख्यातिपर्यन्तम्"इति,=तत्तत्पुरुषविवेकख्यातिपर्यन्त तत्तत्पुरुषविषये प्रकृतिव्यापारस्यावस्थानमित्यर्थः, शरीरात्मवादिनश्चार्वाकाद्या प्राकृतिकविपर्ययबद्धा प्रकृतौ लयो=अवधान येषा ते प्रकृतिलयास्तान् "प्रकृतिलयान्" वैकृतिकदाक्षिणकशब्दावद्यपदं व्याख्यातव्याविति नात्र

---

१ प्रचेतसोऽपत्य पुमान्, वाल्मीकिरित्यर्थ । २ यद्वा प्रकृतावात्मत्वेनाभिमताया लयो विलयो येषा तान्।

न्त्यव्यक्तचिन्तकाः" इति, वैकारिको बन्धस्तेषा–ये विकारानेव=भूतेन्द्रियाहङ्कारबुद्धीः पुरुषबुद्ध्योपासते, तान्प्रतीदमुच्यते—

"दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः।
भौतिकास्तु शत पूर्ण सहस्र त्वाभिमानिकाः॥
बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः।
"ते खल्वमी विदेहा येषां वैकृतिको बन्धः" इति॥

इष्टापूर्तेन दाक्षिणकः–पुरुषतत्त्वानभिज्ञो हीष्टापूर्तकारी कामोपहतमना बध्यत इति॥ ४४॥

**वैराग्यात्प्रकृतिलयः संसारो भवति राजसाद्रागाद्।**
**ऐश्वर्यादविघातो विपर्ययात्तद्विपर्यासः॥ ४५॥**

"वैराग्यात्प्रकृतिलयः"–पुरुषतत्त्वानभिज्ञस्य वैराग्यमात्रात्प्रकृतिलयः,=प्रकृतिग्रहणेन प्रकृतिकार्यमहदहङ्कारभूतेन्द्रियाणि गृह्यन्ते–तेष्वात्मबुद्ध्योपास्यमानेषु लयः। "संसारो भवति राजसाद्रागाद्"। राजसादित्यनेन रजसो दुःखत्वात्संसारस्य दुःखता सूचिता। "ऐश्वर्यादविघातः"–इच्छायाः। ईश्वरो हि यदिच्छति तत्करोति। "विपर्ययाद्"=अनैश्वर्यात् "तद्विपर्यासः"=सर्वत्रेच्छाविघात इत्यर्थः॥ ४५॥

बुद्धिधर्मान्=धर्मादीनष्टौ भावान् समासव्यासाभ्या मुमुक्षूणां हेयोपादेयान्दर्शयितुं प्रथमतस्तावत्समासमाह–

---

व्याख्यातौ, "अव्यक्तचिन्तका"=प्रकृतिभावनापरा, ये पुन प्रकृतिमपि=जगन्मूलभूता निरस्य तद्विकारान्=स्थूलभूतादीनेवोपासते–ते=वैकृतिका, एतेऽपि चार्वाकभेदा एव, "विदेहा" विविधदेहविशिष्टा–जन्ममरणप्रवाहपतितत्वाद्, दक्षिणासबद्धा=दाक्षिणका., तल्लक्षण विशदयति–"इष्टापूर्तेन" इत्यादिना॥

"इष्टापूर्तकारी कामोपहतमना बध्यत इति"इति, तदामनन्ति छन्दोगा–"अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति" इति, एतच्छ्रुतेरिष्टादिकारिणा धूमादिदक्षिणमार्गगामित्वादपि दाक्षिणकत्वमित्यवगन्तव्यम्॥ ४४॥

रागस्य रजोमयत्वं सिद्धमेवेति "राजसाद्" इति विशेषणम् 'उष्णो वह्नि' इति वह्नेरुष्णत्वविशेषणवदनावश्यकमित्याशङ्क्य समाधत्ते–"ससारस्य दु खता सूचिता"इति, कस्याविघात इत्याकाङ्क्षायामाह–"इच्छाया" इति॥ ४५॥

---

१ छान्दो० उ० (५।१०।३)

**एष प्रत्ययसर्गो विपर्ययाऽऽशक्तितुष्टिसिद्ध्याख्यः ।**
**गुणवैषम्यविमर्दात्तस्य च भेदास्तु पञ्चाशत् ॥ ४६ ॥**

प्रतीयतेऽऽनेनेति प्रत्ययो=बुद्धिः–तस्य सर्गः । तत्र विपर्ययः=अज्ञानम्=अविद्या च–बुद्धिधर्मः, अशक्तिरपि करणवैकल्यहेतुका बुद्धिधर्म एव, तुष्टि-सिद्धी अपि वक्ष्यमाणे बुद्धिधर्मावेव। तत्र विपर्ययाशक्तितुष्टिषु यथायोगं सप्तानां च धर्मादीनां ज्ञानवर्जमन्तर्भावः, सिद्धौ च ज्ञानस्येति । व्यासमाह "तस्य च भेदास्तु पञ्चाशद्"इति । कस्मात्? "गुणवैषम्यविमर्दाद्" इति,='गुणाना वैषम्यम्=एकैकस्याधिकबलता द्वयोर्द्वयोर्वा, एकैकस्य न्यूनबलता द्वयोर्द्वयोर्वा, ने च न्यूनाधिक्ये मन्दमध्याधिक्यमात्रतया यथाकार्यमुन्नीयेते, तदिदं गुणानां वैषम्यं, तेनोपमर्दः=एकैकस्य न्यूनबलस्य द्वयोर्द्वयोर्वाऽभिभवः, नस्मात्' "तस्य भेदाः पञ्चाशद्" इति ॥ ४६ ॥

तानेव पञ्चाशद्भेदान् गणयति–

**पञ्च विपर्ययभेदा भवन्त्यशक्तिश्च करणवैकल्याद् ।**
**अष्टाविंशतिभेदा तुष्टिर्नवधाष्टधा सिद्धिः ॥ ४७ ॥**

अविद्याऽस्मितारागद्वेषाभिनिवेशा यथासङ्ख्यं तमोमोहमहामोहतामिस्रा-न्धतामिस्रसंज्ञकाः=पञ्च विपर्ययविशेषाः–विपर्ययप्रभवाणामस्मितादीनां वि-पर्ययस्वभावत्वाद्, यद्वा, यदविद्यया=विपर्ययेणावधार्यते वस्तु–अस्मितादय-

---

समास =सक्षेपो, व्यासश्च=तद्विपरीतो विस्तर , "तस्य"=प्रत्ययस्य बुद्ध्यर्थकस्य विपर्ययो=अज्ञानम्=अविवेति पर्याया , करणवैकल्यम्=इन्द्रियदोष , तेन च परम्परया बुद्धिदोषा उत्पद्यन्ते इति तस्य बुद्धिधर्मत्वमुपपन्न, "सप्ताना"=धर्माधर्माज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणा, "ज्ञानस्य" केवलस्य सिद्धिरूपत्वादन्येषा विपर्ययादिष्वन्तर्भाव , कस्य ? कुत्रान्तर्भाव ? इति त्वग्रे स्पष्टी भविष्यति, सत्त्वरजस्तमसा वैषम्ये=न्यूनाधिकबलत्वरूपे समापन्ने सति तेन वैषम्येण प्रवर्त्तितो योऽधिकबलैर्गुणै कृतो न्यूनबलानामुपमर्दस्तन्मूलकाना पञ्चाशद्भेदाना प्रत्ययसर्गाणां किं स्वरूप ? के च ते भेदा ? इत्यग्रे स्फुटी भविष्यति ॥ ४६ ॥

"पञ्चविपर्ययविशेषा" इति, क्लेशशब्देन एते योगदर्शन उक्ता भगवता पतञ्जलिना– "अविद्याऽस्मितारागद्वेषाभिनिवेशा. पञ्च क्लेशा " इति, "क्लेशा इति–पञ्च विपर्यया" इति च तत्र व्यासभाष्यम्,

अविद्यादीनां स्वरूप योगशास्त्रे स्पष्टम्–"अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्म-

---

१ विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्" इति यो० सू० ( १।८ )। २ कारिकाया–४७ । ३ यो० सू०–( २।३ )।

स्तत्स्वभावाः सन्तस्तदभिनिविशन्ते। अत एव "पञ्चपर्वा अविद्या" इत्याह भगवान् वार्षगण्यः ॥ ४७ ॥

संप्रति पञ्चानां विपर्ययभेदानामवान्तरभेदानाह–

**भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः।**
**तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः ॥ ४८ ॥**

"भेदः" "तमसः"=अविद्यायाः "अष्टविधः" अष्टस्वव्यक्तमहदहङ्कार-पञ्चतन्मात्रेष्वनात्मस्वात्मबुद्धिः=अविद्या=तमः, अष्टविधविषयत्वात्तस्याष्ट-विधत्वम्। "मोहस्य च" इति। अत्रापि 'अष्टविधो भेद' इति चकारेणानु-षज्यते। देवा ह्यष्टविधमैश्वर्यमासाद्यामृतत्वाभिमानिनोऽणिमादिकमात्मीयं शाश्वतिकमभिमन्यन्त इति सोयमस्मितामोहोऽष्टविधैश्वर्यविषयत्वाद् "अष्ट-विधः"। "दशविधो महामोह" इति। शब्दादिषु पञ्चसु दिव्यादिव्यतया दशविधेषु विषयेषु रञ्जनीयेषु रागः=आसक्तिः="महामोहः" स च दश-विधविषयत्वाद् "दशविधः" "तामिस्रः"=द्वेषः–"अष्टादशधा"=शब्दादयो दश विषया रञ्जनीयाः स्वरूपतः, ऐश्वर्यं त्वणिमादिकं न स्वरूपतो रञ्ज-नीयं, किन्तु रञ्जनीयशब्दाद्युपायाः, साधनतमाः ते च शब्दादय उपस्थिताः

---

ख्यातिरविद्या[1]", "दृग्दर्शनशक्त्योरेकात्मतेवाऽस्मिता[2]" "सुखानुशयी राग[3]", "दुःखानुशयी द्वेष[4]", "स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेश[5]" एतेषां सूत्राणा भाष्यानुसार्यर्थस्तु विस्तरभयान्नात्रोपन्यस्त।

अविद्यादीना सज्ञान्तराण्याह–"तम" इति, अस्मितादीनामवस्तुस्वभावत्वमवस्तुनोऽवधारण चाविद्यया, विद्यया तु वस्तुनोऽवधारणमिति सर्वेषा विदितमेव, "पञ्चपर्वा"=एकापि सती पञ्चशाखाविशिष्टेव, "वार्षगण्य=कश्चित्साङ्ख्याचार्य ॥ ४७ ॥

अष्टविधैनैश्वर्येणात्राणिमादयोऽष्टसिद्धयोऽभिप्रेता, "दिव्यादिव्यतया" इति, अदिव्या= भौमा शब्दादयो वादित्रादिसभवा, दिव्यास्त्वभौमा अशन्यादिसभवास्तेष्वासक्तिश्च–प्रायो दिव्येषु दिव्यानामदिव्येषु च पार्थिवानामित्यवगन्तव्यं, "रञ्जनीया."=रागार्हाः–आसक्तिविषया इति यावद्, अणिमादिषु तु साक्षादासक्तिविषयता न ह्यणिमाद्यर्थं–किन्तु शब्दाद्यर्थमणिमादय सेव्यन्ते इति तेषा न स्वरूपतो रञ्जनीयत्व, किन्तु परम्परया शब्दादीनां परस्परोपपातेऽनु-कूलेषु रागात्, प्रतिकूलेषु=प्रतिघातकेषु कोपनीयत्वे द्वेषविषयत्वम्, अणिमादीनां त्वलभ्यत्वा-

---

१ यो० सू०–(२।५)। २ यो० सू०–(२।६)। ३ यो० सू०–(२।७)। ४ यो० सू०–(२।८)। ५ यो० सू०–(२।९)।

परस्परेणोपहन्यमानास्तदुपायाश्चाणिमादयः स्वरूपेणैव कोपनीया भवन्तीति शब्दादिभिर्दशभिः सहाणिमादिकमष्टादशधेति तद्विषयो द्वेषः=तामिस्रोऽष्टादशविषयत्वाद् अष्टादशधा, इति। "तथा भवत्यन्धतामिस्रः"। "अभिनिवेशः"=अन्धतामिस्रः। "तथा" इत्यनेन "अष्टादशधा" इत्यनुषज्यते। देवाः खल्वणिमादिकमष्टविधमैश्वर्यमासाद्य दश शब्दादीन् विषयान् भुञ्जानाः—'शब्दादयो भोग्यास्तदुपायाश्चाणिमादयोऽस्माकमसुरादिभिर्मा स्मोपघानिषत' इति बिभ्यति, तदिदं भयम्=अभिनिवेशः—अन्धतामिस्रोऽष्टादशविषयत्वाद् "अष्टादशधा" इति। सोऽयं पञ्चविकल्पो विपर्ययोऽवान्तरभेदाद्द्वाषष्टिरिति॥ ४८॥

तदेवं पञ्चविपर्ययभेदानुक्त्वाऽष्टाविंशतिभेदामशक्तिमाह—

**एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा।**
**सप्तदश वधा बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम्॥ ४९॥**

"एकादश" इति। [इन्द्रियवधस्य ग्रहो बुद्धिवधहेतुत्वेन, न त्वशक्तिभेदपूर्णत्वेन]। "एकादशेन्द्रियवधाः"—

"बाधिर्यं कुष्ठिताऽन्धत्वं जडताऽजिघ्रता तथा।
मूकता कौण्यपङ्गुत्वे क्लैब्योदावर्तमन्दताः"॥

यथासङ्ख्यं श्रोत्रादीनामिन्द्रियाणा वधाः। एतावत्येव तु तद्धेतुका बुद्धेरशक्तिः स्वव्यापारे भवति। तथा चैकादशहेतुकत्वाद् "एकादशधा" बुद्धेरशक्तिरुच्यते, हेतुहेतुमतोरभेदविवक्षया च सामानाधिकरण्यम्।

तदेवमिन्द्रियवधद्वारेण बुद्धेरशक्तिमुक्त्वा स्वरूपतोऽशक्तीराह—"सह बुद्धिवधैः"इति। कति बुद्धेः स्वरूपतो वधा इत्यत आह—"सप्तदश वधा बुद्धेः"

---

दप्रतिहन्यमानेषु प्रतिघातकत्वेऽपि द्वेष इत्याह—"स्वरूपेणैव"इत्यादिना, "मा स्मोपघानिषत" इति, न विहर्ति प्रापन्नित्यर्थ॥ ४८॥

"बाधिर्यं"=श्रोत्रदोष, "कुष्ठिता"[2]=त्वग्दोष, "अन्धत्वं" नेत्रदोष, "जडता"=रसनादोष=जिह्वाजाड्यरूपो येनास्वादविघातादि, "अजिघ्रता"=घ्राणदोष, "मूकता"=वाग्दोष, "कौण्य"[3]=कुणित्वं=कुणिभावो=हस्तदोष, "पङ्गुत्वं"=पाददोष, "क्लैब्य"=प्रजननेन्द्रियदोष, "उदावर्त"[4]=पायुदोष, "मन्दता"=मनोदोष, हेतुहेतुमतो"इति, वधस्य=हेतो, हेतुमत्या=

---

१ 'होहन्ते ०' (पा० ७।३।५४) इति घ। २ कुष्ठोऽस्यास्तीति कुष्ठी तस्य भाव कुष्ठिता। ३ कुणोऽस्यास्तीति कुणी टुण्डीतिख्यातस्तस्य भाव कौण्यम्। ४ मलमूत्रावष्टम्भको रोगविशेष।

इति। कुत. ? "विपर्ययात्तुष्टिसिद्धीनां" तुष्टयो नवधेति तद्विपर्ययास्तन्निरूपणात्-तत्प्रतियोगिकत्वान्नवधा भवन्ति, एवं सिद्धयोऽष्टाविति तद्विपर्यया स्तन्निरूपणादष्टौ भवन्तीति ॥ ४९ ॥

तुष्टिर्नवधेत्युक्तं, ताः परिगणयति—

**आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभागाख्याः।**
**बाह्या विषयोपरमात्पञ्च च नव तुष्टयोऽभिमताः ॥ ५० ॥**

'प्रकृतिव्यतिरिक्त आत्मास्ति' इति प्रतिपद्य ततोऽस्य श्रवणमननादिना विवेकसाक्षात्काराय त्वसदुपदेशतुष्टो यो न प्रयतते तस्य-"आध्यात्मिक्यश्चतस्रः" तुष्टयो भवन्ति। प्रकृतिव्यतिरिक्तमात्मानमधिकृत्य यस्मात्तास्तुष्टयस्तस्माद् "आध्यात्मिक्यः"। कास्ताः ? इत्यत आह-"प्रकृत्युपादानकालभागाख्याः"=प्रकृत्यादिराख्या यासां तास्तथोक्ताः। तत्र प्रकृत्याख्या तुष्टिर्यथा-कस्यचिदुपदेशे-'विवेकसाक्षात्कारो हि प्रकृतिपरिणामभेदः, तं च प्रकृतिरेव करोतीति कृतं तद्ध्यानाभ्यासेन, तस्मादेवमेवाऽऽस्स्व वत्स' इति-येयमुपदेष्टव्यस्य शिष्यस्य तुष्टिः प्रकृतौ-सा तुष्टिः प्रकृत्याख्या='अम्भ' उ( इत्यु )च्यते।

'या तु प्राकृत्यपि' विवेकख्यातिर्न सा प्रकृतिमात्राद्भवति, मा भूत्-सर्वस्य सर्वदा तन्मात्रस्य सर्वान् प्रत्यविशेषात्, प्रव्रज्यायास्तु सा भवति, तस्मात्प्रव्रज्यामुपाददीथाः, कृत ते ध्यानाभ्यासेनायुष्मन्' इत्युपदेशे या तुष्टिः-सोपादानाख्या='सलिलम्' इत्युच्यते।

'या तु प्रव्रज्याऽपि सद्यो न निर्वाणदेति सैव कालपरिपाकमपेक्ष्य सिद्धिं ते विधास्यति, अलमुत्तप्ततया तव इत्युपदेशे या तुष्टिः सा कालाख्या='ओघ' इत्युच्यते।

वधनिमित्तवत्या =अशक्तया , भेदाविवक्षया वधा=अशक्तिरिति सामानाधिकरण्यमुपपन्नम्, शेष स्पष्टम्, तुष्टय सिद्धयश्चाऽनुपद वक्ष्यन्ते ॥ ४९ ॥

'साक्षात्काराय' इत्यस्य 'न प्रयतत' इत्यनेन सबन्ध "प्रकृत्युपादान" इति, प्रकृतिकार्यत्वं विवेकख्यातेरिति श्रवणादिवैमुख्य=प्रकृतितुष्टि, तस्याश्च ससारमज्जनहेतुत्वाद् 'अम्भ' इति नामान्तरम्, प्रकृतिमात्र तु सर्वत्र सर्वस्य सममिति सर्वविमुक्तिपरिहाराय प्रव्रज्योपादानपूर्वकेऽभ्यासादिवर्जने या तुष्टि सोपादानाख्या, तस्याश्च सलिलापराख्यत्व ससरणनिमित्तत्वात्,

१ कारिकाया-( ५०, ५१ )।

'या तु न प्रकृतेर्न कालान्नाप्युपादानाद्विवेकख्यातिः, अपि तु भाग्यादेव, अत एव मदालसापत्यान्यतिबालानि मातुरुपदेशादेव विवेकख्यातिमन्ति मुक्तानि बभूवुः, तस्माद्भाग्यमेव हेतुर्नान्यद्' इत्युपदेशे या तुष्टिः सा भागाख्या='वृष्टिः' उच्यते ।

बाह्या दर्शयति "बाह्याः" तुष्टयो "विषयोपरमात् पञ्च" याः खल्वनात्मनः प्रकृतिमहदहङ्कारादीनात्मेत्यभिमन्यमानस्य वैराग्ये सति तुष्टयस्ता बाह्याः"—आत्मज्ञानाभावे सत्यनात्मानमधिकृत्य प्रवृत्तेरिति । ताश्च वैराग्ये सति सम्भवन्ति तुष्टय इति वैराग्यहेतुपञ्चत्वाद् वैराग्याण्यपि पञ्च, तत्पञ्चत्वात् तुष्टयः "पञ्च" इति । उपरम्यतेऽनेनेति उपरमो=वैराग्यम्, विषयादुपरमो=विषयोपरमो—विषयाः=भोग्याः शब्दादयः पञ्च, उपरमा अपि पञ्च, तथा हि अर्जनरक्षणक्षयभोगहिंसादोषदर्शनहेतुजन्मानः पञ्चोपरमा भवन्ति, तथा हि—सेवादयो धनार्जनोपायाः, ते च सेवकादीन् दुःखा कुर्वन्ति,

'दृप्यद्दुरीश्वरद्वाःस्थदण्डिचण्डार्धचन्द्रजाम् ।
वेदना भावयन्प्राज्ञः कः सेवास्वनुषज्जते' ।

एवमन्येऽप्यर्जनोपाया दुःखा इति विषयोपरमे या तुष्टिः सैषा 'पारम्' इत्युच्यते ।

तथा 'अर्जितं धनं राजैकागारिकाग्निजलौघादिभ्यो विनङ्क्ष्यतीति तद्रक्षणे महद् दुःखम्' इति भावयतो विषयोपरमे या तुष्टिः सा द्वितीया 'सुपारम्' उच्यते

---

सलिल हि सृधातोरिरन्प्रत्यये सरिरम् इति जाते रलयोरभेदाद्भवति, कालापेक्षित्वेन सुखासिकारूपा तुष्टिर्दैवाधीनवृष्टिना मेघेन तुल्येति मेघापराख्या, भाग्यापेक्षया सन्तोषेणैवावस्थानात्मिका या भाग्यतुष्टि सा वृष्टिवदनियतत्वाद् वृष्ट्यपराख्येत्याध्यात्मिकतुष्टीनां सक्षिप्त विवरणम् ।

सप्रत्याध्यात्मिकीस्तुष्टी. प्रदर्श्य बाह्या प्रपञ्चयति—"बाह्यास्तुष्टय" इत्यादिना, शब्दरूपरसगन्धस्पर्शा =पञ्च भोग्यविषयास्तेषामसारत्वदर्शनात्तद्विषयाणि पञ्च वैराग्याणि, किं चान्यथापि वैराग्याणा पञ्चत्वं—तद्धि धनादेरर्जनरक्षणक्षयभोगहिंसादोषदर्शनमूलक, तदेव दृष्टान्तैर्विशदयति—"तथाहि" इत्यादिना,

"दृप्यद्दुरीश्वर"इति, एतच्छायारूपकस्यन्तदेशिकश्लोक —"दुरीश्वरद्वारबहिर्वितर्दिकादुरासिकायै रचितोऽयमञ्जलि । यदञ्जनाभ निरपायमस्ति मे धनञ्जयस्यन्दनभूषण धनम्' इति, "पारम्" इति, धनार्जनदु खपारप्रापयितृत्वात्पाराख्येय तुष्टि, ऐकागारिक=चौर , "ऐकागारिकट् चौरे" इति पाणिनीयात् । अर्जनदोषदर्शनेऽपि कदाचिद्भोगाभिलाषेण प्रवृत्ति स्याद् रक्षणभयार्त्तस्य तु प्रवृत्तेरतितरामसम्भव इति तदीयायास्तुष्टे सुपारता, क्षय भावयत कदाचित्प्रवृत्ति ,

तथा 'महतायासेनार्जितं धनं भुज्यमानं क्षीयते' इति तत्प्रक्षयं भावयतो विषयोपरमे या तुष्टिः सा तृतीया 'पारापारम्' उच्यते।

एवं 'शब्दादिभोगाभ्यासात् प्रवर्धन्ते कामाः, ते च विषयाऽप्राप्तौ कामिनं दुःखा कुर्वन्ति' इति भोगदोषं भावयतो विषयोपरमे या तुष्टिः सा चतुर्थी 'अनुत्तमाम्भ' उच्यते।

एवं 'नानुपहत्य भूतानि विषयोपभोगः संभवति' इति हिंसादोषदर्शनाद्विषयोपरमे या तुष्टिः सा पञ्चमी 'उत्तमाम्भ' उच्यते।

एवमाध्यात्मिकीभिश्चतसृभिर्बाह्याभिश्च पञ्चभिः 'नव तुष्टयोऽभिमताः' ५०

गौणमुख्यभेदै (दा)ः सिद्धीराह—

ऊहः–शब्दोऽध्ययनं–दुःखविघातास्त्रयः–सुहृत्प्राप्तिः।
दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधा ॥ ५१ ॥

विहन्यमानस्य दुःखस्य त्रित्वात्तद्विघातास्त्रय इतीमा मुख्यास्तिस्रः सिद्धयः, तदुपायतया त्वितरा गौण्यः पञ्च सिद्धयः, ता अपि हेतुहेतुमत्तया व्यवस्थिताः। तत्राऽऽद्याऽध्ययनलक्षणा सिद्धिर्हेतुरेव मुख्यास्तु सिद्धयो हेतुमत्य एव, मध्यमास्तु हेतुहेतुमत्यः। विधिवद्गुरुमुखादध्यात्मविद्यानामक्षरस्वरूपग्रहणम्=अध्ययनं, प्रथमा सिद्धिः 'तारम्' उच्यते।

तत्कार्यं शब्दः='शब्द' इति पदं–शब्दजनितमर्थज्ञानमुपलक्षयति–कार्ये

---

कदाचिद्प्रवृत्ति इति–तदीया तुष्टि पारावाराख्या, भोगे रोगभय भावयतस्तुष्टि स्वाथपरेति तस्या उत्तमेतराम्भस्त्वम्, हिंसादोषतस्तस्यास्तुष्टेस्तु कारुण्यमूलकत्वादुत्तमाम्भस्त्वम् ॥ ५० ॥

कारिकाया क्रमोऽविवक्षित, दु खविघातानां त्रयाणामितरसिद्ध्यपेक्षयाऽभ्यर्हितत्वात्सकलसिद्ध्यन्तरोद्देश्यत्वाच्च प्राथम्यमित्याशयेनाह–"मुख्या" इति, अध्ययन सिद्ध्यन्तरहेतुत्वेनैवसवैरपेक्ष्य न तु तस्य स्वत किमपि माहात्म्य, दु खविघातरूपा मुख्यास्तिस्र सिद्धय, फलरूपा अन्तिमा –तासा किमपि साध्यान्तर नावशिष्यते, अन्यासां चतसृणां तु किञ्चित्सिद्ध्यन्तरमपेक्ष्य निमित्तत्व किञ्चिच्चापेक्ष्य नैमित्तिकत्व च पारिशेष्यात्सिद्धम्, अक्षरस्वरूप=क्षयरहिताना शाश्वताना वर्णाना स्वरूप–पारायणमिति यावत्, ससारतरणस्य प्रथमहेतुत्वात् ताराख्यताऽध्ययनसिद्धे, शब्दपदेनार्थो लक्ष्यते, तदाह–"अर्थज्ञानमुपलक्षयति" इति, अर्थज्ञानस्य सुखेन ससारतारकत्वात्सुतारत्वम्, तारसुतारयोरुभयोर्गुरुसकाशादध्ययनरूपत्वाच्छ्रवणेऽन्तर्भाव, उत्तरपक्ष स्वसिद्धान्त, ऊहस्य मननरूपत्वमाह–"तदिदम्" इति,

---

१ तत्तत्साधनैर्निवार्यमाणस्याध्यात्मिकादिलक्षणस्य दु खस्य त्रित्वसख्यावत्त्वात्तस्य त्रित्ववतो दुःखस्य विघाता विनाशविशेषास्त्रयस्य प्रतियोगिभेदेन तद्भेदसुलभत्वात्।

कारणोपचारात्, सा द्वितीया सिद्धिः 'सुतारम्' उच्यते । पाठार्थाभ्यां तदिदं द्विधा श्रवणम् ।

"ऊहः"=तर्कः आगमाविरोधिन्यायेनागमार्थपरीक्षणम् । परीक्षणं च=संशयपूर्वपक्षनिराकरणेनोत्तरपक्षव्यवस्थापनं, तदिदं 'मननम्' आचक्षते आगमिनः[1], सा तृतीया सिद्धिः 'तारतारम्' उच्यते ।

स्वोत्प्रेक्षितं[2] मननममननमेवासुहृत्सम्मतमिति द्वितीयं मननमाह–"सुहृत्प्राप्तिः"न्यायेन स्वयं परीक्षितमप्यर्थं न श्रद्दधते–न यावद् गुरुशिष्यसब्रह्मचारिभिः सह संवाद्यते, अतः सुहृदां गुरुशिष्यसब्रह्मचारिणां संवादकानां प्राप्तिः="सुहृत्प्राप्तिः" सा सिद्धिश्चतुर्थी 'रम्यक' उच्यते ।

"दानं च"=शुद्धिर्विवेकज्ञानस्य–"दैप् शोधने" इत्यस्माद्धातोर्दानपदव्युत्पत्तेः । यथाह–भगवान् पतञ्जलिः–"विवेकख्यातिरविप्लवा[3] हानोपायः" अविप्लवः=शुद्धिः, सा च सवासनसंशयविपर्यासानां परिहारेण विवेक[4]साक्षात्कारस्य स्वच्छप्रवाहेऽवस्थापनं, सा=शुद्धिः च न विनादरनैरन्तर्यदीर्घकालसेविताभ्यासपरिपाकाद्भवतीति दानेन सोऽपि संगृहीतः, सेयं पञ्चमी सिद्धिः, 'सदामुदितम्' उच्यते ।

तिस्रश्च मुख्याः सिद्धयः–प्रमोदमुदितमोदमानाः ॥ इति "अष्टौ सिद्धयः"॥

अन्ये व्याचक्षते–"विनोपदेशादिना प्राग्भवीयाभ्यासवशात्तत्त्वस्य स्वयमूहनं यत् सा सिद्धिः="ऊहः" । यस्य साङ्ख्यशास्त्रपाठमन्यदीयमाकर्ण्य ज्ञानमुत्पद्यते सा सिद्धिः="शब्दः"–शब्द[5]पाठान्तरभावाद् । यस्य शिष्याचार्यसबन्धेन संवादेन साङ्ख्यशास्त्रं ग्रन्थतोऽर्थतश्चाधीत्य ज्ञानमुत्पद्यते

---

मननस्याध्ययनात्तारादप्यधिकतारकत्वात्तारतरत्वम् ,सब्रह्मचारिण =सतीर्थ्या –सहाध्यायिन इति यावत्, सुहृद्भि सह शास्त्रार्थसंवादस्यातिरमणीयत्वात्सुहृत्प्राप्ते रम्यता, सवासनाना=संस्कारसहिताना संशयविपर्यासादीना परिहारेण विवेकसाक्षात्कारस्य शुद्धे निरन्तरे प्रवाहेऽवस्थानं=परमा शुद्धि , सा च सदा मोदहेतुत्वात्सदामुदिताख्या, तिस्रो मुख्या सिद्धय =आधिभौतिकाध्यात्मिकाधिदैविकाख्यदु खत्रयविघातरूपा , प्राग्भवीयोऽभ्यास =पूर्वजन्मसु ज्ञानाभ्यास ,

अन्यै कृतस्त्वर्थो न सङ्गतोऽपि प्रेक्षावतां परीक्षणाय तं प्रदर्शयति-"विनोपदेशादिना" इत्यादिना

---

१ नि संदेहतयागमविद । २ आत्मनो हितम् । ३ योगसू० (२।२६)। ४ प्रकृतिपुरुषभेदसाक्षात्कारस्य । ५ शब्द इति पदेन पाठ उपलक्ष्यते शब्दस्य पाठाभ्यन्तरत्वात् ।

साऽध्ययनहेतुका सिद्धिः="अध्ययनम्" । "सुहृत्प्राप्तिः" इति । यस्याधिगततत्त्वं सुहृदं प्राप्य ज्ञानमुत्पद्यते सा ज्ञानलक्षणा सिद्धिस्तस्य "सुहृत्प्राप्तिः"। "दानं च" सिद्धिहेतुः–धनादिदानेनाराधितो ज्ञानी ज्ञानं प्रयच्छति । अस्य च युक्तायुक्तत्वे सूरीभिरेवावगन्तव्ये इति कृत परदोषोद्भाववेन सिद्धान्तमात्रव्याख्यानप्रवृत्तानाम्" इति ।

सिद्धितुष्टिविपर्ययेणाशक्तिर्बुद्धिवधः सप्तदशधैष्टव्यः ।

अत्र प्रत्ययसर्गे सिद्धिरुपादेयेति प्रसिद्धमेव, तन्निवारणहेतवस्तु विपर्ययाशक्तितुष्टयो हेया इत्याह–"सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः"इति। "पूर्व"इति विपर्ययाशक्तितुष्टीः परामृशति। ताः=सिद्धिकरिणीनामङ्कुशो–निवारकत्वाद्। अतः सिद्धिपरिपन्थित्वादङ्कुश इवेति विपर्ययाशक्तितुष्टयो हेया इत्यर्थः ॥५१॥

स्यादेतत्–पुरुषार्थप्रयुक्ता सृष्टिः, स च पुरुषार्थः प्रत्ययसर्गाद्वा तन्मात्रसर्गाद्वा सिध्यतीति कृतमुभयसर्गेणेत्यत आह–

**न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः ।**
**लिङ्गाख्यो भावाख्यस्तस्माद्द्विधा प्रवर्तते सर्गः ॥ ५२ ॥**

"लिङ्गम्" इति तन्मात्रसर्गमुपलक्षयति, "भावैः" इति च प्रत्ययसर्गम्। एतदुक्त भवति–तन्मात्रसर्गस्य पुरुषार्थसाधनत्व, स्वरूपं च,"न" प्रत्ययसर्गाद् "विना" भवति-एवं प्रत्ययसर्गस्य स्वरूपं, पुरुषार्थसाधनत्व च, "न" तन्मात्रसर्गादृते–इत्युभयथा सर्गप्रवृत्तिः। भोगः=पुरुषार्थो न भोग्यान्=शब्दादीन्, भोगायतनं च=शरीरद्वयमन्तरेण सम्भवतीत्युपपन्नस्तन्मात्रसर्गः–

---

"पूर्वो"=विपर्ययाशक्तितुष्टयाख्यस्त्रिविध सिद्धिरङ्कुश, "सिद्धिपरिपन्थित्वात्"=सिद्धिविघातकत्वात् ॥ ५१ ॥

प्रत्ययसर्गो महदादिसर्ग , तन्मात्रसर्ग =आकाशादिसर्ग ,

पुरुषार्थरूपाय भोगाय वस्तुत्रयमपेक्षित–भोग्यं–भोगाधिकरण–भोगसाधन च, राजादिकर्तृके हि भोगे भोग्य=वनितादि, भोगाधिकरण=शय्यादि, भोग(ग्य)साधनानि च=पानानुलेपनादीन्यपेक्ष्यन्ते, पुरुषार्थविषये चैतत्रय किरूपमित्याकाङ्क्षाया भोग्य=शब्दादिक, भोगाधिकरण=शरीर स्थूलसूक्ष्मरूपेण द्विविध, भोगसाधनानि च=करणानि बाह्यान्तरभेदेन द्विविधानि, तत्र भोगभोगाधिकरणयो सपादनाय तन्मात्रसर्गो–भोगसाधनसपादनाय च प्रत्ययसर्गोऽपेक्षित इति सर्गद्वयमपेक्षितमेव, अन्यतराभावे पुरुषार्थासिद्धिरित्याह–"भोग पुरुषार्थ" इत्यादिना,

---

१ यथा मदोन्मत्तामपि करिणीं लोहमयोऽङ्कुशो निरुणद्धि तथा पुरुष प्रेप्सूनामपि सिद्धीना विपर्ययाशक्तितुष्टयाख्योऽङ्कुशो यतो निरोधकस्ततस्तास्तिस्रो हेया इति भाव ।

एवं स एव भोगो भोगसाधनानि=इन्द्रियाण्यन्तःकरणानि चान्तरेण न संभवति, न च तानि धर्मादिभिर्भावैर्विना संभवन्ति, न चापवर्गहेतुर्विवेकख्यातिरुभयसर्गेण विनेत्युपपन्न उभयविधः "सर्गः"। अनादित्वाच्च बीजाङ्कुरवन्नान्योन्याश्रयदोषभाव इति। कल्पादावपि प्राचीनकल्पोत्पन्नभावलिङ्गसंस्कारवशाद्भावलिङ्गयोरुत्पत्तिर्नानुपपन्नेति सर्वमवदातम् ॥ ५२ ॥

विभक्तः प्रत्ययसर्गः, भूतादिसर्गं च विभजते–

अष्टविकल्पो[1] दैवस्तैर्यग्[2]योनश्च पञ्चधा भवति।
मानुषकश्चैकविधः समासतो भौतिकः सर्गः ॥ ५३ ॥

ब्राह्मः, प्राजापत्यः, ऐन्द्रः, पैत्रो, गान्धर्वो, याक्षो, राक्षसः, पैशाचः–इत्यष्टविधो="दैवः"[3] सर्गः। "तैर्यग्योनश्च पञ्चधा भवति"–पशुमृगपक्षिसरीसृप[4]स्थावरा इति। "मानुषकश्चैकविध" इति। ब्राह्मणत्वाद्यवान्तरजातिभेदाविवक्षया–संस्थानस्य चतुर्ष्वपि वर्णेष्वविशेषात्। "समासतः"=सङ्क्षेपतः "भौतिकः सर्गः"। घटादयस्त्वशरीरत्वेऽपि स्थावरा एवेति ॥ ५३ ॥

---

नतु धर्मादयो भावा शरीरापेक्षा, शरीर च धर्माद्यपेक्षमिति परस्पराश्रयेणोभयमपि न संभवेदित्याशङ्क्याह–"बीजाङ्कुरवद्" इति ॥ ५२ ॥

ब्रह्मलोके "ब्राह्म" सर्ग, प्रजापतयो दक्षादयस्तदीय सर्ग ="प्राजापत्य" इन्द्रलोके "ऐन्द्र" सर्ग, पितृलोके "पैत्र" गन्धर्वयक्षरक्ष पिशाचा अपि देवयोनित्वेन देवा एवेति तत्सर्गोऽपि "दैव" एव,

"पशुमृग" इति, पशव =ग्राम्याश्चतुष्पदा =गवाश्वादय, मृगा=आरण्यकाश्चतुष्पदा =हरिणादय, पक्षिण =पतत्रवन्तो=गृध्रादय, सरीसृपा =अल्पचरणाश्चरणरहिता वा=सर्पशतपदीवृश्चिकादय, स्थावरा =प्राय प्रत्यक्षचेष्टारहिता =वृक्षादय, अत्र च सरीसृपेषु कीटादीना, निर्जीवाना घटादीना च स्थावरेष्वन्तर्भावो बोध्य,

"सस्थानस्य"=आकृतिभेदस्यावयवसस्थानकृतस्य "चतुर्षु"=ब्राह्मणक्षत्रियवैश्यशूद्रेषु "अशरीरत्वे"=सजीवशरीरवैशिष्ट्याभावे 'निर्जीवशरीरं तु सर्वस्यापि मूर्तपदार्थस्यास्त्येव' प्राय शरीरशब्देन जीवच्छरीरस्यैव बोधो लोके प्रसिध्यतीत्यभिप्रायः, शीर्यमाणतारूपो व्युत्पत्तिलभ्यस्त्वर्थो मूर्तपदार्थमात्रमन्तर्भावयति ॥ ५३ ॥

---

१ अष्टौ विकल्पा विभिन्नजातिकल्पना यस्मिन्स तथोक्त । २ तिर्यग्योनेरय सर्गस्तैर्यग्योन, तस्येदमित्यण्। ३ देवानामय सर्ग इत्यर्थ । ४ सरीसृपग्रहणेन कुटिलगतिमन्तो जलूकादयोऽपि सर्वे ग्राह्या । कुटिल सर्पति गच्छतीति व्युत्पत्ते, नित्य कौटिल्ये गताविति यङ्, तदन्तात्पचाद्यचि, यङोचिचेति यङो लुक्। ५ यथा–बीजस्य प्राथम्यमङ्कुरस्य वेत्यनिर्णयेऽपि नेतरेतराश्रयदोषोऽभ्युपगम्यते तद्वत्। ६ पतन्त खग त्रायेते यौ पक्षौ तद्वन्त इत्यर्थ । ७ जडतया-घटादीना भोगायतनशरीरत्वाभावे सत्यपि स्थावरान्तर्भाव एव तेषा प्रतिपत्तव्यो नान्यत्रेत्यर्थ ।

भौतिकस्यास्य सर्गस्य चैतन्योत्कर्षनिकर्षतारतम्याभ्यामूर्ध्वाधोमध्यभावेन त्रैविध्यमाह–

**ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः ।**
**मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः ॥ ५४ ॥**

"ऊर्ध्वं सत्त्वविशालः"=द्युप्रभृतिसत्यान्तो लोकः सत्त्वबहुलः । "तमोविशालश्च मूलतः सर्गः"=पश्वादिस्थावरान्तः, सोऽयं मोहमयत्वात्तमोबहुलः । भूर्लोकस्तु सप्तद्वीपसमुद्रसन्निवेशः "मध्ये रजोविशालः" –धर्माधर्मानुष्ठानपरत्वाद्दुःखबहुलत्वाच्च । तामिमा लोकसंस्थितिं संक्षिपति–"ब्रह्मादिस्तम्बपर्यन्तः" । स्तम्बग्रहणेनोपलक्षणतया वृक्षादयोऽपि संगृहीताः ॥ ५४ ॥

तदेव सर्गं दर्शयित्वा तस्यापवर्गसाधनवैराग्योपयोगिनी दुःखरूपतामाह–

**तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः ।**
**लिङ्गस्या विनिवृत्तेस्तस्माद्दुःखं स्वभावेन ॥ ५५ ॥**

"तत्र"=शरीरादौ यद्यपि विविधा विचित्रानन्दभोगभागिनः प्राणभृद्भेदाः तथाऽपि सर्वेषां "जरामरणकृतं दुःखम्" अविशिष्टम् । सर्वस्य खलु कृमेरपि मरणत्रासो='मा न भूवम्' 'भूयासम्' इत्येवमात्मकोऽस्ति । दुःखं च भयहेतुरिति मरण "दुःखम्" ।

द्यौ =अन्तरिक्ष=पृथिव्या सन्निहित भुवर्नामकम्, प्रभृतिशब्देन स्वर्महर्जनस्तप समाख्याना लोकानां ग्रहणम्,

सत्यं च=पृथिव्या भूर्लोकसमाख्याया विप्रकृष्टतम, षट्सु च भुवरादिषु सत्यान्तेषु लोकेषु क्रमात्सत्त्वस्याधिक्य=तारतम्येनोत्कर्ष ,

भूर्लोके तमस क्रमादुत्कर्षो भवति–पश्वादिषु पशुमृगपक्षिसरीसृपस्थावरसहितेषु, भूर्लोक एव मनुष्येषु क्रमाद्रजस उत्कर्ष –ब्रह्मक्षत्रविट्शूद्रेषु रजसो हि कार्यं धर्माधर्मादिक दु खबाहुल्य चोपलभ्यते मध्यमणिन्यायेन,

"भूर्लोकस्तु सप्तद्वीपसमुद्रसन्निवेश " इत्यशस्य "अस्ति" इति शेषेण सार्थकस्योभयसबन्ध – "मूलत " इत्यत्र "मध्य" इत्यत्र च, भूर्लोको योऽस्ति तत्रैव "मूलत "=अधोऽध पश्वादिसर्गो "मध्ये" च मानवसर्ग, अधस्तनत्व च न दिगपेक्ष किंतु तमोऽपेक्षम्, एव मध्यत्वमपि रजोऽपेक्ष–रजस सत्त्वतमसोर्मध्ये स्थितत्वात् ॥ ५४ ॥

'मा न भूव' 'भूयास' मम नाशो न स्यात्सर्वदैव च जीवन्त्स्यामित्यर्थ , "दु ख च भयहेतु " तथा च यथा धूमाद् हेतो हेतुमान्वह्निरनुमीयते–तथैव हेतुमतो मृत्युभयात्सदानुभूयमानात्सततवर्तिनो हेतोर्दु खस्यानुमानमित्यर्थ , लिङ्गशरीरस्यैव वस्तुत सर्वं दु ख, तथापि

१ "स्तम्बो गुच्छस्तृणादिन " इत्यमर ।

स्यादेतत्–दुःखादयः प्राकृता बुद्धिगुणाः, तत्कथमेते चेतनसम्बन्धिनो भवन्ति ? इत्यत आह–"पुरुष"इति । पुरि=लिङ्गे शेत इति "पुरुषः" । लिङ्गं च तत्सबन्धीति चेतनोऽपि तत्संबन्धी भवतीत्यर्थः । कुतः पुनर्लिङ्ग-संबन्धिदुःखं पुरुषस्य चेतनस्य ? इत्यत आह–"लिङ्गस्याविनिवृत्तेः" । पुरु-षाद् भेदाग्रहाल्लिङ्गधर्मानात्मन्यध्यस्यति पुरुषः । अथवा दुःखप्राप्ताववधि-राङा कथ्यते–'लिङ्गं यावन्न निवर्तते तावद्' इति ॥ ५५ ॥

उक्तस्य सर्गस्य कारणविप्रतिपत्तीर्निराकरोति–

**इत्येष प्रकृतिकृतो महदादिविशेषभूतपर्यन्तः ।**
**प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः ॥ ५६ ॥**

आरभ्यत इति "आरम्भः"=सर्गः महदादिभूम्यन्तः प्रकृत्यैव कृतो नेश्व-रेण, न ब्रह्मोपादानो, नाप्यकारणः–अकारणत्वे ह्यत्यन्ताभावोऽत्यन्तभावो वा स्यात्, न ब्रह्मोपादानः-चितिशक्तेरपरिणामात् । नेश्वराधिष्ठितप्रकृतिकृतः–निर्व्यापारस्याधिष्ठातृत्वासंभवात् । न हि निर्व्यापारस्तक्षा वास्याद्यधितिष्ठति ।

ननु प्रकृतिकृतश्चेत्–तस्या नित्यायाः प्रवृत्तिशीलाया अनुपरमात् सदैव सर्गः स्यादिति न कश्चिन्मुच्येतेत्यत आह–"प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः" इति । यथौदनकाम ओदनाय पाके प्रवृत्त ओदनसिद्धौ निवर्तते–एवं प्रत्येकं पुरुषान् मोचयितुं प्रवृत्ता प्रकृतिर्यं पुरुषं मोचयति तं प्रति पुनर्न प्रव-र्तते, तदिदमाह–"स्वार्थ इव"। स्वार्थे यथा–तथा परार्थ आरम्भ इत्यर्थः॥५६॥

---

पुरुषेण तस्याभेदग्रहात्पुरुषोऽपि दुःखवान् भवति, यदा तु वास्तवेन भेदग्रहेण भ्रमात्मकस्या-भेदग्रहस्य नाश–तदा दुःखनिवृत्ति इत्याह–"स्यादेतद्" इत्यादिना,

"लिङ्गस्याविनिवृत्ते" इति, लिङ्गशरीरस्याविनिवृत्ते=नाशाभावाद्धेतो. "पुरुषो दुःख प्राप्नोति" इत्येकोऽर्थः, तत्र "अविनिवृत्ते"इति–हेतौ पञ्चमी, "अथवा" पक्षान्तरे, "लिङ्ग-स्याऽऽविनिवृत्ते" इति च्छेद, ततश्च सूक्ष्मशरीरनाशावधि दुःखमित्यर्थ, "विनिवृत्ते" इति पञ्चमी तु मर्यादार्थकस्याङो योगे ॥ ५५ ॥

विशेषभूतानि=[1]स्थूलभूतानि, "आरम्भ" इति, कर्मणि प्रत्यय, असन्मूलकत्व जगतो निराकरोति–"अकारणत्वे हि"इति, वेदान्तिसमत ब्रह्ममूलकत्व जगतो निराकरोति–"न ब्रह्मो-पादान"इति, नैयायिकैर्भक्तिवादिभिश्चोपन्यस्तमीश्वराधिष्ठातृत्ववाद निराकरोति–"नेश्वर" इति "तक्षा"=काष्ठतक्षक, वास्यादि=वाशीलक्षण आयुधविशेष, सर्वं तस्य शस्त्रजात करपत्र-प्रमुखमत्रादिशब्देनाभिप्रेतम्,

स्वपक्षदोषान् वेदान्तिप्रभृतिभिरुपन्यस्तान् वारयति–"ननु"इत्यादिना, "परार्थ"=पुरु-षार्थ=पुरुषभोगापवर्गप्रयोजन इत्यर्थ ॥ ५६ ॥

---

१ 'पञ्चम्यपाङ्परिभि' (पा० २ । ३।१०)। २ ३८–तमसख्याककारिकायाम् ।

स्यादेतत्–स्वार्थं, परार्थं वा चेतनः प्रवर्तते, न च प्रकृतिरचेतनैव भवितुमर्हति, तस्मादस्ति प्रकृतेरधिष्ठाता चेतनः, न च क्षेत्रज्ञाश्चेतना अपि प्रकृतिमधिष्ठातुमर्हन्ति-तेषां प्रकृतिस्वरूपानभिज्ञत्वात्, तस्मादस्ति सर्वार्थदर्शी प्रकृतेरधिष्ठाता, स चेश्वर इत्यत आह–

वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥ ५७ ॥

दृष्टमचेतनमपि प्रयोजनं प्रति प्रवर्त्तमानम् । यथा–वत्सविवृद्ध्यर्थं क्षीरमचेतनं प्रवर्त्तते–एवं प्रकृतिरचेतनाऽपि पुरुषविमोक्षणाय प्रवर्तिष्यते । न च क्षीरप्रवृत्तेरपीश्वराधिष्ठाननिबन्धनत्वेन साध्यत्वान्न साध्यव्यभिचार इति साम्प्रत–प्रेक्षावतः प्रवृत्तेः स्वार्थकारुण्याभ्यां व्याप्तत्वात् । ते च जगत्सर्गाद्व्यावर्तमाने प्रेक्षावत्प्रवृत्तिपूर्वकत्वमपि व्यावर्तयतः । न ह्यवाप्तसकलेप्सितस्य भगवतो जगत्सृजतः किमप्यभिलषितं भवति, नापि कारुण्यादस्य सर्गे प्रवृत्तिः । प्राक् सर्गाज्जीवानामिन्द्रियशरीरविषयानुत्पत्तौ दुःखाभावेन कस्य प्रहाणेच्छाकारुण्य सर्गोत्तरकालं दुःखिनोऽवलोक्य कारुण्याभ्युपगमे दुरुत्तरमितरेतराश्रयदूषणं–कारुण्येन सृष्टिः सृष्ट्या च कारुण्यमिति। अपि च करुणया प्रेरित ईश्वरः सुखिन एव जन्तून् सृजेन्न विचित्रान्। 'कर्मवैचित्र्याद्वैचित्र्यम्' इति चेत्–कृतमस्य प्रेक्षावतः कर्माधिष्ठानेन । तदनधिष्ठानमात्रादेवाचेतनस्यापि कर्मणः प्रवृत्त्युपपत्तेः–तत्कार्यशरीरेन्द्रियविषयानुत्पत्तौ दुःखानुत्पत्तेरपि सुकरत्वात् । प्रकृतेस्त्वचेतनायाः प्रवृत्तेर्न स्वार्थानुग्रहो, न वा कारुण्य,

दृष्टसाम्येनादृष्टसिद्धिरिति नियम, न चाचेतनस्य स्वार्था परार्था वा प्रवृत्तिर्दृष्टेति प्रकृतेरदृष्टा प्रवृत्ति कथ कल्प्यत ? इत्याशङ्क्य समाधत्ते–"वत्स" इत्यादिना, उपभुक्ततृणादेरप्रसूताया गोर्न क्षीरमुत्पद्यते, तस्या एव प्रसूताया वत्सविवृद्धये तृणादेरुपभुक्तादसभावमापन्नात्पृथग् भवत् क्षीर क्षीराशये सचीयते, इयमेव क्षीरस्य वत्सविवृद्धये प्रवृत्ति, तत्र च न गो. प्रयत्न कश्चिदस्ति तस्या वत्सस्य वा,–यत्नस्य क्षीरोत्पत्तावकिञ्चित्करत्वात्, ततश्च "वत्सचूषणादिनैव क्षीरप्रवृत्ति "इत्यादिश्रीशङ्करोक्तिर्ब्रह्मसूत्रभाष्योक्ताऽसङ्गतैव" श्रीशङ्करोक्तक्षीरप्रवृत्तेरपि चेतनाधिष्ठितत्व दूषयति–"प्रेक्षावत"इत्यादिना, "स्वार्थकारुण्याभ्याम्" इति, नव्यास्तु कारुण्यमपि, स्वार्थमूलकमेव, परक्लेशान् दृष्ट्वा स्वय दु खितो हि पुरुष स्वदु खविमोचनायैव परदु खप्रहाणाय यतते, यस्तु परदु खेन न दु खितस्तस्य तत्प्रहाणेऽप्रवृत्तेरित्याहुः।

ननु स्वार्थानुग्रहकारुण्यान्यतरासभवात्प्रकृतेरपि कथ सर्गे प्रवृत्ति ? इत्यत्राह–"प्रकृतेस्तु"

१ वेदान्त० सू० ( २।२।४ ) ।

प्रयोजकमिति नोक्तदोषप्रसङ्गः । पारार्थ्यमात्रं तु प्रयोजकमुपपद्यते । तस्मात्सुष्ठूक्तं-"वत्सविवृद्धिनिमित्तम्" इति ॥ ५७ ॥

स्वार्थ इवेति दृष्टान्तित तद्विभजते-

**औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः ।**
**पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वद्व्यक्तम् ॥ ५८ ॥**

औत्सुक्यम्=इच्छा, सा खल्विष्यमाणप्राप्तौ निवर्तते । इष्यमाणश्च स्वार्थः-इष्टलक्षणत्वात्फलस्य । दार्ष्टान्तिके योजयति-"पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वद्व्यक्तम्"इति ॥ ५८ ॥

ननु भवतु प्रकृतेः पुरुषार्थः प्रवर्तको, निवृत्तिस्तु कुतस्त्या प्रकृतेः ? इत्यत आह-

**रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात् ।**
**पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥ ५९ ॥**

"रङ्गस्य"इति स्थानेन-स्थानिनः पारिषदानुपलक्षयति । "आत्मानं" शब्दाद्यात्मना, पुरुषाद्भेदेन, च "प्रकाश्य" इत्यर्थः ॥ ५९ ॥

स्यादेतत्-प्रवर्तता प्रकृतिः पुरुषार्थं, पुरुषादुपकृतात् प्रकृतिर्लप्स्यते कञ्चिदुपकारम्-आज्ञासंपादनाराधितादिवाज्ञापयितुर्भुजिष्या, तथा च न परार्थोऽस्या आरम्भ इत्यत आह-

**नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः ।**
**गुणवत्यगुणस्य सतस्तत्कार्यमपार्थकं चरति ॥ ६० ॥**

यथा गुणवानप्युपकार्यपि भृत्यो निर्गुणोऽत एवानुपकारिणि स्वामिनि

---

इति, अचेतनाना हि क्षीरजलवाय्वादीना सर्वत्र स्वार्थकारुण्याभ्या विनैवैषां चेतनानामर्थं साधयितु प्रवृत्तिर्दृष्टा, तद्दर्शनाच्चादृष्टाया अचेतनप्रकृतिप्रवृत्ते. स्वार्थकारुण्यान्यतराभावेऽपि तत्र प्रवृत्तिकल्पना सगता ॥ ५७ ॥

"इच्छा"=प्रवृत्तिमात्ररूपा, साङ्ख्यमते गुणत्रयपर्याप्तवृत्तिर्न तु न्यायनय इवेच्छायाश्चेतनधर्मत्वमिति तस्या अचेतने वृत्तिरत्रोपक्षिप्ता "दार्ष्टान्तिके"=लोकप्रवृत्तिदृष्टान्तेन प्रतिपिपादयिषिते प्रकृतिपुरुषव्यवहारे ॥ ५८ ॥

"कुतस्त्या"=किम्प्रयुक्ता,

रङ्गशब्देन परिषदुच्यते, तेन चात्र लक्षणया पारिषदा उच्यन्ते-मुख्यार्थस्य स्थानस्य दर्शनान्वयासम्भवात्, अव्यक्तरूपाया प्रकृते कथ व्यक्तिरूप प्रकाश इत्यभिसन्धायाह-"शब्दाद्यात्मना" इति, स्वगुणैर्व्यक्तिमापन्नै शब्दादिभि , पुरुषभिन्नत्वेन स्वरूपेण चेत्यर्थ ॥ ५९ ॥

निष्फलाराधन—एवमियं प्रकृतिस्तपस्विनी "गुणवती" "उपकारिणी" अप्यनुपकारिणि निर्गुणेऽपि पुरुषे व्यर्थपरिश्रमेति पुरुषार्थमेव यतते न स्वार्थमिति सिद्धम् ॥ ६० ॥

स्यादेतत्—नर्तकी नृत्यं परिषद्भ्यो दर्शयित्वा निवृत्तापि पुनस्तद्द्रष्टृकौतूहलात्प्रवर्तते यथा—तथा प्रकृतिरपि पुरुषायात्मानं दर्शयित्वा निवृत्तापि पुनः प्रवर्त्स्यतीत्यत आह—

प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति।
या दृष्टाऽस्मीति पुनर्दर्शनमुपैमि पुरुषस्य ॥ ६१ ॥

सुकुमारता=अतिपेशलता—परपुरुषदर्शनासहिष्णुतेति यावद् । अमूर्यम्पश्या हि कुलवधूरतिमन्दाक्षमन्थरा प्रमादाद्विगलितसिचयाञ्चला चेदालोक्यते परपुरुषेण—तदासौ तथा प्रयततेऽप्रमत्ता यथैना न पुनः पुरुषान्तराणि पश्यन्तीति—एवं प्रकृतिरपि कुलवधूतोऽप्यधिका दृष्टा विवेकेन न पुनर्द्रक्ष्यते इत्यर्थः ॥ ६१ ॥

स्यादेतत् पुरुषश्चेदगुणोऽपरिणामी कथमस्य मोक्षः ? मुचेर्बन्धनविश्लेषार्थत्वात्, सवासनक्लेशकर्माशयाना च बन्धनसंज्ञिताना पुरुषेऽपरिणामिन्यसंभवात् । अत एवास्य न संसारः=प्रेत्यभावापरनामास्ति—निष्क्रियत्वात् । तस्मात्पुरुषविमोक्षार्थमिति रिक्तं वच इतीमामाशङ्कामुपसंहारव्याजेनाभ्युपगच्छन्नपाकरोति—

"भुजिष्या"=दासी, "न परार्थ" किन्तु लप्स्यमानस्वार्थनिबन्धन इत्यर्थ, "तपस्विनी"=दीना—"मुनिदीनौ तपस्विनौ"इत्यभिधानाद्, दीनत्वं च फललाभाभावात् ॥ ६० ॥

"परिषद्भ्य "=पारिषदेभ्य इत्यर्थ, "तद्द्रष्टृकौतूहलात्"=परिषत्स्थितदर्शककौतुकवशात्, मन्दाक्षं=त्रपा तेन—मन्थरा=परदर्शनेऽप्रवृत्ता="मन्दाक्षमन्थरा" "विगलितसिचयाञ्चला"=च्युतपटप्रान्ता दृष्टा, "विवेकेन"=ज्ञानेन, "दृष्टा"=साक्षात्कृतपुरुषप्रतियोगिकभेदा, "न द्रक्ष्यते"=विवेकिन पुरुषस्य दर्शनगोचर न गमिष्यतीत्यर्थ ॥ ६१ ॥

"क्लेश"इत्यादि "अविद्याऽस्मितारागद्वेषाभिनिवेशा पञ्च क्लेशा" "क्लेशमूल कर्माशयो दृष्टादृष्टजन्मवेदनीय", इति भगवत्पतञ्जल्युक्त—कर्माशय=क्लेशमूलभूत, तत्कार्यं च=क्लेश, वासना तु सस्कार, प्रेत्यभाव=मृत्योरनन्तर स्थिति "रिक्त"=प्रमत्तप्रलपितवच्छून्यम्=अर्थ-

१ यतोऽनेन पुरुषेणाह दृष्टास्मीति मन्यमाना सती या प्रकृतिरस्य पुरुषस्य मद्दर्शकस्य पुनर्दृष्टिगोचरता नाह प्राप्नोमीति सर्वदा यायत्यतेऽतस्तस्या प्रकृते सुकुमारतरत्वमित्यक्षरयोजना । २ अत्यन्तकोमलता। ३ अतिमन्देऽतीव सकुचितेऽक्षिणी येन लज्जादिकर्मणा तत्तथोक्त तेन मन्थरा शनै शनैर्मन्दगामिनी । ४ योग० सू० ( २।३ )। ५ यो० सू० ( २।१२ )।

**तस्मान्न बध्यतेऽसौ न मुच्यते नापि संसरति कश्चित्।**
**संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥ ६२ ॥**

अद्धा "न" कश्चित्पुरुषो "बध्यते" "न" कश्चित् "संसरति" "न" कश्चित् "मुच्यते" इति–"प्रकृतिः" एव तु "नानाश्रया" सती–"बध्यते" च, "संसरति" च "मुच्यते" च । बन्धमोक्षसंसाराः पुरुष उपचर्यन्ते । यथा–जयपराजयौ भृत्यगतावपि स्वामिन्युपचर्येते–तदाश्रयेण भृत्याना तद्भागित्वात्, तत्फलस्य च शोकलाभादेः स्वामिसंबन्धात् । भोगापवर्गयोश्च प्रकृतिगतयोरपि विवेकाग्रहात्पुरुषसंबन्ध उपपादित इति सर्व पुष्कलम् ॥ ६२ ॥

नन्ववगतं प्रकृतिगता बन्धसंसारापवर्गाः पुरुष उपचर्यन्त इति, किंसाधनाः पुनरेते प्रकृतेः ? इत्यत आह—

**रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः ।**
**सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण ॥ ६३ ॥**

तत्त्वज्ञानवर्जं "बध्नाति" धर्म्मादिभिः "सप्तभि" "रूपैः" भावैरिति "पुरुषार्थं प्रति"=भोगापवर्गं प्रति "आत्मनात्मानम्" "एकरूपेण"=तत्त्वज्ञानेन=विवेकख्यात्या "विमोचयति"=पुनर्भोगापवर्गौ न करोतीत्यर्थः॥ ६३ ॥

अवगतमीदृशं तत्त्व, ततः किम्? इत्यत आह–

**एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ।**
**अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ ६४ ॥**

तत्त्वेन विषयेण विषयि=ज्ञानमुपलक्षयति । उक्तप्रकारतत्त्वविषयज्ञानाभ्यासादादरनैरन्तर्यदीर्घकालसेवितात्सत्त्वपुरुषान्यतासाक्षात्कारि ज्ञानमुत्प-

---

रहितमित्यर्थ 'सभवव्यभिचाराभ्या स्याद्विशेषणमर्थवद्' इति सतताव्यभिचरितौष्ण्यस्य वह्नेरुष्णत्वोक्तिरिव सततमुक्तस्य पुरुषस्य मोक्षोक्तिरसगता "अद्धा"=वस्तुत "तत्त्वे त्वद्धाञ्जसा द्वयम्"इत्यमर, "उपचर्यन्ते"=आरोप्यन्ते, "पुष्कलम्"=उपपन्नम् ॥ ६२ ॥

धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि=अष्ट भावा पूर्वमुक्ता, तत्र ज्ञान वर्जयित्वाऽन्यानि सप्त प्रकृतिरूपाणि=बन्धहेतव ज्ञानाख्य तु तद्रूप–बन्धविमोचकमित्याशयेनाह–"तत्त्वज्ञानवर्जम्"इति "भोगापवर्ग"=भोगश्चापवर्गश्च तयो समाहारो भोगापवर्गमिति समाहारद्वन्द्व "आत्मनात्मानम्"इत्यशस्य "बध्नाति–विमोचयति" इति क्रियाद्वये पर्यायेण सबन्ध "एकरूपेण"=विवेकख्यात्यपरपर्यायेण="तत्त्वज्ञानेन"=धर्मादिरूपबन्धहेतुभावसप्तकभिन्नेन निजस्वरूपेणेत्यर्थ ॥ ६३ ॥

"तत्त्व"=वस्तुयाथात्म्य, तच्च ज्ञानस्य विषय, तेनात्र विषयिज्ञानमुपलक्ष्यते, तथा च "तत्त्वाभ्यासाद्"इत्यस्य "तत्त्वविषयज्ञानाभ्यासाद्" इत्यर्थ, सेवादरो, नैरन्तर्यं, कालदैर्घ्यं

द्यते=यद्विषयश्चाभ्यासस्तद्विषयकमेव साक्षात्कारमुपजनयति, तत्त्वविषयश्चाभ्यास इति तत्त्वसाक्षात्कारं जनयति । अत उक्तं–"विशुद्धम्" इति । कुतो विशुद्धम्? इत्यत आह–"अविपर्ययाद्" इति । संशयविपर्ययौ हि ज्ञानस्याविशुद्धी, तद्रहित "विशुद्ध" तदिदमुक्तम्–"अविपर्ययाद्" इति नियतमनियततया गृह्णन्संशयोऽपि विपर्ययः, तेन "अविपर्ययाद्" इति संशयविपर्ययाभावो दर्शितः । तत्त्वविषयत्वाच्च संशयविपर्ययाभावः ।

स्यादेतद्–उत्पद्यतामीदृशाभ्यासात्तत्त्वज्ञानम् । तथाप्यनादिना मिथ्याज्ञानसंस्कारेण मिथ्याज्ञान जनयितव्यम् । तथा च तन्निमित्तस्य संसारस्यानुच्छेदप्रसङ्ग इत्यत उक्तं "केवलं"=विपर्ययेणासभिन्नम् । यद्यप्यनादिर्विपर्ययवासना तथापि तत्त्वज्ञानवासनया तत्त्वविषयसाक्षात्कारमादधत्याऽऽदिमत्यापि शक्या समुच्छेत्तुम् । तत्त्वपक्षपातो हि धिया स्वभावः । यथाहुः बाह्या अपि–

"निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः ।
न बाधोऽयत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः" इति ।

ज्ञानस्वरूपमुक्तं–"नास्मि न मे नाहमिति" इति । "नास्मि" इति। अनेनात्मनि क्रियामात्रं निषेधति । यथाहुः–"कृभ्वस्तयः क्रियासामान्यवचना"

---

चेति त्रितयमपेक्षितम्, अन्यतमाभावे फलाभाव , तथा हि–ज्ञानाभ्यासोऽनादरेण चिर निरन्तर सेवितोऽपि न फलाय, एवमादरेणापि क्षण निरनुबन्ध सेवितो न फलायेति बोध्यम्, "अविपर्ययाद् इत्युक्तत्वात्सशयस्यानिषेध इति सशयग्रस्त ज्ञान कथ शुद्धम् ? इत्यत आह–"नियतमनियततया"इति, नियतत्व वस्तुनो लक्षण, न च नियते सशय उपपद्यते, किं तु नियतस्यानियतत्वेन ग्रह =सशय , स च तथाभूतस्यातथाभूतत्वग्रहरूपस्य=विपर्ययस्यैव विशेष इत्यभिप्राय , कुतोऽत्र सशयविपर्ययौ न ? इत्यत आह "तत्त्वविषयत्वाच्च"इति, यस्य वस्तुन स्वरूप यादृश तस्य तेन रूपेण याथार्थ्येन ज्ञाने कुत सशयस्य विपर्ययस्य वा सभव इति भाव ।

"विपर्ययवासना"=मिथ्याज्ञानसस्कार =प्रकृतिपुरुषयोर्वस्तुतो विविक्तयोरविविक्तत्वग्रह , न हि 'नादिमताऽनादेर्नाश' इति कश्चिन्नियमोऽस्ति नैयायिकनये प्रागभावस्यानादे सादिना ध्वसेन नाशस्य दृष्टत्वादिति भाव ,

"तत्त्वपक्षपातो हि"इति, यथाकथञ्चिद्भ्रमे पतिताऽपि धीस्तत्त्वं प्रकाशितमात्रं प्रति स्वभावतो धावति,

"निरुपद्रव" इति, निरुपद्रव =संशयाद्युपद्रवरहितो यो भूतार्थ =परमार्थ, तस्य तदुपलक्षितस्य तज्ज्ञानस्य "विपर्ययै."=भ्रमे "यत्नवत्त्वे"='अतिशयेन' यत्ने कृतेऽपि बाधो नैव भवति, बुद्धिर्हि तत्त्वपक्षपातिनी विपर्ययाननादृत्य तत्त्वमेवावलम्बते "नास्मि"=न सक्रियोऽहम्=अध्य-

इति । तथा चाध्यवसायाभिमानसंकल्पालोचनानि चान्तराणि, बाह्याश्च सर्वे व्यापाराः, आत्मनि प्रतिषिद्धानि बोद्धव्यानि ।

यतश्चात्मनि व्यापारावेशो नास्त्यतो "नाहम्"। अहमिति कर्तृपरम् । 'अहं जानामि' 'अहं जुहोमि' 'अहं ददे' 'अहं भुञ्जे' इति सर्वत्र कर्तुः परामर्शात्, निष्क्रियत्वे च सर्वकर्तृत्वाभावः । ततः सूक्तं—"नाहम्" इति । अत एव "न मे" । कर्ता हि स्वामितां लभते, तदभावात्तु कुतः स्वाभाविकी स्वामिता ? इत्यर्थः । अथवा "नास्मि"[1] इति=पुरुषोऽस्मि=न प्रसवधर्मा । अप्रसवधर्मत्वाच्चाकर्तृत्वमाह—"नाहम्" इति । अकर्तृत्वाच्च न स्वामित्वेत्याह—"न मे" इति । नन्वेतावत्सु ज्ञातेष्वपि कश्चित्कदाचिदज्ञातो विषयोऽस्ति, तज्ज्ञानं च जन्तुन्बन्धयिष्यतीत्यत आह—"अपरिशेषम्" इति । नास्ति किञ्चिदस्मिन् परिशिष्टं ज्ञातव्यं— यदज्ञानं बन्धयिष्यतीत्यर्थः ॥ ६४ ॥

किं पुनरीदृशेन तत्त्वसाक्षात्कारेण सिध्यति ? इत्यत आह—

**तेन निवृत्तप्रसवामर्थवशात्सप्तरूपविनिवृत्ताम् ।**
**प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वस्थः ॥ ६५ ॥**

भोगविवेकसाक्षात्कारौ हि प्रकृतेः प्रसोतव्यौ, तौ च प्रसूताविति नास्याः प्रसोतव्यमवशिष्यत इति निवृत्तप्रसवा प्रकृतिः । विवेकज्ञानरूपो योऽर्थस्तस्य वशः=सामर्थ्यं तस्मात् । अतत्त्वज्ञानपूर्वकाणि खलु धर्माधर्माज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि । वैराग्यमपि केवलतौष्टिकानामतत्त्वज्ञानपूर्वकमेव । तत्र

---

वसायाभिमानसंकल्पाद्यालोचनानि=क्रमाद्बुद्ध्यहङ्कारमनसां कार्याणि [illegible] निष्क्रियत्वमात्मन, तदुक्त्वा तत्फलभूत कर्तृत्वाभाव तस्याह—"यतश्च" इति, कर्तृत्वाभाव च स्वामित्वाभावो न ह्यलसमनुद्योगपरमत्यन्तोदासीन कश्चित्स्वामिन मन्यते, भोगापवर्गाविति च धन समर्पयतीति पुरुषो न मे किञ्चिदिति तात्त्विक स्वस्य स्वामित्वाभावं गृह्णाति विवेक[illegible] ।

"नास्मि न मे नाहम्" इत्यस्यार्थान्तरमाह—"अथवा" इति, प्रसवधर्मिणी [illegible] प्रकृति, न पुरुष, तत पुरुषोस्मि न प्रसवधर्म्मा, शेष स्पष्टम्, 'अज्ञानहेतुको बन्ध —न च साङ्ख्यैः प्रतिज्ञातान्येव वस्तूनि सर्वाणि—न तत परिशिष्टानि कानिचिदिति कश्चिदज्ञातोऽपि विषयोऽवशिष्ट स्याद्' इत्याशङ्क्य समाधत्ते—"ननु" इत्यादिना "यदज्ञानम्" इति, यद्विषयकमज्ञानमित्यर्थ. ॥ ६४ ॥

अपवर्गस्तु सिद्ध एवेति तत्प्रतिबन्धकाज्ञाननिवर्तको विवेकसाक्षात्कार सोतव्य इत्याह—"अतत्त्वज्ञानपूर्वकाणि"=तत्त्वाज्ञानमूलकानि "केवलतौष्टिकानाम्" "आध्यात्मिकय"[2] इत्यादि-

---

1 ना अस्मीति पदच्छेदेन ना=पुरुष इत्यर्थात् । [illegible] त्कर्तृत्वशक्तिमत्प्रतिपादकमित्यर्थं । 2 कारिकायाम्-(५०)

तत्त्वज्ञानं विरोधित्वेनातत्त्वज्ञानमुच्छिनत्ति । कारणविनिवृत्त्या च सप्तरूपाणि निवर्त्तते इति सप्तरूपविनिवृत्ता प्रकृतिः । "अवस्थित"इति । निष्क्रियः । "सुस्थ"इति। रजस्तमोवृत्तिकलुषया बुद्ध्याऽसभिन्नः। सात्त्विक्या तु बुद्ध्या तदाप्यस्य मनाक् संभेदोऽस्त्येव । अन्यथैवम्भूतप्रकृतिदर्शनानुपपत्तेरिति ६५

स्यादेतत्–"निवृत्तप्रसवाम्"इति न मृष्यामहे, सयोगकृतो हि स इत्युक्तं, योग्यता च=संयोगः, भोक्तृत्वयोग्यता च=पुरुषस्य चैतन्यं, भोग्यत्वयोग्यता च=प्रकृतेर्जडत्व विषयत्वं च, न चैतयोरस्ति निवृत्तिः, न च करणीयाभावान्निवृत्तिः, तज्जातीयस्यान्यस्य करणीयत्वात्–पुनःपुनः शब्दाद्युपभोगवदित्यत आह–

**दृष्टा मयेत्युपेक्षक एको दृष्टाहमित्युपरमत्यन्या ।**
**सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य ॥ ६६ ॥**

करोतु नाम पौनःपुन्येन शब्दाद्युपभोगं प्रकृतिर्यया विवेकख्यातिर्न कृता, (जनिता)कृतविवेकख्यातिस्तु शब्दाद्युपभोगं न जनयति। अविवेकख्यातिनिबन्धनो हि तदुपभोगो, निबन्धनाभावे न तद्भवितुमर्हत्यङ्कुर इव बीजाभावे।

प्राकृतान् हि सुखदुःखमोहात्मनः शब्दादीस्तदविवेकान् 'ममैते' इत्यभिमन्यमान आत्मा भुञ्जीत, एवं विवेकख्यातिमपि प्राकृतीमविवेकादेवात्मा 'मद्-

कारिकाया या नव तुष्टय उक्तास्तासा तुष्टीनामेकतरामाश्रित्य ये श्रवणमननादिसिद्धिषु विरक्तास्ते केवलतौष्टिकास्तेषाम् "सप्त रूपाणि"=धर्मादिकानि, "अवस्थित "=स्वरूपेण स्थित , ततश्च निष्क्रिय "मनाग्"–ईषद् अन्तिमक्षणे,

तत प्रकृतिदर्शने सवृत्ते तु सात्त्विक्या बुद्धेरपि न स्थिति ॥ ६५ ॥

"सयोगकृत "=प्रकृतिपुरुषसबन्धप्रयुक्त कीदृशोऽत्यन्तभिन्नस्वभावयोस्तयो सयोग ? इत्यत आह–"योग्यता"इति, चेतनोऽचेतनानि भुङ्क्ते, तथा च प्रकृतेरचेतनत्वे पुरुषस्य चेतनत्व भोगप्रयोजकं विवेकख्याते परस्तादपि समानमेवेति भोगानिवृत्तिरित्यभिप्राय "करोतु"इति, यथा कुण्डलाद्यभिमानी कुण्डलादीनि पुन पुन प्रेक्षते, धारयति च, स एव निवृत्ताभिमानो विरक्त सर्वं तद् विजहाति, प्रव्रज्या चोपादत्ते,–तथैव पूर्वं विवेकख्यातेः प्रकृतिकृतान्शब्दादिभोगान्पुरुष आत्मीयत्वेन मन्यते न तु विवेकख्यातेरनन्तरमित्यभिप्राय ।

विवेकख्यातिरपि प्रकृतिकार्यं नात्मकार्यं, ततश्च प्रकृतिकार्येणैवान्तिमेनानवशिष्टकार्येण पुरुषस्यापवर्ग इत्येतदभिसधायाह–"प्राकृतान्"इत्यादि, विवेकख्यात्यनन्तर तु ससारोद्भवमारभ्य

१ भोक्तार पुरुष प्रति जनयतु । २ प्रकृतेरिमान् परिणामविशेषान् । ३ ते शब्दादय सुखदु खमोहात्मान प्राकृता एवेत्येव नास्ति विवेको येषा शब्दादीना ते तथोक्तास्तानित्यर्थ । ४ एते शब्दादयो मत्स्वामिका मत्सबन्धिनो वेत्येवमभिमानवान् ।

र्थेयम्' इति मन्यते। उत्पन्नविवेकख्यातिस्तु तदसंसर्गान्न शब्दादीन् भोक्तुमर्हति, नापि विवेकख्यातिं प्राकृतीम्। ततो विविक्त आत्मा स्वार्थमभिमन्तुमर्हतीति। पुरुषार्थौ च भोगविवेकौ प्रकृत्यारम्भप्रयोजकावित्यपुरुषार्थौ सन्तौ न प्रकृतिं प्रयोजयतः। तदिदमुक्तं—"प्रयोजनं नास्ति सर्गस्य" इति। अत्र प्रयुज्यते सर्गे प्रकृतिरनेनेति प्रयोजनं, तद् अपुरुषार्थत्वे नास्तीत्यर्थः॥ ६६॥

स्यादेतद्—उत्पन्नतत्त्वसाक्षात्कारान्मुक्तश्चेदनन्तरमेव तस्य शरीरपातः स्यादिति कथमदेहः प्रकृतिं पश्येद्? अथ तत्त्वज्ञानेऽपि न मुच्यते—कर्मणामप्रक्षीणत्वात् तेषां कुतः प्रक्षयो? भोगादिति चेद्—हन्त भोः! तत्त्वज्ञानं न मोक्षसाधनमिति 'व्यक्ताव्यक्तज्ञविज्ञानजन्मना तत्त्वज्ञानेनापवर्ग' इति रिक्तं वचः, भोगेन चापरिसङ्ख्येयः कर्माशयप्रचयोऽनियतविपाकसमयः क्षेतव्यः, ततश्चापवर्गप्राप्तिरित्यपि मनोरथमात्रमित्यत आह—

**सम्यग् ज्ञानाधिगमाद्धर्मादीनामकारणप्राप्तौ।**
**तिष्ठति संस्कारवशाच्चक्रभ्रमिवद्धृतशरीरः॥ ६७॥**

तत्त्वसाक्षात्कारोदयादेवानादिरप्यनियतविपाककालोऽपि कर्माशयप्रचयो दग्धबीजभावतया न जात्याद्युपभोगलक्षणाय फलाय कल्पते। क्लेशसलिलावसिक्तायां हि बुद्धिभूमौ कर्मबीजान्यङ्कुरं प्रसुवते। तत्त्वज्ञाननिदाघनिपीतसकलक्लेशसलिलायामूषरायां कुतः कर्मबीजानामङ्कुरप्रसवः? तदिदमुक्तं—

---

विवेकख्यात्यवधिकं सकलं प्रकृतिकार्यं नात्मीयत्वेनोदासीनः पुरुषो निश्चिनोतीति सिद्धान्तयति—"तदसंसर्गाद्"इत्यादिना, "अपुरुषार्थौ"=पुरुषेणोदासीनेनात्मीयतयाऽनभिमन्यमानौ, आत्मीयत्वेनानभिमन्यमानं न किञ्चित्कस्यापि प्रयोजनं भवति, न ह्यनात्मसम्बन्धयोग्यमाकाशताडनादिकार्यमुद्दिश्य कश्चित्प्रवर्तते, तदाह—"प्रयुज्यत"इत्यादिना॥ ६६॥

प्रकृतिदर्शनक्षणपर्यन्तं देहसद्भावः आवश्यकः, अन्यथा निष्क्रियेण निर्विकारेण पुरुषेण देहरहितेन कथं प्रकृतेर्दर्शनं, तच्चान्तिमक्षणे देहावस्थानं न सम्भवति, तत्त्वसाक्षात्कारसमकालमेव पुरुषस्य मुक्तत्वादित्याशङ्क्य सदेहस्य जीवन्मुक्तिं "तस्य तावदेव"इत्यादिश्रुतिप्रसिद्धामुपपादयति दृष्टान्तादिबलेन—"सम्यग्ज्ञान"इत्यादिना, तत्त्वसाक्षात्कारमहिम्ना "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन"इत्याद्युक्तदिशा धर्मादिसंसारनिमित्तानां प्रजननशक्तौ नाशितायां तेषां संसारकारणत्वाप्राप्तौ केवलमारब्धकर्मणां वर्तमानशरीरारम्भकाणां भोगमात्रेण क्षयस्य संभ-

---

१ उत्पन्ना विवेकख्यातिर्यस्यात्मनः स तथाविधः। २ तेनोत्पन्नविवेकख्यातिनाऽऽत्मना साकं नास्ति संसर्गो येषां तान्। ३ प्रकृतेरारम्भणीये सर्गे प्रवर्तकौ। ४ 'अत्र' इत्यस्य 'सर्गे' इत्यत्रान्वयः। अत्रेत्यस्य स्थानेऽथेति पाठान्तरं क्वचित्। ५ छान्दो० (६।१४।२)।

"धर्मादीनामकारणप्राप्तौ"=अकारणत्वप्राप्तावित्यर्थः । उत्पन्ने तत्त्वज्ञानेऽपि च "संस्कारवशात्तिष्ठति" यथोपरतेऽपि कुलालव्यापारे चक्रं वेगाख्य-संस्कारवशाद्भ्रमत्तिष्ठति, कालपरिपाकवशात्तूपरते संस्कारे निष्क्रियं भवति। शरीरस्थितौ च प्रारब्धकर्मपरिपाकौ धर्माधर्मसंस्कारौ भोगेन क्षेतव्यौ । तथा चानुश्रूयते-"भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते" इति, "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इति च । प्रक्षीयमाणाविद्याविशेषश्च संस्कारस्तद्वशात्तत्सामर्थ्याद्धृतशरीरस्तिष्ठति ॥ ६७ ॥

स्यादेतद्-यदि संस्कारविशेषाद्धृतशरीरः, तथापि कदास्य मोक्षो भविष्यति ? इत्यत आह—

**प्राप्ते शरीरभेदे चरितार्थत्वात्प्रधानविनिवृत्तेः ।**
**ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥ ६८ ॥**

अनारब्धविपाकानां तावत्कर्माशयानां तत्त्वज्ञानाग्निना बीजभावो दग्धः, प्रारब्धविपाकानां तूपभोगेन क्षये सति "प्राप्ते" शरीरस्य "भेदे"=विनाशे

---

वाद्दण्डवेगवशाद्दण्डनाशेऽपि किञ्चित्कालावस्थायिचक्रभ्रमणन्यायेन कियत्समय सशरीर एव पुरुषस्तिष्ठतीति तत्कृत प्रकृतिदर्शनेनुपपत्तिप्रदर्शनेन -दर्शनसाधनस्य शरीरस्य सद्भावात् ।

"क्लेशसलिलायाम्"इति, "अविद्याऽस्मितारागद्वेषाभिनिवेशा पञ्च क्लेशा"इति-योगसूत्रोक्ता अत्र क्लेशा ग्राह्या , "संस्कारवशाद्"इति, वर्तमानशरीरारम्भक कर्मभोगारम्भकाले तत्कर्मजन्य संस्कारोऽत्राभिप्रेत , तस्य किञ्चित्कालमनुवृत्तत्वाच्छरीरस्थिति , अस्य संस्कारस्य कालवशात्कुलालप्रहितदण्डजनितवेगस्येव स्वय निवृत्तिरित्याह-"कालपरिपाक"इत्यादि,"भोगेन त्वितरे" इति, ब्रह्मसूत्रमिद, न श्रुति , ततश्च "अनुश्रूयते" इत्यस्य श्रुतिमनुस्मर्यत इत्यर्थ । "तावदेव" इति तु श्रुति "भोगेन त्वितरे क्षपयित्वा संपद्यते" "इतरे=आरब्धकार्ये=पुण्यपापे न ज्ञानमात्रेण किन्तु भोगेन "क्षपयित्वा" कैवल्यभाजनं "संपद्यते," ज्ञानीति शेषः ॥ ६७ ॥

"तस्य तावदेव चिर यावन्न विमोक्ष्येऽथ सम्पत्स्य" इति छान्दोग्यश्रुति. प्रतिजानीते । स श्रुत्या प्रतिज्ञातो मोक्ष कदा भवति ? इत्याकाङ्क्षायां कारिकामाह-"प्राप्त" इति, आरब्ध-

---

१ वे० सू० ( ४।१।१८ )। "कैश्चिन्मन्त्राणामिव वेदत्व व्याख्यातं, कैश्चित्कल्पसूत्राणामपि" इति आपस्तम्बपरिभाषाया-"मन्त्रब्राह्मणयोर्वेदनामधेयम्" इत्यस्य व्याख्यावसरे हरदत्तेनोक्त रीत्या "छन्दोवत्सूत्राणि भवन्ति" इत्युक्तेश्चारोपित वेदत्वमिति चेदोमिति ब्रूम । २ तारानाथतर्कवाचस्पतिस्तु "भोगेन त्वितरे" इति मूलमनुपलभ्य प्रमादादिममस्यार्थमाह-"इतरे"=ज्ञानिन "भोगेन" प्रारब्धकर्माणि " क्षपयित्वा"=नाशयित्वा-समाप्येति यावत्, "अथ"=प्रारब्धक्षयानन्तर "सपद्यते"=बन्धशून्यतया कैवल्यभाजन "सपद्यते" इति, तत्र "इतरे" इति बहुवचनान्तपदवाच्यकर्तृणा "सम्पद्यत" इत्येकवचनान्तक्रियया कथमन्वय इति स एव देवानांप्रियः पण्डितम्मन्यो जानातु ।

"चरितार्थत्वात्"=कृतप्रयोजनत्वात्प्रधानस्य तं पुरुषं प्रति निवृत्तौ "ऐका-न्तिकम्"=अवश्यम्भावि, "आत्यन्तिकम्"—अविनाशीति—"उभयं कैवल्यं"=दुःखत्रयविगमं प्राप्नोति पुरुषः ॥ ६८ ॥

प्रमाणेनोपपादितेऽप्यत्यन्तश्रद्धोत्पादनाय परमर्षिपूर्वकत्वमाह—

पुरुषार्थज्ञानमिदं गुह्यं परमर्षिणा समाख्यातम्।
स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम् ॥ ६९ ॥

"गुह्यं"=गुहानिवासि, स्थूलधिया दुर्बोधमिति यावत्। "परमर्षिणा"=कपिलेन। तामेव श्रद्धामागमिकत्वेन द्रढयति–"स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूताना" "यत्र"=ज्ञाने=यदर्थ-यथा–"चर्मणि द्वीपिनं हन्ति" इति। "भूतानां"=प्राणिना "स्थित्युत्पत्तिप्रलयाः" आगमैः "चिन्त्यन्ते" ॥६९॥

---

भोगेन कर्मणोत्पादितस्य शरीरस्य "भेदे"=नाशे जाते ज्ञानाग्निनानारब्धाना सर्वेषां कर्मणां दग्धत्वादुपभोगेन चारब्धकर्मणां क्षयादपवर्गसिद्धौ भविष्यद्भोगस्यासंभवाद्भोगापवर्गमात्रफला-यास्तत्फलद्वये प्रसूतेऽनवशिष्टप्रयोजनान्तराया प्रकृतेर्विनिवृत्तौ परमपुरुषार्थं पुरुष प्राप्नोति, एवं प्राप्तस्य कैवल्यस्यावश्यभाव्यत्व ज्ञानिनो, न च तस्य पुनरावृत्तिरित्याह–"आत्यन्तिकम्" इत्यादिना ॥ ६८ ॥

ईश्वरकृष्णो न महर्षि किन्तु प्राकृतो विद्वानिति तदुक्तौ न्यायपरिपुष्टायामपि तर्काप्रतिष्ठा नादबहुमान स्यादृषिवाक्ये श्रद्धावतामित्यस्य शास्त्रस्य परमर्षिपूर्वकत्वमाह–"पुरुषार्थ" इति, श्रुतिरपि कपिलस्य परमर्षिता प्रख्यापयति श्वेताश्वतरैराम्नाता–"ऋषिं प्रसूत कपिल यस्तमग्रे ज्ञानैर्बिभर्ति जायमान च पश्येद्" ... "समाख्यात"=सुखत आदरये समुपदिष्ट न तु तन्त्र-रूपेणोपनिबद्धमित्यनेन सूचित, ... आचार्यप्रणीतात्षष्टितन्त्रनामकान्निबन्धात्पूर्वं साङ्ख्य-निबन्धो नासीदिति सूचित, ... ति प्रचलिताना साङ्ख्यसूत्राणा न कपिलप्रणीतत्वमिति प्रतिभाति। अत एवैषु सूत्रेषु ... विवेकनिमित्तो वा पञ्चशिख "इत्यादौ कपिलादर्वाचीनानां प्राकृताचार्याणामपि नामानि दृश्यन्ते, सूत्राणि श्रीमच्छङ्करभगवत्पादाना समयेऽपि नासन्, अन्यथा दर्शनान्तरमतप्रस्तावेषु जैमिनिगौतमकणादपतञ्जलिसूत्राण्युदाहरन्कथ कपिलसूत्राण्य-पहाय स साङ्ख्यकारिका एवोदाहृतवान्, वाचस्पते कालेऽपि सूत्राणामनवस्थिति, अन्य-थाऽनेन षड्दर्शनव्याख्याकृता कथ न सूत्राणि तद्भाष्यं वा व्याख्यात ? कथ पञ्चशिखवार्षगण्या-दीना लेखास्तत्रतत्र निर्दिशन् वाचस्पतिमिश्र कपिलस्य न कमपि लेखमुद्धृतवान् ? तथा च सूत्राणा नवमशतकोद्भूताद्वाचस्पतिमिश्रादप्यवाचीनत्वम् ॥ ६९ ॥

---

१ वे० सू० (२।१।११)—"तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्ग" इति।
२ सां० सू० (६।६८) न्यायसूचीनिबन्धे वाचस्पतिमिश्रेण स्वसमय स्वय निर्दिष्ट —"न्याय-सूचीनिबन्धोऽयमकारि सुधिया मुदे। श्रीवाचस्पतिमिश्रेण वस्वङ्क (८९८) वसुवत्सरे" इति।

स्यादेतद्-यत्परमर्षिणा साक्षात्कथितं तच्छ्रद्दधीमहि, यत्पुनरीश्वरकृष्णेन कथितं तत्र कुतः श्रद्धा? इत्यत आह—

एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ ।
आसुरिरपि पञ्चशिखाय तेन बहुधा कृतं तन्त्रम् ॥ ७० ॥

"एतत्पवित्र"=पावनं=दुःखत्रयहेतोः पाप्मनः पुनातीति, "अग्र्यं"=सर्वेभ्यः पवित्रेभ्यो मुख्यम्। "मुनिः"=कपिलः "आसुरयेऽनुकम्पया प्रददौ, आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतं तन्त्रम्" ॥ ७० ॥

शिष्यपरम्परयाऽऽगतमीश्वरकृष्णेन चैतदार्याभिः ।
संक्षिप्तमार्यमतिना सम्यग्विज्ञाय सिद्धान्तम् ॥ ७१ ॥

आराद् याता तत्त्वेभ्य इत्यार्या, आर्या मतिर्यस्य सोऽयमार्यमतिरिति॥७१॥

तच्च शास्त्रं—सकलशास्त्रार्थसूचकत्वान्न तु प्रकरणमित्याह—

सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य ।
आख्यायिकाविरहिताः परवादविवर्जिताश्चापि ॥ ७२ ॥

तथा च राजवार्तिकम्—

"प्रधानास्तित्वमेकत्वमर्थवत्त्वमथान्यता ।
पारार्थ्यं च तथानैक्यं वियोगो योग एव च ॥
शेषवृत्तिरकर्तृत्वं मौलिकार्थाः स्मृता दश ।

---

"एतत्"=साङ्ख्यशास्त्र न पुन कारिकासदृशानुए[illegible] "मुनये शिष्याय तस्य चासुरये" इत्युक्तत्वादासुरेरपि मुनित्वम्, आसुरेश्च शिष्य "पञ्चशिख[illegible] एव षष्टितन्त्रप्रणेता, पञ्चशिख-प्रबन्धानामतिविस्तृतत्वात्कारिकाणा च यथावत्तदर्थाना १ इति [illegible] प्रतिपादनादासामेव साङ्ख्य-मूलग्रन्थत्व सङ्गतम्, अस्या कारिकाया "पञ्चशिखाय ते [illegible] इत्यत्रो यतिर्न मनोरमेति यति-भङ्गो दोष ॥ ७० ॥ ७१ ॥

"बहुत्वम्"=आनैक्यशब्दवाच्यम्, "स्थिति"=शेषवृत्ति[illegible]वाच्या, ग्रन्थान्तरे षष्टि-पदार्थी यथा—

"पुरुष प्रकृतिर्बुद्धिरहङ्कारो गुणास्त्रय ।
तन्मात्रमिन्द्रिय भूत मौलिकार्थाः स्मृता दश ॥

---

१ पञ्चशिखस्य तन्त्रेषु प्रतिपादित कापिल शास्त्र शिष्यपरम्परया पञ्चशिखादतितरमर्वाचीने-नेश्वरकृष्णेन स्वगुरुभ्योऽप्रकाशितनामधेयेभ्यो लब्ध्वा सप्तत्यार्याभि सक्षिप्तम्। २ नाद्याप्यु-पलब्धोऽय निबन्धो, वाचस्पतिना तु दृष्ट इति कौमुदीतोऽवसीयते।